THE

# SIDDHÂNTA KAUMUDÎ

OF

SRI BHATTOJI DEEKSHITA

WITH THE COMMENTARY

# SRI BALAMANORAMA

OF

SRI VASUDEVA DEEKSHITA.



## UTTARÂRDHAM.



EDITED AND PUBLISHED

BY

S. CHANDRASEKHARA SASTRIGAL,

TEPPAKULAM.

Trichinopoly:

PRINTED BY BR. JOSEPH S.J., SUPDT.,

ST. JOSEPH'S INDUSTRIAL SCHOOL PRESS.

1911.

॥ श्रीरस्तु ॥

# ॥ सिद्धान्तकौमुदी ॥

श्रीमद्भट्टोजिदीक्षितविरचिता

## ॥ उत्तरार्धम् ॥

श्रीमद्वासुदेवदीक्षितप्रणीतया

# श्रीबालमनोरमाख्यया

व्याख्यया समुद्भासिता ।



त्रिशिरःपुरवास्तव्येन

**आदनूर शं. चन्द्रशेखरशास्त्रिणा**

संशोध्य प्रकाशिता ।

१०६१.

॥ श्रीरस्तु ॥

# ॥ उपोद्घातः ॥

इह खलु निखिलकुवलयवलमानविद्वज्जनप्रथमपरिशीलितानां भाषावधूभावजिघ्राणां वाचां व्याकृतिमन्तरा तनुभृतामसुप्रतरविवरतया प्रथममस्याः परिशीलनमिति सर्वजनीनम् । तत्र च गताः काशिकावृत्तिप्रासादप्रक्रियाकौमुद्यादयो विरलविरलदृष्टाः । अत इदं त्रिमुनितन्त्रमध्यवसातुमध्वानमभिजिगमिषूणामयनमन्तरा सिद्धान्तकौमुद्या न किमपि । तत्र प्रौढमनोरमाशब्दरत्नशेखरकौस्तुभादिबहुविधकृतिकर्मपरिष्कर्मितमपि सौलभ्येन तदधिगमनमुपलिप्सूनामनतिप्रौढमनसामामतिसुकुमारधिया च अनायासमवबोधयितुमनलम् ॥

अलम्भविष्णु स्त इदानीं सरलतरं तत्त्वबोधिनीबालमनोरमे एव । ययोः किल प्राचीकटन प्रथमां प्रवचनलिखितपठितप्रचारितकादिभिः प्रथम एव नः प्रायोगिकाः प्राक्रियिकाः प्रवक्तारश्च । हन्त! बहुचिराध्युषिततया वृद्धपरिपाटीमाटीकमानामपि तामनन्यामिवानुलालयन्त एव ततोऽपि अतिसरलपदन्यासामभिव्यक्तमधुरवागाकृताम् अतिरुचिरवर्णाम् आहितसुविशदप्रक्रियाम् अधिकौमुदि अखिलसहृदयाह्लादिनीमिमां बालमनोरमाम् उत्स्वप्रायितवर्त्मनापि नाधिगमयाञ्चक्रिरे शिव शिव! तत्रशाब्दिकाः केऽपि । अहह! कालोऽयमगीर्वाणवाणीविलासीयः, अवसरोऽयमनतिकठिनग्रन्थनिर्मन्थनीयः, आस्थेदानीमधिजिगमिषूणामप्यनायासमापाततः प्रतीतिसाधनीयैवेति । अस्मिन्महत्यवर्णनीये अनिर्वर्णनीये अनाकर्णनीये च दुरवधिनि दुःखतौर्यत्रिके देववाग्देवदारिकायाः प्रक्रियाः क, प्रकृतयः क, धातवः क, भावाः क, पदव्यवस्थाः केति सर्वतश्शिथिलशिथिलेष्वितिवृत्तेषु, पठितृषु पाठयितृषु

परीक्षकेषु प्रतिभूषु च प्रथितमहागिरिगुरुबुद्धिषु प्रायशो महाशयेषु व्याख्यो-डुपं विना वाचमुत्तरीतुमनलम्भूष्णुषु, वर्णशः पदशो वाक्यशश्च व्याख्याना-न्यवश्यङ्करणीयानीति भवितव्यतायां च भुवनमनु भाविनायां जगदुपकर्तु-मना मनोरमेयं बालानामिति स्वनिगदव्याख्यातस्वविभवां **बालमनोरमां** **वासुदेवाध्वरी** व्यररचत् । तदियं न केवलमारुरुक्षनामध्वानमाम्नाय-समाम्नायिकमाम्नायभाषापदप्रक्रियाणामुपकारिका परमव्युत्पन्नभाष्यप्रदीपोद्द्यो-तविवरणमञ्जूषाभूषणसारवाक्यपदीयानामपि परमोपकारिणीति निश्चप्रचम् ॥

एष च वासुदेवाध्वरी तञ्जौरनगरमहाराष्ट्रमहीपतिमालभार्यशाहजी-प्रभृतिपञ्चपुरुषीपोष्यप्रवृत्तिरासीदधिश्रीवशवटारण्यगोविन्दपुराधिकरणमाभि-नवतिपञ्चवत्सर इति कर्णाकर्णिकया तत्प्रबन्धपरिसमाप्तिपर्यायप्रपर्यालिङ्गितग्रन्थाग्र साधकतद्विरुदापदानवैखरीमौखरीतश्च सुविशदमधिगम्यते । सर्वथाप्येष दक्षिणा हि चिदम्बरादुत्तरा च तञ्जौरादास्त कश्चिद्दक्षिणतमो वाग्मी। वस्तुतश्च पद-प्रमाणतन्त्रयोः क्रैस्तहायनीयाष्टादशशतकचरमपादकालिक इति चतुरस्रम् । अस्य च ग्रन्थस्य प्रचिचारयिषा परं प्रथितयशसां प्रभूणां प्रौढवचसां प्रकटनपराय-णानां पण्डितानाञ्च तत इतश्च मुहुर्मुहुरुदयमस्तमयञ्च लभमाना क्वचि-च्छिरोमात्रम्, क्वचिदुरोवधि, क्वचिदुदरान्तं च प्रदर्श्य प्रदर्श्य प्रगाढं प्रगाढं “प्रकटिता बालमनोरमा प्रकटिता बालमनोरमा” इति प्रघोषपरम्परामपि प्रत्यक्षमध्यैक्ष्यत । तदियङ्कथञ्चिदखिलभुवनालोकनाय समग्रमाविर्भावेन सन्निधापयितव्येति श्रद्धाय परमहमसमृद्धोपकरणोऽपि बद्धादरमद्धात्र प्रायतम् । अहो! बत! बहोः कालादुपक्रान्तापि सेयं बालमनोरमा पिपीलिका-प्रौढशिखराधिरोहन्यायेन मन्दंमन्दमवसानवचनरचनावसम्पन्नेनामधिरोहन्ती सन्तन्तनीति सन्तोषिणम्मामधुनैव संपरिणतफलं सस्यमिव संव्यवसायि-नम् । अत्र चेत्थमनुमोमुदति मुदितमनसः मानितपदनयप्रबन्धप्रकटनप्र-क्रियाः मान्यमानाद्यष्टादशाधिकशतप्रबन्धकृतोऽभिनवदवनपुरकुंभघोणाभिजनाः भट्टश्रीबालसरस्वतीनारायणशास्त्रिमहाशयाः ॥—तद्यथा

न हि शब्दरत्नकौस्तुभशेखरसुभगीकृतापि सा प्रौढा ।
कुरुते कौसुद्यामिह कुतुकं बाला मनोरमैकैव ॥

अत्र च एतत्प्रकटनसाह्यकर्तृणाम् अन्तरान्तरा मातृकाप्रदानलेखावधानप्रकटनाप्रख्यापनादिद्वारा भृशमुपकारिणाम् अनसूयूनाम् अनहंयूनाम् अनशुभंयूनाम् अवदातधियाम् अनुवारम् अनुसन्ध्यम् अयुतशः प्रणामाः प्रतायन्ते प्रह्वशिरोवाङ्मनसेन मया ॥

अत्र च सर्वथा प्राधान्यं वहन्ति त्रिशिरःपुरस्थसेण्ट्जोसफाख्याङ्गलकलामहापाठालये गैर्वाण्यध्यापकपदमधितिष्ठन्तः सारस्वतसारज्ञाः श्रीमन्तः तट्टै वाधूलश्रीनिवाससूरयो महाभागाः । येषां च साहाय्येन मदीयमिदं बालमनोरमामुद्रणं प्रचलति स्मेति सन्तोषमभिधीयते । महेन्द्रमङ्गलम् आर्यब्रह्मश्रीमत्कृष्णशास्त्रिणां परिशोधनकर्मसहभावमतीव स्मरामि। परमत्र प्रख्यापनपथे सर्वथा समग्रसुव्यक्तलिपिसक्तमनोरमबालमनोरमामातृकाप्रेषकः परमरमणीयगुणाभोगराजमानः प्रसिद्धतञ्जौरनगरनिवासी आर्यश्रीत्यागराजस्वामी सर्वथा न विस्मरणीय इति तन्नाम नस्सौप्रभातिकमिति समञ्जसम् । अंशांशशश्च मातृका असमग्रा व्यक्ताव्यक्ताः खिलाखिला अपि सम्प्रदर्शितेन सहृदयहृदयसाधारणेन संप्रेष्य यथाशक्ति साह्यं कृतवतां कार्यसंसिद्धिञ्च प्रतीक्षितवताम् अनृशंसमनसाम् आत्मवदग्रगण्यानाम् , श्रीचिदम्बरम् आर्यब्रह्मश्रीमद्दण्डपाणिस्वामिदीक्षित, चिदम्बरम् आर्यब्रह्मश्रीमद्धरिहरशास्त्रि, तिरुवेन्दुरै आर्यब्रह्मश्रीमदखिलाण्डनारायणदीक्षित, नेरळन्दूर् आर्यब्रह्मश्रीमद्वेदसुब्रह्मण्यशास्त्रि, श्रीनिवासनल्लूर् आर्यब्रह्मश्रीमत्सुन्दरशास्त्रि, नल्लूर् आर्यब्रह्मश्रीमत्कल्याणसुन्दरशास्त्रि, नाञ्जूर् आर्यब्रह्मश्रीमत्कुप्पुस्वामिशास्त्रि, कुम्भघोणं आर्यब्रह्मश्रीमत्सुन्दरशास्त्रिप्रभृतीनाम् अयत्नं अभ्यन्तरङ्गं अनवरतं अस्मि स्मरन्नधिकमुपकारम् । इमं दुष्करमेतादृशमहाकार्यनिर्वाहं प्रतिज्ञाय यथाप्रतिज्ञातमतीव स्नेहेन अनुरोधेन च निर्वर्तितवतः सेण्ट् जोसफ्स् इण्डस्ट्रियल् स्कूल् मुद्राशालाध्यक्षस्य महानुपकारः स्मरणीयः ॥

अन्ते च पञ्चनदस्थराजकीयसंस्कृतमहाकलाशालाप्रथमपण्डितानामभिनवभट्टबाणशब्दनकालङ्कारविद्याभूषणविरुदभाजां वात्स्यचक्रवर्तिनां श्रीकृष्णमाचार्याणामपि कृदन्तप्रकरणादारभ्य परिशोधनोपकारं नाहं विस्मर्तुं प्रभवामि॥

अयि विद्वन्मणयः अतिविस्तृतैतद्ग्रन्थमुद्रणस्य प्रथमप्रवृत्ततया दाक्षिणात्यानेकमहनीयकोशस्थपाठैः विद्वन्मणिसाहाय्येन यथामति सुरक्षितेऽपि परिशोधने मानुषभावसुलभात् दृष्टिदोषात् प्रमादात् बुद्धिभ्रमाद्वा समुपजातानां स्खलितानां प्रबोधनेनानुगृह्णन्तु सहृदयाः माम् । येनाहं यतिष्ये द्वितीयमुद्रणं तद्विशुद्धये इति सशिरःप्रणाममभ्यर्थये इति सर्वतः शिवम् ॥

त्रिचिनाप्पल्लि,
तेप्पक्कुलम्,
७–८–१९११.

शं. चन्द्रशेखरशास्त्री,
एडिटर्.

## ॥ कौमुद्युत्तरार्धप्रतिविषयानुक्रमणिका ॥


| प्रकरणम् | पार्श्वम् |
|---|---|
| १. तिङन्तभ्वादिप्रकरणम् | ३ |
| २. तिङन्तादादिप्रकरणम् | १८० |
| ३. तिङन्तजुहोत्यादिप्रकरणम् | २२० |
| ४. तिङन्तदिवादिप्रकरणम् | २३२ |
| ५. तिङन्तस्वादिप्रकरणम् | २४९ |
| ६. तिङन्ततुदादिप्रकरणम् | २५५ |
| ७. तिङन्तरुधादिप्रकरणम् | २६७ |
| ८. तिङन्ततनादिप्रकरणम् | २७२ |
| ९. तिङन्तक्र्यादिप्रकरणम् | २७७ |
| १०. तिङन्तचुरादिप्रकरणम् | २८४ |
| ११. तिङन्तणिच्प्रकरणम् | ३११ |
| १२. तिङन्तसन्प्रकरणम् | ३२६ |
| १३. तिङन्तयङ्प्रकरणम् | ३४१ |
| १४. तिङन्तयङ्लुक्प्रकरणम् | ३४९ |
| १५. तिङन्तनामधातुप्रकरणम् | ३६८ |
| १६. तिङन्तकण्ड्वादिप्रकरणम् | ३९३ |
| १७. तिङन्तप्रत्ययमालाप्रकरणम् | ३९५ |
| १८. तिङन्तात्मनेपदप्रकरणम् | ३९७ |
| १९. तिङन्तपरस्मैपदप्रकरणम् | ४२४ |
| २०. भावकर्मतिङ्प्रकरणम् | ४२९ |
| २१. कर्मकर्तृतिङ्प्रकरणम् | ४४३ |
| २२. लकारार्थप्रकरणम् | ४५४ |
| *२३. कृदन्तकृत्यप्रकरणम् | ४७५ |
| २४. पूर्वकृदन्तप्रकरणम् | ४९५ |


* एतत्प्रकरणात्पूर्वमेव लकारार्थप्रक्रियायां ५६३ इत्येतदारभ्य ५८० इत्येतत्पर्यन्तमङ्काः ४६३—४८० इति मन्तव्याः ।

| प्रकरणम् | पाङ्कम् |
|---|---|
| २५. उणादयः | ५७८ |
| २६. उत्तरकृदन्तप्रकरणम् | ६६३ |
| २७. वैदिकप्रकरणम् | ७२१ |
| २८. स्वरप्रकरणम् | ७३[illegible] |
| २९. फिट्सूत्राणि | ७८३ |
| ३०. लिङ्गानुशासनप्रकरणम् | ७९[illegible] |

सूचिकाः

| | |
|---|---|
| १. पाणिनीयसूत्रसूचिका: | ७७[illegible] |
| २. वार्तिकसूचिका: | ८०२ |
| ३. परिभाषासूचिका: | ८०३ |
| ४. उणादिसूत्रसूचिका: | ८०४ |
| ५. फिट्सूत्रसूचिका: | ८२[illegible] |
| ६. धातुसूचिका: | ८२२ |
| ७. सौत्रधातुसूचिका: | ८२३ |

॥ श्रीगुरुचरणारविन्दाभ्यां नमः ॥

सिद्धान्तकौमुदीसहिता

# ॥ बालमनोरमा ॥

येनाक्षरसमाम्नायमधिगम्य महेश्वरात् ।
कृत्स्नं व्याकरणं प्रोक्तं तस्मै पाणिनये नमः ॥ १ ॥
येन धौता गिरः पुंसां विमलैश्शब्दवारिभिः ।
तमश्चाज्ञानजं भिन्नं तस्मै पाणिनये नमः ॥ २ ॥
वाक्यकारं वररुचिं भाष्यकारं पतञ्जलिम् ।
पाणिनिं सूत्रकारं च प्रणतोऽस्मि मुनित्रयम् ॥ ३ ॥
श्रौत्रार्हन्तीचरणैर्गुण्यैर्महर्षिभिरहर्दिवम् ।
तोष्टूयमानोऽप्यगुणो विभुर्विजयतेतराम् ॥ ४ ॥

अस्तु नमः पाणिनये भूयो मुनये तथास्तु वररुचये ।
किञ्चास्तु पतञ्जलये शब्दब्रह्मात्मने च धूर्जटये ॥ १ ॥
व्याख्याता बहुभिः प्रौढैरेषा सिद्धान्तकौमुदी ।
वासुदेवस्तु तद्व्याख्यां वष्टि बालमनोरमाम् ॥ २ ॥

मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि च शास्त्राणि प्रथन्ते वीरपुरुषाणि भवन्त्यायुष्मत्पुरुषाणि चाध्येतारश्च मङ्गलयुक्ताः स्युरिति भाष्यप्रमाणकं ग्रन्थमध्ये विघ्नविघातादिप्रयोजनाय कृतं मङ्गलं शिष्यशिक्षार्थं ग्रन्थतो निबध्नाति । श्रौत्रेति ॥ वेदाध्येता श्रोत्रियः । श्रोत्रियञ्छन्दोऽधीत इति वेदपर्यायात् छन्दश्शब्दात् द्वितीयान्तादधीत इत्यर्थे घन्प्रत्ययः । प्रकृतेः श्रोत्रादेशश्च निपातितः । श्रोत्रियस्य भावः श्रौत्रम् । श्रोत्रियस्य यलोपश्चेत्यणि इकारादुत्तरस्य

**पूर्वार्धे कथितास्तुर्यपञ्चमाद्ध्यायवर्तिनः ।**
**प्रत्यया अथ कथ्यन्ते तृतीयाद्ध्यायगोचराः ॥ ५ ॥**

---

यकाराकारसंघातस्य लोपे इकारस्य यस्येतिचेति लोपः । अर्हन्ति आर्याः प्रशस्यमानाः वेदविहितकर्मसु योग्यो भवतीत्यर्हन् । अर्हः प्रशंसायामिति शतृप्रत्ययः । अर्हतो भाव आर्हन्ती अर्हतो नुम्चेति ष्यञि आदिवृद्धौ प्रकृतेर्नुमागमे [illegible] तस्येति यकारलोपे यस्येतिचेत्यकारलोपः । स्त्रीत्वं लोकात् । श्रौतश्च आर्हन्ती च [illegible] । ताभ्यां वित्ताः श्रौतार्हन्तीचणाः । तैरिति विग्रहः । तेन [illegible] वेदाध्येतृत्वेन वेदविहितकर्मयोग्यतया च प्रसिद्धैरिति यावत् । **गुण्यैरिति** ॥ [illegible] वस्तुविवेकः, इहामुत्रार्थफलभोगविरागः, शमदमादिसम्पत्तिः, मुमुक्षुत्वं, [illegible] रित्यर्थः । रूपादाहतप्रशंसयोरिति सूत्रे अन्येभ्योऽपि दृश्यत इति [illegible] तद्भाष्ये गुण्या ब्राह्मणा इत्युदाहरणात् । **महर्षिभिरिति** ॥ [illegible] कर्मधारयः । आन्महत इत्यात्वम् । अतितपस्विभिरित्यर्थः । **अहर्निशमिति** ॥ [illegible] दिवाचेति वीप्सायां अचतुरेत्यादिना द्वन्द्वो निपातितः । अहन्यहनीत्यर्थः । **तोष्टूयमानोऽपीति** ॥ ष्टुञ् स्तुतौ, सकर्मकः, गुणवत्त्वेनाभिधानं स्तुतिः । [illegible] रूपितं कर्मत्वमादाय देवान् स्तौतीत्यादौ द्वितीया । न तु गुणाभिधानमेव [illegible] तथा सति गुणस्य धात्वर्थोपसंगृहीतत्वेनाकर्मकत्वापत्तेः । [illegible] सकारे षत्वनिवृत्तौ धातोरेकाच इति भृशार्थे यङि अकृत्सार्वधातुकयोरिति [illegible] द्वित्वे शर्पूर्वाः खय इति सकारस्याभ्यासगतस्य लोपे गुणो यङ्लुकोरित्यभ्यासोकारस्य [illegible] परस्य सस्य आदेशप्रत्यययोरिति षत्वे ष्टुत्वेन तकारस्य टकारे तोष्टूयेति [illegible] इति धातुसंज्ञकात् कर्मणि लटश्शानचि आनेमुगिति मुगागमे [illegible] यङोऽकारस्य अतो लोप इति लोपे तोष्टूयमान इति रूपम् । भृशं [illegible] अचिन्त्यजगद्रचनाद्यनन्तगुणसम्पन्नतया भृशं सङ्कीर्त्यमानोऽपीति यावत् । **अगुण इति** ॥ निर्गुण इत्यर्थः । साक्षी चेता केवलो निर्गुणश्चेत्यादिश्रुतेरिति भावः । निर्गुणस्य गुणवत्त्वेन कथनात्मिका स्तुतिर्विरुद्धेत्यापातप्रतिपन्नं विरोधमपिशब्दो द्योतयति । गुणानां [illegible] त्वेऽपि पारमार्थिकत्वाभावान्न विरोध इत्युत्तरमीमांसायां स्पष्टम् । **विभुरिति** ॥ [illegible] परमेश्वर इत्यर्थः । **विजयतेतरामिति** ॥ जिजये अकर्मकः । उत्कर्षेण वर्तनं जयः । विपराभ्याञ्जेरित्यात्मनेपदम् । तिङश्चेत्यतिशायने तरप् । किमेत्तिङव्ययेति तरबन्तात् स्वार्थे आम्प्रत्ययः । 'तद्धितश्चासर्वविभक्ति' रित्यत्र तसिलादिषु परिगणनादामन्तमव्ययम् । सर्वोत्कर्षेण वर्तत इत्यर्थः । न च विजयत इति समुदायस्यातिङन्तत्वात् कथन्ततस्तरबिति वाच्यम् । वि इति हि भिन्नं पदम् । तिङन्तोत्तरपदसमासस्य छन्दोमात्रविषयत्वात् । ततश्च जयत इत्यस्मादेव तरप् । न च जयत इत्यस्य विपराभ्याञ्जेरिति कृतात्मनेपदस्य विशब्दसापेक्षत्वादसामर्थ्यं शङ्क्यम् । वीत्युपसर्गस्य द्योतकत्वेन पृथगर्थविहीनतया तत्सापेक्षत्वाभावात् तिङन्तस्य प्रधानतया तस्य विशब्दापेक्षत्वेऽपि बाधकाभावाच्चेत्यलम् ॥

वृत्तकथनपूर्वकं वर्तिष्यमाणनिरूपणं प्रतिजानीते । **पूर्वार्धे इति** ॥ तुर्यश्चतुर्थः । चतुर-

# अथ तिङन्तभ्वादिप्रकरणम् ।

तत्रादौ दश लकाराः प्रदर्श्यन्ते । लट् । लिट् । लुट् । लृट् । लेट् । लोट् । लङ् । लिङ् । लुङ् । लृङ् । एषु पञ्चमो लकारश्छन्दोमात्रगोचरः ।

## २१५१ । वर्तमाने लट् । (३-२-१२३)

वर्तमानक्रियावृत्तेर्धातोर्लट् स्यात् । अटावितौ ।

## २१५२ । लः कर्मणि च भावे चाकर्मकेभ्यः । (३-४-६९)

लकाराः सकर्मकेभ्यः कर्मणि कर्तरि च स्युरकर्मकेभ्यो भावे कर्तरि च ।

[illegible] चतुर्थ्याद्यध्यायप्रत्ययः । प्रकृतेऽकारोकारस्यानन्त्योपश्च । पूर्वार्धे चतुर्थपञ्चमाध्यायवर्तिनः प्रत्ययाः कथिता इत्यन्वयः । [illegible] प्रत्यय[illegible] इति भावः । अर्थेति ॥ चतुर्थपञ्चमाद्यध्यायवर्तिप्रत्ययनिरूपणानन्तरं तृतीयाध्यायगोचराः प्रत्ययाः कथ्यन्त इत्यन्वयः । तृतीयाद्यध्यायस्य गोचराः प्रतिपाद्यतया विषयाः तृतीयाध्यायप्रतिपादिता इति यावत् । कृत्सु णमुः स्त्रियामक्तिन्यादितद्धितव्युत्पादनन्तु प्रासङ्गिकमिति भावः ॥ १ ॥

तत्रेति ॥ [illegible] । तेषु तृतीयाद्यध्यायवर्तिप्रत्ययेष्वित्यर्थः । दशेति ॥ [illegible] इति भावः । पञ्चम इति ॥ लेडित्यर्थः । छन्दोमात्रेति ॥ [illegible] छन्दसि लुङ्लङ्लिटः, इति पूर्वसूत्रात् छन्दसीत्यनुवृत्तेरिति भावः । एतेन [illegible] इति शङ्का निरस्ता । वर्तमान इति ॥ धातोरिति सूत्रमातृतीयाध्यायसमाप्तेरधिकृतम् । वर्तमान इति तत्राम्वेति । वर्तमानेऽर्थे विद्यमानाद्धातोः लडिति लभ्यते । [illegible] । वर्तमानक्रियावृत्तेरिति ॥ धात्वर्थक्रियाया वर्तमानत्वन्तु अतीतानागतभिन्नकालवृत्तित्वम् । कालस्य तु वर्तमानत्वं अतीतानागतभिन्नकालत्वम् । भूतभविष्यतोः प्रतिद्वन्द्वी वर्तमानः काल इति भाष्यम् । वर्तमानत्वम् न प्रत्ययार्थभूतकर्त्रादिविशेषणम् । अतीतपाकादिक्रिये कर्तरि पचति इत्यापत्तेः । किन्तु धात्वर्थविशेषणमेव वर्तमानत्वम् । लट् तु तस्य द्योतक एव । अटावितावीति ॥ न च अकार उच्चारणार्थ एवास्त्विति वाच्यम् । लिडादिवैलक्षण्याय तस्यावश्यकत्वात् । तथाच तस्य इत्संज्ञां विना निवृत्त्युपायाभावात् इत्संज्ञैवादर्तव्येति भावः । लः कर्मणीति ॥ वाक्यद्वयमिदं सूत्रम् । लः कर्मणि चेति प्रथमं वाक्यम् । ल इति प्रथमाबहुवचनान्तं । चकारेण कर्तरि कृदित्यतः कर्तरीत्यनुकृष्यते । धातोरित्यधिकृतम् । लकाराः कर्मणि कर्तरि च [illegible] इति लभ्यते । सकर्मकधातुविषयमेवेदम् । अकर्मकेषु कर्मणीत्यस्य बाधि-

## २१५३ । लस्य । (३-४-७७)

अधिकारोऽयम् ।

## २१५४ । तिप्तस्झिसिप्थस्थमिब्वस्मस्तातांझथासाथांध्वमिड्वहि-महिङ् । (३-४-७८)

एतेऽष्टादश लादेशाः स्युः ।

## २१५५ । लः परस्मैपदम् । (१-४-९९)

लादेशाः परस्मैपदसंज्ञाः स्युः ।

## २१५६ । तङानावात्मनेपदम् । (१-४-१००)

तङ् प्रत्याहारः शानच्कानचौ चैतत्संज्ञाः स्युः । पूर्वसंज्ञापवादः ।

---

तत्वात् । तदाह । **लकारास्सकर्मकेभ्यो धातुभ्यः कर्मणि कर्तरि च स्युरिति** ॥ एवञ्च सकर्मकेभ्यो भावे लकारा न भवन्ति । सकर्मकेभ्योऽपि भावलकारप्रवृत्तौ तु देवदत्तेन घटं क्रियत इत्यादौ भावलकारेण कर्मणोऽनभिहितत्वात् द्वितीया स्यादिति भावः । भावे चाकर्मकेभ्य इति द्वितीयं वाक्यम् । अत्रापि चकारेण कर्तैवानुकृष्यते । न तु कर्म । असम्भवात् । तदाह । **अकर्मकेभ्यो भावे कर्तरि चेति** ॥ अत्राकर्मकग्रहणेन अविवक्षितकर्मका अपि गृह्यन्ते । तेन देवदत्तेन भुज्यत इत्यत्र सतोऽप्योदनरूपकर्मणः अविवक्षायां भावे लकारोऽस्त्येवेत्यन्यत्र विस्तरः । **लस्येति** ॥ धातोरित्यधिकृतम् । अकारो न विवक्षितः । तेन लिडादीनामपि संग्रहः । चूडाल इत्यादौ च नातिप्रसङ्गः । **तिप्तसिति** ॥ तिप्, तस्, झि, सिप्, थस्, थ, मिप्, वस, मस्, त, आताम्, झ, थास्, आथाम्, ध्वम्, इट्, वहि, महिङ् । एषां समाहारद्वन्द्वात् प्रथमैकवचनम् । लस्येति स्थानषष्ठ्यन्तमधिकृतम् । तेन आदेश इति लभ्यते । फलितमाह । **एत इति** ॥ तसादौ रुत्वाभाव आर्षः । तिबादौ पकारानुबन्धप्रयोजनन्तु द्वेष्टीत्यादौ सार्वधातुकमपिदिति ङित्वनिवृत्त्यर्थम् । तदुदाहरणेषु स्पष्टीभविष्यति । **ल इति** ॥ ल इति स्थानषष्ठी । आदेश इत्यध्याहार्यम् । तदाह । **लादेशा इति** । **तङिति** ॥ तङ्च आनश्चेति द्वन्द्वः । **प्रत्याहार इति** ॥ त आतामिति तशब्दमारभ्य महिङिति ङकारेणेति शेषः । तदाह । **तादिनवकमिति** ॥ इह पूर्वसूत्राल्ल इत्यनुवर्तते । ततश्च आनग्रहणेन शानच्कानचावेव गृह्येते । न तु ताच्छील्यवयोवचनशक्तिषु चानशिति विहितश्चानशपि । तस्य लादेशत्वाभावात् । तेन परस्मैपदिभ्योऽपि चानश् सिद्ध्यति । निघ्नाना इत्यादौ । तदाह । **शानच् कानचौ चेति** । **एतत्संज्ञा इति** ॥ आत्मनेपदसंज्ञाका इत्यर्थः । **पूर्वसंज्ञेति** ॥ परस्मैपदसंज्ञापवाद इत्यर्थः । एवञ्च तिबादिनवके परस्मैपदसंज्ञा

२१५७। अनुदात्तङित आत्मनेपदम्। (१-३-१२)

अनुदात्तेत उपदेशे योङित्तदन्ताच्च धातोर्लस्य स्थान आत्मनेपदं स्यात्।

२१५८। स्वरितञितः कर्त्रभिप्राये क्रियाफले। (१-३-७८)

स्वरितेतो ञितश्च धातोरात्मनेपदं स्यात्कर्तृगामिनि क्रियाफले।

२१५९। शेषात्कर्तरि परस्मैपदम्। (१-३-७९)

आत्मनेपदनिमित्तहीनाद्धातोः कर्तरि परस्मैपदं स्यात्।

---

पर्यवस्यति। अथ कस्माद्धातोः परस्मैपदम् कस्मादात्मनेपदमित्याकांक्षायामाह। **अनुदात्तेति**॥ अनुदात्तश्च ङ्च अनुदात्तङौ। ताविताै यस्य सः अनुदात्तङित्। तस्मात् अनुदात्तङितः। द्वन्द्वान्ते श्रूयमाण इच्छब्दः प्रत्येकं सम्बद्ध्यते। अनुदात्तेतः ङितश्चेति लभ्यते। उपदेशेऽजनुनासिक इदित्यस्मात् मण्डूकप्लुत्या उपदेश इत्यनुवृत्तम् ङित इत्यनेन सम्बध्यते। नत्वनुदात्त इत्यनेन। उपदेशादन्यत्र अनुदात्तस्येत्संज्ञाया अप्रसक्तत्वेनाव्यभिचारात्। भूवादयो धातव इत्यस्मान्मण्डूकप्लुत्या धातव इत्यनुवृत्तम् पञ्चम्या विपरिणतम् अनुदात्तेता ङिता च विशेष्यते। तत्रानुदात्तेदंशे तदन्तविधेः प्रयोजनाभावात् ङिदंशे तदन्तविधिः। तदाह। **अनुदात्तेत इत्यादिना। लस्यस्थान इति**॥ आत्मनेपदग्रहणलभ्यमिदम्। तिङां लादेशत्वनियमात्। उपदेशे किम्। चुकुटिषति। अत्र गाङ्कुटादिभ्य इति सन आतिदेशिकमेव ङित्वम्। नत्वौपदेशिकम्। धातोः किम्। अदुद्रुवत्। अत्र णिश्रीति चङन्तान्नात्मनेपदम्। ङिदंशे तदन्तविध्यभावे तु बोभूयत इत्यादौ सनाद्यन्ता इति धातुसंज्ञकात् यङन्तादात्मनेपदं न स्यात्। ङित इत्येवोक्तौ तु यङो ङित्वेऽपि तदन्तस्य धातोर्ङित्वाभावादात्मनेपदं न स्यात्। **स्वरितञित इति**॥ स्वरितश्च ञ् च स्वरितञौ तौ इतौ यस्य तस्मादिति बहुव्रीहिः। इच्छब्दः प्रत्येकं सम्बध्यते। तदाह। **स्वरितेतो ञितश्चेति**॥ धातोरित्यनन्तरं लस्य स्थान इति शेषः। कर्तारमभिप्रैति गच्छतीति कर्त्रभिप्रायम्। कर्मण्यण्। तदाह। **कर्तृगामिनीति**॥ एवञ्च होता याज्यया यजतीत्यादौ यागफलस्य स्वर्गस्य यजमानगामित्वेन होतृगामित्वाभावात् नात्मनेपदम्। तथा वेतनेन यज्ञदत्तभृतो- देवदत्तः पचतीत्यत्रापि पाकफलस्य भोजनस्य पक्तृगामित्वाभावान्नात्मनेपदम्। दक्षिणादिलाभस्तु न फलम्। लोकतो वेदतो वा यदुद्देशेन क्रियाप्रवृत्तिः तस्यैवात्र क्रियाफलशब्देन विवक्षितत्वात्। कर्तृगामिफलकक्रियावृत्तेर्धातोरित्यर्थः। आत्मनेपदन्तु धात्वर्थफलस्य कर्तृगामित्वं द्योतयतीत्यलम्। **शेषात्कर्तरीति**॥ अनुदात्तङित इति स्वरितञित इति चोक्तात् आत्मनेपद विषयादन्यश्शेषः। तदाह। **आत्मनेपदनिमित्तहीनादिति**॥ अनेन भूधातोः कर्तरि लस्य परस्मैपदं सिद्धम्। तत्र तिबादिनवके युगपत् पर्यायेण एकद्वित्वादिकतिपयरूपेण वा प्राप्ते युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मद्ध्यमः। अस्मद्युत्तमः। शेषे प्रथमः। इति व्यवस्थां

**२१६० । तिङस्त्रीणि त्रीणि प्रथममध्यमोत्तमाः । ( १-४-१०१ )**

तिङ उभयोः पदयोस्त्रयस्त्रिकाः क्रमादेतत्संज्ञाः स्युः ।

**२१६१ । तान्येकवचनद्विवचनबहुवचनान्येकशः । (१-४-१०२)**

लब्धप्रथमादिसंज्ञानि तिङस्त्रीणि त्रीणि वचनानि प्रत्येकमेकवचनादिसंज्ञानि स्युः ।

**२१६२ । युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः । ( १-४-१०५ )**

तिङ्वाच्यकारकवाचिनि युष्मदि प्रयुज्यमानेऽप्रयुज्यमाने च मद्ध्यमः स्यात् ।

**२१६३ । प्रहासे च मन्योपपदे मन्यतेरुत्तम एकवच्च । (१-४-१०६)**

---

वक्ष्यन् प्रथमादिसंज्ञां तावदाह । **तिङस्त्रीणीति** ॥ तिङः षट् त्रिकाः संज्ञास्तु तिस्र इति यथासंख्यासम्भवादेकैकस्य त्रिकस्य तिसृषु संज्ञासु प्राप्तास्वाह । **तिङ उभयोः पदयोरिति** ॥ लः परस्मैपदमित्यतः परस्मैपदमिति तङानावात्मनेपदमित्यत आत्मनेपदमिति चानुवृत्तम् षष्ठ्यन्ततया विपरिणम्यते । ततश्च परस्मैपदात्मनेपदयोरुभयोरपि प्रत्येकं त्रयस्त्रिकास्सन्तीति यथासंख्यम्प्रथमादिसंज्ञाः प्रवर्तन्त इति भावः । प्रथमादिषु पुरुषसंज्ञा तु प्राचीनाचार्यशास्त्रसिद्धेति बोद्धयम् । अथ प्रथमादिपुरुषेषु एकैकस्मिन् पुरुषे प्रत्ययत्रिकात्मके युगपत् पर्यायेण वा एकैकप्रत्यये प्राप्ते द्व्येकयोर्द्विवचनैकवचने । बहुषु बहुवचनमिति व्यवस्थार्थमेकवचनादिसंज्ञामाह । **तानीति** ॥ तच्छब्देन पूर्वसूत्रोपात्तानि प्रथममद्ध्यमोत्तमाख्यानि तिङस्त्रीणि त्रीणि परामृश्यन्ते । तदाह । **लब्धप्रथमादिसंज्ञानीति** ॥ एकश इत्यस्य विवरणं प्रत्येकमिति । संख्यैकवचनाच्च वीप्सायामिति शसिति भावः । **युष्मदीति** ॥ उपोच्चारितम्पदमुपपदम् । युष्मदि समीपोच्चारिते सतीत्यर्थः । समानमेकमधिकरणं वाच्यं यस्येति विग्रहः । सामानाधिकरण्यञ्च युष्मदस्तिङः स्थानीभूतलकारेण विवक्षितम् । लः परस्मैपदमित्यतस्तदनुवृत्तेः । तथा च फलितमाह । **तिङ्वाच्यकारकवाचिनि युष्मदीति** ॥ स्थानं प्रसङ्गः अस्यास्तीति स्थानी तस्मिन् प्रसक्ते सतीत्यर्थः । प्रसङ्गश्च तदर्थावगतौ सत्यां वक्त्रा अप्रयोग एव पर्यवस्यति । तथा च स्थानिनीत्यनेन उपपदभूते युष्मदि प्रयोगं विना स्वार्थम्बोधयति सतीत्यर्थः पर्यवस्यति । तदाह । **अप्रयुज्यमान इति** ॥ स्थानिनीत्यनुक्तौ युष्मद्युपपदे प्रयुज्यमान एव मद्ध्यमस्स्यात् । ततश्च राम पाहीत्यादौ अव्याप्तिस्स्यात् । अपिना लब्धमाह । **प्रयुज्यमानेऽपीति** ॥ युष्मद्युपपदे स्थानिनीत्येवोक्तौ राम त्वं पाहीत्यादौ युष्मत्प्रयोगे मद्ध्यमो न स्यात् । अतोऽपिग्रहणमिति भावः । अत्वं त्वं सम्पद्यत इत्यत्र तु न मद्ध्यमपुरुषः । तत्र युष्मच्छब्दस्य गौणत्वात् । भवानागच्छतीत्यादौ भवच्छब्दयोगे तु न मद्ध्यमपुरुषः । युष्मच्छब्दस्य सम्बोद्ध्यैकविषयत्वात् । भवच्छब्दस्य तु स्वभावेन सम्बोद्ध्यासम्बोद्ध्यसाधारणत्वादित्यलम् । **प्रहास इति** ॥ वाक्यद्वयमिदं सूत्रम् । प्रहासे च मन्योपपदे इति प्रथमं वाक्यम् । मध्यम इत्यनुवर्तते । मनधातुः श्यन्विकरणः उपपदं यस्येति बहुव्रीहिः । मन्यपदश्रवणबलात्

मन्यधातुरुपपदं यस्य धातोस्तस्मिन्प्रकृतिभूते सति मध्यमः स्यात्परिहासे गम्यमाने । मन्यतेस्तूत्तमः स्यात्स चैकार्थस्य वाचकः स्यात् ।

## २१६४ । अस्मद्युत्तमः । (१-४-१०७)

तथाभूतेऽस्मद्युत्तमः स्यात् ।

## २१६५ । शेषे प्रथमः । (१-४-१०८)

मध्यमोत्तमयोरविषये प्रथमः स्यात् । 'भू १ सत्तायाम्' । कर्तृविवक्षायां भू ति इति स्थिते ।

## २१६६ । तिङ्शित्सार्वधातुकम् । (३-४-११३)

तिङः शितश्च धात्वधिकारोक्ता एतत्संज्ञाः स्युः ।

## २१६७ । कर्तरि शप् । (३-१-६८)

कर्त्रर्थे सार्वधातुके परे धातोः शप्स्यात् । शपावितौ ।

---

धाताविति विशेष्यं लभ्यते । तदाह । **मन्यधातुरित्यादिना** । **तस्मिन् प्रकृतिभूते सतीति** ॥ तस्माद्धातोर्लस्य स्थाने इत्यर्थः । **मध्यमस्स्यादिति** ॥ अस्मद्युपपद इति शेषः । अस्मद्युत्तम इत्युत्तरसूत्रात्तदनुवृत्तेः । एवञ्च उत्तमपुरुषापवादोऽयं मध्यमविधिः । **मन्यतेरुत्तम** एकवच्चेति द्वितीयं वाक्यम् । तद्व्याचष्टे । **मन्यतेस्तूत्तमस्स्यादिति** ॥ युष्मद्युपपद इति शेषः । पूर्वसूत्रात्तदनुवृत्तेः । **सचेति** ॥ सः मन्यतेरुत्तमपुरुषः द्वित्वबहुत्वयोरपि एकवचनं लभत इत्यर्थः । मध्यमोत्तमयोर्व्यत्यासार्थमिदम् । एतत्सर्वमनुपदमेवोदाहरणे स्पष्टीभविष्यति । **अस्मद्युत्तम इति** । **तथाभूत इति** ॥ तिङ्वाच्यकारकवाचिनि प्रयुज्यमाने अप्रयुज्यमाने चेत्यर्थः । **शेष इति** ॥ उक्तान्मध्यमोत्तमविषयादन्यश्शेषः । तदाह । मध्यमोत्तमयोरविषय इति । त्वम् अहञ्च पचाव इत्यत्र तु परत्वादुत्तमपुरुष एव । न तु मध्यमः । देवदत्तस्त्वञ्च पचथ इत्यत्रापि न प्रथमपुरुषः । युष्मदस्सत्वेन शेषत्वाभावादित्यलम् । **भूसत्तायामिति** ॥ वर्तत इति शेषः । भ्वादिगणे प्रथमो धातुरयम् । तत्र भू इत्येव गणे पाठः । अर्थनिर्देशस्त्वाधुनिक इति वक्ष्यते । यद्यपि सत्ता जातिः न क्रिया । तथापि आत्मधारणं सत्तेत्युच्यते । स्वरूपेणावस्थानमिति यावत् । **कर्तृविवक्षायामिति** ॥ वर्तमानसत्तावृत्तेर्भूधातोः कर्तरि लटि आत्मनेपदनिमित्तहीनतया परस्मैपदे तिबादिनवके तत्रापि युष्मदस्मत्सामानाधिकरण्याभावात् प्रथमपुरुषत्रिके तत्रापि कर्तुरेकत्वविवक्षायां तिपि सति भू ति इति स्थिते प्रक्रिया वक्ष्यत इत्यर्थः ॥ तत्र सार्वधातुककार्यं वक्ष्यन् सार्वधातुकसंज्ञामाह । **तिङ्शिदिति** ॥ धातोरित्यधिकृतम् । तदाह । **धात्वधिकारोक्ता इति** ॥ तेन हरीनित्यत्र शसस्सार्वधातुकत्वं न । अन्यथा तिङ्शित्सार्वधातुकमिति शसस्सार्वधातुकत्वात् सार्वधातुकमपिदिति ङित्वे घेर्ङितीति गुणः स्यात् । **कर्तरीति** ॥ सार्वधातुके यगित्यस्मात् सार्वधा-

**२१६८ । सार्वधातुकार्धधातुकयोः । (७-३-८४)**

**अनयोः परयोरिहाङ्गस्य गुणः स्यात् । अवादेशः । भवति । भवतः ।**

**२१६९ । झोऽन्तः । (७-१-३)**

**प्रत्ययावयवस्य झस्यान्तादेशः स्यात् । 'अतो गुणे' (१९१) । भवन्ति । भवसि । भवथः भवथ ।**

**२१७० । अतो दीर्घो यञि । (७-३-१०१)**

**अतोऽङ्गस्य दीर्घः स्याद्यञादौ सार्वधातुके परे । भवामि । भवावः । भवामः । स भवति । तौ भवतः । ते भवन्ति । त्वं भवसि । युवां भवथः । यूयं भवथ ।**

---

तुक इत्यनुवर्तते । धातोरेकाचो हलादेरित्यस्माद्धातोरिति । तदाह । **कर्त्रर्थ इत्यादिना** ॥ तिङि परे धातोर्विहितानां प्रत्ययानां शबादीनां विकरणसंज्ञा प्राचीनाचार्यसिद्धा । **शपावितावेति** ॥ शकारपकारौ लशक्वतद्धित इति हलन्त्यमिति चेत्संज्ञकावित्यर्थः । ततश्च शपि शकारपकारयोः लोपे अकारमात्रं शिष्यत इत्यर्थः । भू अ ति इति स्थिते । **सार्वधातुक इति** ॥ इको गुणवृद्धी इति परिभाषया इक इत्युपस्थितेन अङ्गस्येत्यधिकृतं विशेष्यते । तदन्तविधिः । मिदेर्गुण इत्यस्मात् गुण इत्यनुवर्तते तदाह । **अनयोरित्यादिना** ॥ तथा च ऊकारस्य गुणः ओकारः । **अवादेश इति** ॥ ओकारस्येति शेषः । तथा च परिनिष्ठितं रूपमाह । **भवतीति । भवत इति** ॥ कर्तृद्वित्वविवक्षायां भू धातोर्लटः तसादेशे शपि गुणे अवादेशे सकारस्य रुत्वविसर्गाविति भावः । कर्तृबहुत्वविवक्षायां भूधातोर्लटः झि इत्यादेशे शपि गुणे अवादेशे च कृते । **झोन्त इति** ॥ झः अन्तः इति छेदः । झ इति षष्ठ्यन्तम् । आदेशे तकारात् अकार उच्चारणार्थः । आयनेयी इति सूत्रात् प्रत्ययग्रहणमनुवर्तते । नन्वादिग्रहणमपि । अस्वरितत्वात् । अनुवृत्तं च प्रत्ययग्रहणमवयवषष्ठ्यन्तमाश्रीयते । तदाह । प्रत्ययावयवस्येति । झस्य झकारस्येत्यर्थः । **अन्तादेशः स्यादिति** ॥ अन्त् इत्ययमादेशः स्यादित्यर्थः । प्रत्ययावयवस्येति किम् । उज्झिता । अत्र धात्ववयवस्य झकारस्य न भवति । आदिग्रहणानुवृत्तौ तु शयान्तै इति न सिद्ध्यति । अन्तादेशात्प्रागेवान्तरङ्गत्वाल्लिटोऽडाटावित्याटिकृते झकारस्य प्रत्ययादित्वाभावात् इति भाष्ये स्पष्टम् । एवञ्च भव झि इत्यत्र झकारस्य अन्त् इत्यादेशे भव अन्ति इति स्थिते अतो गुण इति द्वयोरकारयोस्सवर्णदीर्घापवादे पररूपे कृते भवन्तीति रूपमित्यर्थः । अन्तादेशे प्रथमाकारोच्चारणन्तु लुग्विकरणे द्विषन्तीत्यादौ अकारश्रवणार्थम् । **भवसीति** ॥ मद्ध्यमपुरुषैकवचने सिपि शपि गुणे अवादेशे रूपम् । **भवथ इति** ॥ मध्यमपुरुषद्विवचने थसि शपि गुणे अवादेशे रुत्वविसर्गयोश्च रूपम् । न विभक्तौ तु स्मा इति सस्य नेत्वम् । **भवथेति** ॥ मद्ध्यमपुरुषबहुवचने थादेशे शपि गुणे अवादेशे रूपम् । उत्तमपुरुषैकवचनेऽपि शपि गुणे अवादेशे भवमि इति स्थिते । **अतो दीर्घ इति** ॥ अङ्गस्येत्यधिकृतम् अता विशेष्यते । तदन्तविधिः । तुरुस्तुशम्यम इत्यतस्सार्वधातुक इत्यनुवृत्तम् यञा विशेष्यते । तदादि विधिः । तदाह । अदन्तस्येत्यादिना ।

अहं भवामि। आवां भवावः। वयं भवामः। एहि मन्य ओदनं भोक्ष्यस इति भुक्तः सोऽतिथिभिः। एतमेत वा मन्ये ओदनं भोक्ष्येथे। भोक्ष्यध्वे। भोक्ष्ये। भोक्ष्यावहे। भोक्ष्यामहे। मन्यसे। मन्येथे। मन्यध्वे। इत्यादिरर्थः। 'युष्मद्युपपदे' (२१६२) इत्याद्यनुवर्तते तेनेह न। एतु भवान्मन्यते ओदनं भोक्ष्य इति। भुक्तः सोऽतिथिभिः। 'प्रहासे' किम्। यथार्थकथने मा भूत्। एहि मन्यस ओदनं भोक्ष्य इति भुक्तः सोऽतिथिभिरित्यादि।

**२१७१। परोक्षे लिट्। (३-२-११५)**

भूतानद्यतनपरोक्षार्थवृत्तेर्धातोर्लिट् स्यात्। लस्य तिबादयः।

**२१७२। लिट् च। (३-४-११५)**

---

**भवामीति**॥ न च भूधातोर्विहितलादेशं प्रति भूधातुरेवाङ्गम्। न तु भवेति विकरणान्तमिति वाच्यम्। यस्मात्प्रत्ययविधिस्तदादिप्रत्ययेऽङ्गमित्यत्र तदादिग्रहणेन विकरणविशिष्टस्यापि अङ्गत्वात्। **भवावो, भवाम इति**॥ लस्य वसि मसि च शपि गुणे अवादेशे अतो दीर्घे रुत्वे विसर्गे च रूपे। न विभक्ताविति सस्य नेत्वम्। अथ प्रथममध्यमोत्तमपुरुषव्यवस्थामुक्तां स्मारयितुमाह। **स भवतीत्यादि**॥ अथ प्रहासे चेति सूत्रस्योदाहरति। **एहीति**॥ सर्वेषु भुक्तवत्सु भोक्तुमागतं जामातरं प्रति परिहासाय प्रवृत्तमिदं वाक्यम्। भो जामातः, एहि आगच्छ, ओदनं, भोक्ष्य, इति त्वम्मन्यसे, नैतद्युक्तमित्यर्थः। कुत इत्यत आह। **भुक्तस्सोऽतिथिभिरिति**॥ स ओदनः अतिथिभिर्भक्षित इत्यर्थः। अत्र भुजेरुत्तमपुरुषे प्राप्ते मद्ध्यमः पुरुषः। मन्यतेस्तु मद्ध्यमपुरुषे प्राप्ते उत्तमः पुरुषः। **एतं, एतवेति**॥ हे जामातरौ आगच्छतम्। ओदनं भोक्ष्यावहे इति मन्येथे इत्यर्थः। भो जामातरः ओदनं भोक्ष्यामहे इति मन्यध्वे इति चोभयत्रापि भुजेरुत्तमे प्राप्ते मद्ध्यमः। मन्यतेस्तु मद्ध्यमे प्राप्ते उत्तमः। द्वित्वबहुत्वयोरेकवचनञ्च। **इत्यादीति**॥ एहि एतं एतवा मन्ये जलं पास्यावः पास्याम इत्यादि संग्रहः। मन्ये इत्युत्तमपुरुषैकवचनान्तम् व्याचष्टे मन्यस इत्यादिना। **अनुवर्तत इति**॥ प्रहासेचेति सूत्र इति शेषः। **एतु भवानिति**॥ युष्मद्भवतोः पर्यायत्वाभावस्यानुपदमेवोक्तत्वादिति भावः। इति लट्प्रक्रिया॥ **परोक्षे लिडिति**॥ अनद्यतने लङित्यस्मादनद्यतन इत्यनुवर्तते। भूते इत्यधिकृतम्। परोक्षत्वं धात्वर्थविशेषणम्। तदाह। **भूतानद्यतनेत्यादिना**॥ अतीतरात्रेरन्त्ययामेन आगामिरात्रेराद्ययामेन सहितो दिवसः अद्यतन इति लुङ्सूत्रभाष्ये कैय्यटे च स्थितम्। परोक्षत्वन्तु वर्षशतवृत्तत्वमित्येके। वर्षसहस्रवृत्तत्वमित्यपरे। द्व्यहवृत्तत्वं त्र्यहवृत्तत्वं चेत्यन्ये। कुड्यकटाद्यन्तरितत्वमितीतरे। एते पक्षा भाष्ये स्थिताः। तत्र प्रयोक्तुरिन्द्रियागोचरत्वं परोक्षत्वमित्येव सर्वसम्मतमित्यलम्। **लस्य तिबादय इति**॥ तिबादिनवकमित्यर्थः। **लिट्चेति**॥ लिडिति लुप्त-

लिडादेशस्तिङार्धधातुकसंज्ञ एव स्यान्न तु सार्वधातुकसंज्ञः। तेन शबादयो न।

**२१७३। परस्मैपदानां णलतुसुस्थलथुसणल्वमाः। (३-४-८२)**

लिटस्तिबादीनां नवानां णलादयो नव स्युः। 'भू' 'अ' इति स्थिते।

**२१७४। भुवो वुग्लुङ्लिटोः। (६-४-८८)**

भुवो वुगागमः स्यात्। लुङ्लिटोरचि। नित्यत्वाद् वुग्गुणवृद्धी बाधते।

**२१७५। एकाचो द्वे प्रथमस्य। (६-१-१)**

**२१७६। अजादेर्द्वितीयस्य। (६-१-२)**

इत्यधिकृत्य।

---

स्थानषष्ठ्यन्तम्। तिङ्शित्सार्वधातुकमित्यस्मात् तिङित्यनुवर्तते। आर्धधातुकं शेष इत्यस्मादार्धधातुकमिति। तदाह। **लडादेशस्तिङिति**॥ एकसंज्ञाधिकारबहिर्भूतत्वात् सार्वधातुकसंज्ञाया अपि समावेशे प्राप्ते आह। **आर्धधातुकसंज्ञ एवेति**॥ लङश्शाकटायनस्यैवेति सूत्रादेवकारानुवृत्तेरिति भावः। **तेनेति**॥ सार्वधातुकत्वाभावेन तन्निमित्ताः शप्श्यनादयो न भवन्तीत्यर्थः। **परस्मैपदानामिति**॥ लिटस्तझयोरित्यस्मात् लिट इत्यनुवृत्तिमभिप्रेत्याह। **लिटस्तिबादीनामिति**॥ **णलादय इति**॥ णल्, अतुस्, उस्, थल्, अथुस्, अ, णल्, व, म, इत्येते नव यथासंख्यं स्युरित्यर्थः। तत्र तिपो णल् सर्वादेशः। न च णकारलकारयोश्चुटू इति हलन्त्यमिति च इत्संज्ञकत्वाल्लोपे कथमनेकाल्त्वमिति वाच्यम्। सर्वादेशत्वात्प्राक् णलः प्रत्ययत्वाभावेन चुटू इत्यस्याप्रवृत्तेः। णित्वन्तु जुहावेत्यादौ वृद्ध्यर्थम्। लित्वं तु लित्स्वरार्थम्। ननु मद्ध्यमपुरुषबहुवचनथस्य विधीयमानः अकारः अलोन्त्यस्येत्यन्त्यस्य स्यात्। अकारस्य अकारविधिस्तु यथासंख्यापादनार्थ इति चेत्। सत्यम्। द्वयोरकारयोः पररूपेण अ इति सूत्रनिर्देशादनेकाल्त्वात् सर्वादेशत्वमिति भाष्ये स्पष्टम्। न च अतुसादीनामादेशत्वात् पूर्वं विभक्तित्वाभावेन न विभक्ताविति निषेधाभावात् सकारस्येत्वन्दुर्वारमिति वाच्यम्। सकारादुपरि सकारान्तरस्य संयोगान्तलोपेन लुप्ततया श्रूयमाणसकारस्योपदेशेऽन्त्यत्वाभावादित्यलम्। **भुवोवुगिति**। **अचीति**॥ अचिश्नुधात्वित्यतस्तदनुवृत्तेरिति भावः। अचीति किम्। अभूत्। ननु णलि परत्वात् वुकं बाधित्वा अचोञ्णितीति वृद्धिस्स्यात्। बभूविथेत्यत्र तु सार्वधातुकार्धधातुकयोरिति गुणस्स्यादित्यत आह। **नित्यत्वादिति**॥ कृतयोरपि गुणवृध्योरेकदेशविकृतन्यायात् वुक् प्रवर्तते। अकृतयोरपि प्रवर्तते। ततश्च कृताकृतप्रसङ्गी यो विधिस्सनित्य इति न्यायेन वुक् गुणवृद्धी बाधत इत्यर्थः। वुकि ककार इत् उकार उच्चारणार्थः। कित्वादन्तावयवः। भूव् अ इति स्थिते। **एकाच इति**। **अजादेरिति**। **इत्यधिकृत्येति**॥ षष्ठाद्ध्यायारम्भे द्वे इमे सूत्रे। ते च न विधायके। अतिप्रसङ्गात्। किन्तु

## २१७७। लिटि धातोरनभ्यासस्य। (६-१-८)

लिटि परेऽनभ्यासधात्ववयवस्यैकाचः प्रथमस्य द्वे स्त आदिभूतादचः परस्य तु द्वितीयस्य। 'भूव्' 'भूव्' 'अ' इति स्थिते।

## २१७८। पूर्वोऽभ्यासः। (६-१-४)

---

ष्यङस्सम्प्रसारणमित्यतः प्राक् अनुवर्त्येते एवेति भावः। **लिटि धातोरिति** ॥ एकाचो द्वे प्रथमस्येत्यधिकृतम्। धातोरित्यवयवषष्ठी। तदाह। **धात्ववयवस्येति** ॥ एकाच इति प्रथमस्येति च धात्ववयवस्य विशेषणम्। एकः अच् यस्येति तद्गुणसंविज्ञानो बहुव्रीहिः। तथा च लिटि परे अभ्यासभिन्नस्यैकाच्कस्य प्रथमस्य धात्ववयवस्य द्वे उच्चारणे स्त इत्यर्थः। एकाच इत्यत्र कर्मधारयाश्रयणे तु पपाचेत्यादि न सिध्येदिति भाष्ये स्पष्टम्। अजादेर्द्वितीयस्येत्यप्यधिकृतम्। तत्राच्चासावादिश्च अजादिः तस्मादिति कर्मधारयात् पञ्चमी। तदाह। आदिभूतादचः परस्य तु द्वितीयस्येति। एकाच इति शेषः। अजादिधात्ववयवस्य एकाचश्चेत् द्वित्वम् तर्हि द्वितीयस्यैवैकाचो द्वित्वम्। न तु प्रथमस्येति यावत्। अत्र द्वे इत्यनन्तरमुच्चारणे इत्यभ्याहत्यैकाचः प्रथमस्येति कृद्योगलक्षणषष्ठीञ्चाश्रित्य द्विः प्रयोग एवात्र विधीयते। न स्थानषष्ठीमाश्रित्यादेशपक्ष इति प्रकृतसूत्रभाष्ये प्रपञ्चितम्। आदेशप्रत्यययोरिति सूत्रभाष्येऽपि द्विः प्रयोगपक्ष एवोक्तः। तादिह विस्तरभयान्नलिखितम्। पपाच इयायेत्यादौ प्रथमत्वमेकाच्कत्वं द्वितीयत्वञ्च व्यपदेशिवत्वेन बोद्धव्यम्। अजादेरिति बहुव्रीह्याश्रयणे तु, इन्द्रमात्मन इच्छति इन्द्रीयति तमिच्छति इन्दिन्द्रीयिषतीत्यादौ नन्द्राःसंयोगादय इति दकारस्य द्वित्वनिषेधश्च स्यात्। तत्राजादेरित्यनुवृत्तेः। धातोरिति किम्। तदभावे हि लिटि परे यः प्रथमः एकाच् तस्य द्वे इत्यर्थः स्यात्। एवं सति पपाचेत्यादावेव स्यात्। न तु जजागारेत्यादाविति भाष्ये स्पष्टम्। न च पपाचेत्यादौ लिटि धातोरिति द्वित्वे कृते लक्ष्ये लक्षणस्येति न्यायेन पुनर्द्वित्वस्याप्रसक्तेरनभ्यासग्रहणं व्यर्थमिति वाच्यम्। यङन्तात् सन्यङोरिति यङ्निमित्तकद्वित्वविशिष्टात् सनि सन्निमित्तकद्वित्वनिवृत्तये सन्नन्तात् सन्यङोरिति कृतद्वित्वाण्णिचि लुङि चङि कृते चङीति द्वित्वनिवृत्तये चानभ्यासग्रहणस्यावश्यकत्वात्। भाष्ये तु कृष्णो नोनाव वृषभो यदीदमित्यादौ नुधातोर्यङन्तात् सन्यङोरिति कृतद्वित्वात् नोनूय इत्यस्मात् लिटि कास्प्रत्ययादाममन्त्रे लिटीति मन्त्रपर्युदासादामभावे यस्य हल इति यकारलोपे अतो लोपे तिपो णलि वृद्धावावादेशे नोनावेत्यत्र लिटि धातोरिति द्वित्वनिवृत्तये अनभ्यासग्रहणमित्युक्त्या अनभ्यासग्रहणमनर्थकम्। छन्दसि वा वचनादित्युक्तम्। यङन्तात् सनि सन्नन्ताण्णिचि चङ् लोके नास्त्येवेति तदाशय इति शब्देन्दुशेखरे स्पष्टम्। प्रकृते च भूव् अ इत्यत्र चत्वार एकाचः। तत्र भू इति प्रथमः। ऊव् इति द्वितीयः। ऊ इति व्यपदेशिवद्भावेन तृतीयैकाच्। भूव् इति समुदायस्तु चतुर्थः। तत्र समुदाये द्विरुच्यमाने सर्वे अवयवाः द्विरुच्यन्त इति भूव् इति समुदायस्यैव द्विर्वचनमिति भाष्ये स्पष्टम्। तदाह। **भूव् भूव् अ इति स्थित इति** ॥ अत्र भूव् इत्यस्य एकाचः धात्ववयवत्वं प्रथमत्वञ्च व्यपदेशिवत्वाद्बोध्यम्। **पूर्व इति** ॥ **अत्रेति** ॥ एकाचो द्वे प्रथमस्येति

अत्र ये द्वे विहिते तयोः पूर्वोऽभ्याससंज्ञः स्यात्।

## २१७९। हलादिः शेषः। (७-४-६०)

अभ्यासस्यादिर्हल्शिष्यतेऽन्ये हलो लुप्यन्ते। इति वलोपः।

## २१८०। ह्रस्वः। (७-४-५९)

अभ्यासस्याचो ह्रस्वः स्यात्।

## २१८१। भवतेरः। (७-४-७३)

भवतेरभ्यासोकारस्य 'अः' स्याल्लिटि।

## २१८२। अभ्यासे चर्च। (८-४-५४)

अभ्यासे झलां चरः स्युर्जशश्च। झशां जशः, । खयां चरः। तत्रापि प्रकृतिजशां प्रकृतिजशः प्रकृतिचरां प्रकृतिचर इति विवेकः। आन्तरतस्यात्।

---

षाष्ठद्वित्वप्रकरण इत्यर्थः। तेन सर्वस्य द्वे इत्यादिविहितस्य द्वित्वस्य न संग्रहः। कस्य पूर्व इत्याकांक्षायां द्वे इत्यनुवृत्तं षष्ठ्या विपरिणतं सम्बद्ध्यते। तदाह। **ये द्वे विहिते तयोरिति। हलादिरिति**॥ अत्र लोपोऽभ्यासस्येत्यस्मादभ्यासस्येत्यनुवर्तते। शिष्यत इति शेषः कर्मणि घञ्। शिषधातुरितरनिवृत्तिपूर्वकावस्थितौ। तदाह। **अभ्यासस्येत्यादिना। इति वलोप इति**॥ भूव् भूव् इत्यत्र अभ्यासवकारस्य लोप इत्यर्थः। भू भूव् अ इति स्थिते। **ह्रस्व इति**॥ अत्र लोपोऽभ्यासस्येत्यतः अभ्यासस्येत्यनुवर्तते। ह्रस्वश्रवणादचश्चेति परिभाषया अच इत्युपस्थितम्। तदाह। **अभ्यासस्याच इति**॥ भू भूव् अ इति स्थितम्। यद्यपि भवतेर इति वक्ष्यमाणाकारविधिनैव सिद्धमिदम्। तथापि लुलावेत्याद्यर्थमावश्यकमिदम् अत्रैव न्याय्यत्वादुपन्यस्तम्। **भवतेर इति**॥ भवतेः अ इति छेदः भवतेरिति श्तिपा निर्देशः। भूधातोरित्यर्थः। इक्श्तिपौ धातुनिर्देशे इत्युक्तेः। अत्र लोपोऽभ्यासस्येत्यस्मादभ्यासस्येत्यनुवर्तते। व्यथो लिटि दीर्घ इत्यस्मात् लिटीति भूधातोरभ्यासस्य भवन्नकारः अलोन्त्यस्येत्यन्त्यस्योकारस्य भवति। तदाह। **अभ्यासोकारस्येति**॥ नानर्थकेऽलोन्त्यविधिरिति तु नेह प्रवर्तते। अनभ्यासविकार इत्युक्तेः। भ भू व् अ इति स्थिते। **अभ्यासे इति**॥ झलाञ्जश्झशीत्यस्मात् झलामित्यनुवर्तते। चकारेण जश् समुच्चीयते। तदाह। **अभ्यासे झलामित्यादिना**॥ झलश्चतुर्विंशतिः। तत्र शषसाः शरः। तेषामभ्यासे लोपो वक्ष्यते। शर्पूर्वाः खय इति हकारस्य त्वभ्यासे कुहोश्चुरिति श्चुत्वं वक्ष्यते। एवञ्च झल्षु झयो विंशतिरिहाभ्यासगताः स्थानिनो लभ्यन्ते। तेषां मद्ध्ये कस्य चरः कस्य जशः इत्याकांक्षायामाह। **झशां जश इति**॥ वर्गाणान्तृतीयचतुर्था झशः। तेषां जशः जबगडदा इत्यर्थः। यद्वर्ग्याः स्थानिनः तत्तद्वर्ग्या आदेशा इत्यपि बोद्धव्यम्। **खयाञ्चर इति**॥ वर्गाणां प्रथमद्वितीयाः

## २१८३ । असिद्धवदत्राभात् । (६-४-२२)

**इत ऊर्ध्वमापादपरिसमाप्तेराभीयम् समानाश्रये तस्मिन्कर्तव्ये तदसिद्धं स्यात्। इति वुकोऽसिद्धत्वादुवङि प्राप्ते ।**

---

खयः तेषां चरः चटतकपा इत्यर्थः । अत्रापि यद्वर्ग्याः स्थानिनः तत्तद्वर्ग्या आदेशा इत्यपि बोद्ध्यम् । **तत्रापीति** ॥ तेष्वपि वर्ग्येषु प्रकृत्या स्वभावेन जशामेव सतां प्रकृत्या स्वभावेन जश एव सन्तस्तत्तद्वर्ग्या आदेशास्स्युः। एवं प्रकृत्या स्वभावेन चरामेव सतां प्रकृत्या स्वभावेन चर एव सन्तस्तत्तद्वर्ग्या आदेशास्स्युरित्यर्थः । पर्जन्यवल्लक्षणप्रवृत्तेरिति भावः। कुत इयं व्यवस्थेत्यत आह । **आन्तरतम्यादिति** ॥ झशां जशाञ्च घोषसंवारनादप्रयत्नसाम्यम् । खयां चराञ्च श्वासाघोषविवारप्रयत्नसाम्यम् । तत्तद्वर्ग्याणां तत्तद्वर्ग्या आदेशा इत्यत्र तु स्थानसाम्यन्नियामकं बोद्ध्यम्। तथा च प्रकृते अभ्यासभकारस्य बकारे सति बभूव् अ इति स्थिते अचिश्नुधात्वित्युवङादेशमाशङ्कितुमाह। **असिद्धवदिति** ॥ षष्ठस्य चतुर्थपादे इदं सूत्रम्। श्नान्नलोप इति सूत्रात् पूर्वं पठितम्। आभादित्यभिविधावाङ् भस्येत्याधिकारमभिव्याप्येत्यर्थः । भाधिकारश्च आपादपरिसमाप्तेरिति सिद्धान्तः । तथा च आपादपरिसमाप्तेरिति लभ्यते। विहितं कार्यमिति शेषः। किमारभ्येत्याकांक्षायामुपस्थितत्वादस्मादेवसूत्रादूर्ध्वमिति लभ्यते। ततश्च श्नान्नलोप इत्यारभ्यापादसमाप्तेः विहितं यदाभीयं कार्यं तदसिद्धवद्भवति। प्रवृत्तमप्यप्रवृत्तं भवतीत्यर्थः । अधिकारसूत्रमिदमुत्तरत्र श्नान्नलोप इत्यादौ प्रतिसूत्रमुपतिष्ठते । तथा च यद्यत्सूत्रे इदमनुवर्तते तत्तदाभीयकार्ये कर्तव्ये इति लभ्यते । एवञ्च श्नान्नलोप इत्यादितत्तदाभीयं कार्यं श्नान्नलोप इत्याद्याभीये कार्ये कर्तव्ये असिद्धवदित्यर्थः पर्यवस्यति । अत्रेत्यनेन निमित्तसप्तम्यन्तेनत्वसिद्धीभवतः कार्यस्य यन्निमित्तं तन्निमित्तके कार्ये कर्तव्ये सतीत्यर्थलाभात् समानाश्रये कार्ये कर्तव्ये सतीति लभ्यते। एतत्सर्वं भाष्ये स्थितम् । तदाह । **इत ऊर्ध्वमित्यादिना । तस्मिन्निति** ॥ आभीये कर्तव्ये सतीत्यर्थः । एधि शाधीत्युदाहारणम् । अत्र घ्वसोरेद्धावभ्यासलोपश्चेत्यस्तेरेत्वस्य शाहाविति शास्तेः शाभावस्य चाभीयत्वेनासिद्धत्वात् हुझल्भ्योहेर्धिरिति हेर्धित्वमाभीयं प्रवर्तते । तथा जंघहीत्याद्यप्युदाहरणम्। हनधातोर्यङ्लुगन्तात् लोण्मध्यमपुरुषैकवचने सिपो हिभावे अनुदात्तोपदेशेति नलोपस्याभीयस्यासिद्धत्वादतोहेरित्याभीयो लुङ्न भवति। समानाश्रय इति किम्। पपुष इत्यत्र पाधातोर्लिटः क्वसौ लिटिधातोरिति द्वित्वे अभ्यासह्रस्वे क्वस्वन्तात् द्वितीयाबहुवचने शसि वसोस्सम्प्रसारणमाभीयमातोलोप इटि चेत्याल्लोपे आभीये कर्तव्ये असिद्धन्न भवति । आल्लोपः क्वसौ, सम्प्रसारणन्तु शसीति भिन्नाश्रयत्वात्। आभीये कर्तव्ये इति किम्। अभाजि राग इत्यत्र भञ्जेश्चिणि रञ्जेर्घञि च कृते। रञ्जेश्च, घञि च भावकरणयोरिति नलोपस्याभीयस्यानाभीयायामुपधावृद्धौ कर्तव्यायान्नासिद्धत्वम्। आभादित्यभिविधिः किम्। भाधिकारात् प्रागित्युक्ते भूयानित्यत्र बहोर्लोपो भू च बहोरिति बहोर्भूभावस्य ओर्गुणे कर्तव्ये असिद्धत्वन्न स्यात्। भस्येति सूत्रादूर्ध्वभावित्वादित्यलम् । इति **वुकोऽसिद्धत्वादिति** ॥ वुक आभीयस्य अचि श्नुधात्वि

बुग्युटावुवङ्यणोः सिद्धौ वक्तव्यौ । बभूव । बभूवतुः । बभूवुः ।

## २१८४ । आर्धधातुकस्येड्वलादेः । (७-२-३५)

वलादेरार्धधातुकस्येडागमः स्यात् । बभूविथ । बभूवथुः । बभूव । बभूव । बभूविव । बभूविम ।

## २१८५ । अनद्यतने लुट् । (३-३-१५)

भविष्यत्यनद्यतनेऽर्थे धातोर्लुट् स्यात् ।

## २१८६ । स्यतासी लृलुटोः । (३-१-३३)

'लृ' इति लृङ्लृटोर्ग्रहणम् । धातोः स्यतासी एतौ प्रत्ययौ स्तो लृलुटोः परतः । शबाद्यपवादः ।

---

त्युवङि आभीये कर्तव्ये असिद्धतया ऊकारस्योवङि लघूपधगुणे बभोवेति प्राप्ते सर्नान्यर्थः । वुग्विधिस्तु गुणवृद्धिबाधकत्वेन चरितार्थ इति भावः । **बुग्युटावुवङ्यणोरिति** ॥ यथासंख्यमन्वयः । **बभूवेति** ॥ णलो णित्वन्तु जगादेत्यादौ वृद्ध्यर्थम् । **बभूवतुरिति** । तस अतुसादेशे वुगादि पूर्ववत् । सकारस्य रुत्वविसर्गौ । **बभूवुरिति** ॥ झेरुसादेशे वुगादि पूर्ववत् । सिपस्थलि बभू थ इति स्थिते । **आर्धधातुकस्येति** ॥ नेड्वशिकृतीत्यस्मादनुवृत्त्यैव सिद्धेरिहेड्ग्रहणन्नकार्यमिति नेड्वशीति सूत्रभाष्ये प्रत्याख्यातम् । आर्धधातुकस्येति किम् । जुगुप्सति । अत्र गुप्तिज् किद्भ्यः इति सनो धातोरित्यधिकृत्य विहितत्वाभावान्नार्धधातुकत्वं । **बभूविथेति** ॥ सिपस्थलि तस्य इडागमे वुगादि पूर्ववत् । **बभूवथुरिति** । थसः अथुसादेशे वुगादि पूर्ववत् । सकारस्य रुत्वविसर्गौ । **बभूवेति** ॥ मद्ध्यमपुरुषबहुवचनस्य अकारस्सर्वादेश इति परस्मैपदानां णलतुसित्यत्रोक्तम् । वुगादि पूर्ववत् । **बभूवेति** ॥ मिपो णलि वुगादि पूर्ववत् । **बभूविवेति** ॥ वसो वादेशे वलादित्वादिडागमे वुगादि पूर्ववत् । नचात्र श्र्युकः कितीतीडागमनिषेधश्शङ्क्यः । कृसृभृवृस्तुद्रुस्रुश्रुवो लिटीति क्रयादिनियमादिट्सिद्धेः । **बभूविमेति** ॥ मसो मादेशे इडागमे वुगादि पूर्ववत् ॥ इति लिट्प्रक्रिया ॥ **अनद्यतन इति** ॥ धातोरित्यधिकृतम् । भविष्यति गम्यादयः इत्यतः भविष्यतीत्यनुवर्तते । भविष्यत्यनद्यतन इति धात्वर्थेऽन्वेति । तदाह । **भविष्यत्यनद्यतन इति** ॥ अनद्यतनशब्दस्तु परोक्षे लिडित्यत्र व्याख्यातः । उटावितौ । लुटस्तिबादयः । भू ति इति स्थिते कर्तरि शबिति शपि प्राप्ते । **स्यतासी इति** ॥ स्यश्च तासिश्चेति द्वन्द्वात् प्रथमाद्विवचनम् । तासेरिकार उच्चारणार्थः । लृ लुट् अनयोर्द्वन्द्वात् सप्तमीद्विवचनम् । **ग्रहणमिति** ॥ लृस्वरूपस्योभयत्राविशि-

## २१८७। आर्धधातुकं शेषः। (३-४-११४)

तिङ्शिद्भ्योऽन्यो धात्वधिकारोक्तः प्रत्यय एतत्संज्ञः स्यात्। इट्।

## २१८८। लुटः प्रथमस्य डारौरसः। (२-४-८५)

'डा' 'रौ' 'रस्' एते क्रमात्स्युः। डित्त्वसामर्थ्यादभस्यापि टेर्लोपः।

## २१८९। पुगन्तलघूपधस्य च। (७-३-८६)

पुगन्तस्य लघूपधस्य चाङ्गस्येको गुणः स्यात्सार्वधातुकार्धधातुकयोः। येन नाव्यवधानं तेन व्यवहितेऽपि। वचनप्रामाण्यात्। तेन भिनत्तीत्यादावनेकव्यवहितस्येको न गुणः। 'भवित्' 'आ' अत्रेको गुणे प्राप्ते।

---

ष्त्वादिति भावः। धातोरित्यधिकृतं तदाह। **धातोरिति** ॥ भू तास् ति इति स्थिते। **आर्धधातुकमिति** ॥ तिङ्शित्सार्वधातुकमिति पूर्वसूत्रोपात्ततिङ्शिदन्यश्शेषः तदाह। **तिङ्शिद्भ्योऽन्य इति**। **विहित इति** ॥ धातोरित्यधिकृतम् विहितविशेषणमाश्रीयत इति भावः। एवञ्च जुगुप्सतीत्यादौ गुप्तिज् किद्भ्य इत्यादि विहितसनादीनां धातोरित्युच्चार्य विहितत्वाभावेन आर्धधातुकत्वाभावादिडागमो न भवति। **एतत्संज्ञस्स्यादिति** ॥ आर्धधातुकसंज्ञक इत्यर्थः। **इडिति** ॥ तास् प्रत्ययस्योक्तसूत्रेणार्धधातुकत्वात् स्वतो वलादित्वाच्च आर्धधातुकस्येड्वलादेरितीडागम इत्यर्थः। भू इ तास् ति इति स्थिते। ऊकारस्य गुणे अवादेशे च भविता स् इति स्थिते। **लुटः प्रथमस्येति** ॥ डा रौ रस् एषां द्वन्द्वात् प्रथमाबहुवचनम्। लुट इति स्थानषष्ठी। लुडादेशस्य प्रथमपुरुषस्येत्यर्थः। **क्रमादिति** ॥ यथासंख्यलभ्यम्। ननु परस्मैपदस्य त्रयः प्रथमाः आत्मनेपदस्य च त्रयः प्रथमा इति स्थानिनः षट् आदेशास्तु त्रय इति कथं यथासंख्यमिति चेन्न। डाच रौच रस् चेति कृतद्वन्द्वानां डारौरसश्च डारौरसश्चेति एकशेषमाश्रित्य भाष्ये समाहितत्वात्। डाभावस्य चादेशत्वात् प्राक् प्रत्ययत्वाभावेन चुटू इत्यस्याप्रवृत्त्या सर्वादेशत्वम्। सति च तस्मिन् प्रत्ययत्वाच्चुटू इति टकारस्येत्संज्ञेति भाष्ये स्पष्टम्। एवंच भू ता स् आ इति स्थिते प्रक्रियां दर्शयति। **डित्वसामर्थ्यादिति** ॥ डाभावस्य कप्रत्ययावधिषु स्वादिष्वनन्तर्भूतत्वेन तस्मिन् परे भत्वाभावेऽपि डित्वसामर्थ्यात् टेरिति टिलोप इत्यर्थः। तथाच भवित् आ इति स्थिते। **पुगन्तेति** ॥ मिदेर्गुण इत्यतः गुण इत्यनुवर्तते। अङ्गस्येत्यधिकृतमवयवषष्ठ्यन्तमाश्रीयते। पुगन्तलघूपधस्येति तद्विशेषणम्। पुक् अन्तो यस्य तत् पुगन्तम्। लघ्वी उपधा यस्य तल्लघूपधम्। पुगन्तञ्च लघूपधञ्चेति समाहारद्वन्द्वात् षष्ठी। इको गुणवृद्धी इति परिभाषया इक इत्युपस्थितं स्थानषष्ठ्यन्तमाश्रीयते। तदाह। **पुगन्तस्येत्यादिना**। **अंगस्येक इति** ॥ अङ्गावयवस्येत्यर्थः। द्वेष्टि द्वेष्टा इत्याद्युदाहरणम्। नन्वत्राङ्गावयवस्येकः तदुपरितनहला व्यवधानात् सार्वधातुकपरत्वाभावात् कथमिह इको गुण

२१९० । दीधीवेवीटाम् । (१-१-६)

दीधीवेव्योरिटश्च गुणवृद्धी न स्तः । भविता ।

२१९१ । तासस्त्योर्लोपः । (७-४-५०)

तासेरस्तेश्च लोपः स्यात्सादौ प्रत्यये परे ।

२१९२ । रि च । (७-४-५१)

रादौ प्रत्यये प्रागवत् । भवितारौ । भवितारः । भवितासि । भवितास्थः । भवि-

---

इत्यत आह । **येन नेति** ॥ येन स्थान्युत्तरवर्णेन परनिमित्तस्य नाव्यवधानं व्यवधानं अवर्जनीयमिति यावत् । तेन वर्णेन व्यवहितेऽपि परनिमित्तं कार्यं भवतीत्यर्थः । कुत इत्यत आह । **वचनप्रामाण्यादिति** ॥ तथाविधवर्णव्यवधाने कार्यप्रवृत्तौ वचनारम्भस्यैव प्रमाणत्वादित्यर्थः । लघूपधस्यहीको गुणो विधीयते । उपधात्वञ्चान्त्यादलः पूर्वस्यैव भवति । ततश्चेक उपर्यन्त्यस्य वर्णस्याभावे इक उपधात्वाभावाल्लघूपधस्याङ्गस्य गुणविधानं निर्विषयमेव स्यात् । अतस्तद्व्यवधानं सोढव्यमिति भावः । ननु व्यवहितस्यापीको गुणप्रवृत्त्यभ्युपगमे भिनत्ति च्छिनत्तीत्यादौ इकारस्यापि गुणस्स्यादित्यत आह । **तेनेति** ॥ अवर्जनीयव्यवधानस्यैवाश्रयणेनेत्यर्थः । उपधात्वस्यैकमेव वर्णमुपरितनमादाय सम्भवादनेकवर्णव्यवधानं नादर्तव्यमिति भावः । **गुणे प्राप्ते इति** ॥ भवित् आ इति स्थिते डाभावसम्पन्नस्याकारस्य स्थानिवत्वेन सार्वधातुकतया तस्मिन् परे भवित् इत्यङ्गावयवस्योपधाभूतस्येकारस्य गुणे प्राप्ते सतीत्यर्थः । न च भूधातोर्विहितं सार्वधातुकं प्रति भूधातुरेवाङ्गम् । न तु भवित् इति विकरणविशिष्टमिति वाच्यम् । अङ्गसंज्ञारम्भे तदादिग्रहणेन विकरणविशिष्टस्याप्यङ्गत्वात् । **दीधीव इति** ॥ दीधीङ् दीप्तिदेवनयोः । वेवीङ् वेतिना तुल्ये । दीधिश्च वेवीश्च इट्चेति द्वन्द्वात् षष्ठी । इको गुणवृद्धी इत्यतो गुणवृद्धी इति । न धातुलोप इत्यतो नेति चानुवर्तते । तदाह । **दीधीवेव्योरित्यादिना** ॥ अथ प्रथमपुरुषद्विवचने तासि परे शबपवादे तासि इडागमे ऊकारस्य गुणे अवादेशे तसो रौभावे भवितास् रौ इति स्थिते रिचेति सकारस्य लोपं वक्ष्यन् तत्रानुवृत्तिप्रतिपत्तये तत्पूर्वसूत्रमुपन्यस्यति । **तासस्त्योरिति** ॥ तास्चास्तिश्चेति द्वन्द्वात् षष्ठी । सस्यार्धधातुक इत्यतोऽनुवृत्तेन सीति सप्तम्यन्तेनाधिकृताङ्गाक्षिप्तप्रत्ययस्य विशेषणात् तदादिविधिः । तदाह । **तासेरित्यादि** ॥ अस्तेरिति श्तिपा निर्देशः । अस् धातोरित्यर्थः । अलोऽन्त्यस्येत्यन्त्यस्य लोपः । भवितासीत्यनुपदमेवोदाहरणं वक्ष्यते । **रिचेति** ॥तासस्त्योर्लोप इति सूत्रं अस्ति वर्जमनुवर्तते । रीत्यनेनाङ्गाक्षिप्तप्रत्ययस्य विशेषणात्तदादिविधिः । तदाह । **रादाविति । प्रागवदिति** ॥ तासेर्लोप इत्यर्थः । अस्तिस्तु नानुवर्तते । ततो रादिप्रत्ययस्यासम्भवात् । आर्धधातुके तस्य भूभावविधानात् । एवञ्च भवितास् रावित्यत्र सलोपे सति रूपमाह । **भवितारावितिं । भवितार इति** ॥ झौ तासि इडागमे ऊकारस्य गुणे अवादेशे झेः रस् इत्यादेशे तासस्सकारस्य लोपे रसस्सकारस्य रुत्वविसर्गाविति भावः ।

तास्थ । भवितास्मि । भवितास्वः । भवितास्मः ।

## २१९३ । लृट् शेषे च । (३-३-१३)

भविष्यदर्थाद्धातोर्लृट् स्यात्क्रियार्थायां क्रियायामसत्यां सत्यां च । स्य इट् । भविष्यति । भविष्यतः । भविष्यन्ति । भविष्यसि । भविष्यथः । भविष्यथ । भविष्यामि । भविष्यावः । भविष्यामः ।

## २१९४ । लोट् च । (३-३-१६२)

विध्यादिष्वर्थेषु धातोर्लोट् स्यात् ।

## २१९५ । आशिषि लिङ्लोटौ । (३-३-१७३)

## २१९६ । एरुः । (३-४-८६)

---

**भवितासीति** ॥ सिपि तासि इडागमे ऊकारस्य गुणे अवादेशे तासस्त्योरिति सकारस्य लोप इति भावः । **भवितास्थ इति** ॥ थसि तासि इडागमे गुणे अवादेशे थसः सस्य रुत्वविसर्गाविति भावः । **भवितास्थेति** । बहुवचने थे तासि इटि गुणावादेशौ । **भवितास्मीति** ॥ मिपि तासि इटि गुणावादेशौ । **भवितास्व इति** ॥ वसि तासि इटि गुणे अवादेशे रुत्वविसर्गौ । एवं मसि भवितास्म इति रूपम् । **इति लुट्प्रक्रिया** ॥ **लृडिति** ॥ धातोरित्यधिकृतम् । भविष्यति गम्यादयः इत्यतो भविष्यतीत्यनुवृत्तम् धात्वर्थेऽन्वेति । तदाह । **भविष्यदर्थाद्धातोः लृट् स्यादिति** ॥ तुमुन्ण्वुलौ क्रियायां क्रियार्थायामिति पूर्वसूत्रे क्रियार्थायां क्रियायामित्यर्थनिर्देशः स्थितः ततोऽन्यश्शेषः । क्रियार्थायां क्रियायां असत्यामिति लभ्यते । चकारात् क्रियार्थायां क्रियायां सत्यामित्यपि लभ्यते । तदाह । **क्रियार्थायां क्रियायां असत्यां सत्याञ्चेति** ॥ ननु लृट् इत्येव सूत्रमस्तु । शेषे चेति मास्तु । भविष्यदर्थाद्धातोः लृट् इत्येतावतैव क्रियार्थायां क्रियायां असत्यां सत्याञ्च लृटो लाभ इति चेत् मैवम् । 'शयिष्यत इति स्थीयत' इत्यादौ भावकर्त्रोः तुमुन् ण्वुल्भ्यां लृटो बाधाभावार्थत्वात् । न च वासरूपविधिना तत्सिद्धिरिशङ्क्या । क्तल्युट् तुमुन् खलर्थेषु वा सरूपविधिर्नास्तीति तन्निषेधादित्यास्तां तावत् । **स्य इडिति** ॥ लृटस्तिपि स्यतासी लृलुटो-रिति स्यप्रत्ययः । तस्य वलाद्यार्धधातुकत्वात् इडागम इत्यर्थः । भविष्यतीति स्य प्रत्ययस्य इटि ऊकारस्य गुणे अवादेशे प्रत्ययावयवत्वात् सकारस्य षत्वे भविष्यतीति रूपमित्यर्थः । तसादौ भविष्यत इत्याद्यप्येवं योज्यम् । भविष्यामीत्यादौ अतो दीर्घो यञीति दीर्घः ॥ **इति लृट् प्रक्रिया** ॥ **लोट्चेति** ॥ विधिनिमन्त्रणामन्त्रणाधीष्टसम्प्रश्नप्रार्थनेषु इत्यनुवर्तते । तदाह । **विध्यादिष्विति** ॥ विध्यादिशब्दा अनुपदमेव लिङ्विधौ व्याख्यास्यन्ते । **आशिषीति** ॥ आशिष्यपीत्यर्थः । आशासनमाशीः इष्टप्राप्तीच्छा । लोटस्तिपि विशेषमाह । **एरुरिति** ॥ एः

लोट इकारस्य उः स्यात् । भवतु ।

**२१९७ । तुह्योस्तातङ्ङाशिष्यन्यतरस्याम् । (७-१-३५)**

**आशिषि तुह्योस्तातङ्वा स्यात् । अनेकाल्त्वात्सर्वादेशः । यद्यपि 'ङिच्च' (४३) इत्ययमपवादस्तथाप्यनन्यार्थङित्त्वेष्वनङादिषु चरितार्थ इति गुणवृद्धिप्रतिषेधसम्प्रसारणाद्यर्थतया सम्भवत्प्रयोजनङकारे तातङि मन्थरं प्रवृत्तः परेण बाध्यते । इहोत्सर्गापवादयोरपि समबलत्वात् । भवतात् ।**

---

उः इति च्छेदः । एरिति षष्ठ्यन्तम् । इवर्णस्येति लभ्यते । लोटो लङ्वदित्यतो लोट इत्यनुवर्तते । तदाह । **लोट इति । भवत्विति** ॥ तिपि शपि गुणे अवादेशे तिप इकारस्य उकारः । अथाशिषि लोटो विशेषमाह । **तुह्योरिति** ॥ तुश्च हिश्च तुही तयोरिति विग्रहः । तातङि ङकार इत् । अकार उच्चारणार्थः । तादित्यादेशश्शिष्यते । ननु किमस्य अनेकाल्त्वात्सर्वादेशता उत ङित्वादन्तादेशतेत्यत आह । **अनेकाल्त्वात् सर्वादेश इति** ॥ ननु ङिच्चेत्यस्य सर्वादेशापवादतया अनङादेरिव तातङोऽप्यन्त्यादेशत्वमेवोचितमित्याशङ्कते । **यद्यपि ङिच्चेत्ययमपवाद इति** ॥ परिहरति । **तथापीति** ॥ परेण बाध्यते इत्यन्वयः । तातङादेशे ङिच्चेत्ययं विधिः अनेकाल् शित् सर्वस्येति परेण बाध्यत इत्यर्थः । ननु परनित्यान्तरङ्गापवादानामुत्तरोत्तरं बलीय इति परापेक्षया अपवादस्य प्रबलत्वात् ङिच्चेत्यन्तादेशत्वमेव तातङि युक्तमित्यत आह । **तातङि मन्थरं प्रवृत्त इति** ॥ ङिच्चेति विधिरिति शेषः । तातङ्विषये ङिच्चेति विधिर्मन्थरम्प्रवृत्त इति हेतोः परेण सर्वादेशविधिना बाध्यत इत्यर्थः । कुतो मन्दप्रवृत्तिकत्वमित्यत आह । **अनन्यार्थेत्यादिना** ॥ अन्तादेशत्वादन्योऽर्थो यस्य ङित्त्वस्य न विद्यते तदनन्यार्थम् । तथाविधं ङित्वं येषान्तेषु अनङादिषु ङिच्चेति विधिः चरितार्थः । लब्धप्रयोजनक इति कृत्वा मन्दम्प्रवृत्त इत्यर्थः । तातङो ङित्वन्तु अन्तादेशत्वापेक्षया अनन्यार्थं नेत्याह । **सम्भवत्प्रयोजनङकारे इति** ॥ सम्भवन्ति प्रयोजनानि अन्यानि यस्य सः सम्भवत्प्रयोजनः । तथाविधः ङकारः यस्य तथाविधे तातङीत्यर्थः । कथं सम्भवत्प्रयोजनकत्वमित्यत आह । **गुणवृद्धिप्रतिषेधसम्प्रसारणाद्यर्थतयेति** ॥ द्विष्टादित्यादौ लघूपधादिगुणनिषेधः । स्तुतात् युतादित्यादावुतोवृद्धिर्लुकि हलीति विहिताया वृद्धेर्निषेधः । वशकान्तौ उष्टादित्यत्र ग्रहिज्याव‍यीति सम्प्रसारणम् । आदिना ब्रूतादित्यत्र ब्रुव ईडितीटोऽभावस्य संग्रहः । ननु तातङ्विषये ङिच्चेति विधिर्मन्दम्प्रवर्तताम् । अथापि परनित्यान्तरङ्गापवादानामुत्तरोत्तरं बलीय इति न्यायेन परस्यापि सर्वादेशविधेरपवादभूतेन ङिच्चेत्यनेन बाध एवोचित इत्यत आह । **इहेति** ॥ इह तातङ्विषये अनेकाल्शित्सर्वस्येति सामान्यशास्त्रस्य ङिच्चेति विशेषशास्त्रस्य च समबलत्वात् । सामान्यशास्त्रं विशेषशास्त्रेण न बाध्यत इत्यर्थः । अयं भावः । अपवादशास्त्रस्य परनित्यान्तरङ्गापेक्षया प्राबल्ये निरवकाशत्वमेव बीजम् । प्रकृते च ङिच्चेति विधिः अनङादिङित्वमन्तादेशत्वैकप्रयोजनकम् । प्रयोजनान्तरविरहेण निरवकाशत्वात् । झटिति परिगृह्णन् कृतार्थतामनुभवन् तातङो ङित्वम् प्रयोजनान्तरसत्त्वेन सावकाशत्वादुपेक्षत इति ।

## २१९८। लोटो लङ्वत्। (३-४-८५)

**लोटो लङ इव कार्यं स्यात्। तेन तामादयः सलोपश्च। तथा हि।**

## २१९९। तस्थस्थमिपां तांतंतामः। (३-४-१०१)

**ङितश्चतुर्णामेषां तामादयः क्रमात्स्युः।**

## २२००। नित्यं ङितः। (३-४-९९)

**सकारान्तस्य ङिदुत्तमस्य नित्यं लोपः स्यात्। 'अलोऽन्त्यस्य' (४२) इति सस्य लोपः। भवताम्। भवन्तु।**

## २२०१। सेर्ह्यपिच्च। (३-४-८७)

---

तदुक्तं भाष्ये। ङित्त्वस्य सावकाशत्वाद्विप्रतिषेधात्तातङ् सर्वादेश इत्यभिधाय विस्तरभिया विरम्यते। **भवतादिति**॥ आशिषि लोटस्तिपि शपि गुणे अवादेशे उकारे तोस्तातङ् सर्वादेशः। ङकारइत्। द्वितीयतकारादकारउच्चारणार्थः। **लोटो लङ्वदिति**॥ लङ इव लङ्वत्। तत्र तस्येवेति षष्ठ्यन्ताद्वतिः। तदाह। **लोटो लङ इवेति**॥ ननु तर्हि लुङ् लङ् लृङ्क्ष्वडुदात्त इत्यडागमोऽपि स्यादित्यत आह। **तेनेति**॥ लङ इति स्थान-षष्ठ्यन्तात् वतिप्रत्ययाश्रयणेनेत्यर्थः। अडागमस्तु न लङो विधीयते। किन्तु लङि अङ्गस्येति भावः। केन तामादयः। केन वा सलोप इत्यत आह। **तथाहीति**॥ तामादयस्सलोपश्च यथा ज्ञायन्ते तथा स्पष्टमुच्यन्त इत्यर्थः। **तस्थ इति**॥ तस् थस् थ मिप्, एषां द्वन्द्वात् षष्ठीबहुवचनम्। ताम् तम् त अम्, एषां द्वन्द्वात् प्रथमाबहुवचनम्। नित्यं ङित इत्यस्मात् ङित इत्यनुवर्तते। तदाह। **ङितश्चतुर्णामिति**॥ ङितो लकारस्य आदेश-भूतानामित्यर्थः। **क्रमादिति**॥ यथासंख्यसूत्रलभ्यमिदम्। **नित्यङ्ङित इति**॥ उत्तमपुरुषएवास्य सूत्रस्य प्रयोजनं। प्रसङ्गादिहोपन्यस्तम्। स उत्तमस्येति सूत्रमनुवर्तते। तत्र स इति षष्ठ्यन्तम्। तेन उत्तमो विशेष्यते। तदन्तविधिः। इतश्च लोप इत्यतो लोप इत्यनुवर्तते। तदाह। **सकारान्तस्य ङिदुत्तमस्येति**॥ ङितो लकारस्य य आदेशः उत्तमपुरुषः तस्येत्यर्थः। वैतोन्यत्रेत्यस्माद्वाग्रहणानुवृत्तिनिवृत्तये नित्यग्रहणम्। अलो-ऽन्त्यस्येत्यन्त्यलोपः। **भवतामिति**॥ लोटस्तस्। तस्य तामादेशः। शप् गुणावादेशौ। न च तामादेशस्य सर्वादेशत्वात् प्राक् विभक्तित्वाभावान्न विभक्तौ तु स्मा इति निषेधाभावात् मकार-स्येत्संज्ञा शंक्या। संयोगान्तलोपेन मकारान्तरप्रश्लेषेण उपदेशेऽन्त्यत्वाभावात्। **भवन्त्विति**॥ लोटो झेः अन्तादेशे शपि गुणे अवादेशे द्वयोरकारयोः पररूपे एरुरितीकारस्य उकारे भवन्त्विति रूपम्। अथ लोटः सिपि शपि गुणावादेशयोः भव सि इति स्थिते। **सेर्हीति**॥ हि इति लुप्तप्रथमाकम्। लोटो लङ्वदित्यतो लोट इत्यनुवर्तते। तदाह।

**२२४९। धि च। (८-२-२५)**

धादौ प्रत्यये परे सलोपः स्यात्। एधिताध्वे।

**२२५०। ह एति। (७-४-५२)**

तासस्त्योः सस्य हः स्यादेति परे। एधिताहे। एधितास्वहे। एधितास्महे। एधिष्यते। एधिष्येते। एधिष्यन्ते। एधिष्यसे। एधिष्येथे। एधिष्यध्वे। एधिष्ये। एधिष्यावहे। एधिष्यामहे।

---

नावसरे वक्ष्यते। **एधामासेति** ॥ नचात्रानुप्रयुज्यमानाभ्यामस्तिभूभ्यामाम्प्रत्ययवदित्यात्मनेपदं शङ्क्यम्। तत्र कृञ्ग्रहणेन प्रत्याहारग्रहणाभावस्य भाष्ये उक्तत्वात्। **एधामासतुरित्यादीति** ॥ एधामासुः। एधामासिथ। एधामासथुः। एधामास। एधामास। एधामासिव। एधामासिम। **इति लिट्प्रक्रिया** ॥ **एधितेति** ॥ लुटस्तादेशे एध् त इति स्थिते शबपवादस्तास् इट् लुटःप्रथमस्येति डा टिलोपः एधितेति रूपम्। दीधीवेवीटामिति लघूपधगुणो न। **एधिताराविति** ॥ लुट आताम् तास् इट् आतामित्यस्य रौभावः। रिचेति सलोपः। **एधितार इति** ॥ झस्य रस् तास् इट् रिचेति सलोपः रुत्वविसर्गौ। **एधितास इति** ॥ थासस्से तास् इट् तासस्त्योरिति सलोपः। **एधितासाथ इति** ॥ आथाम् टेरेत्वं तास् इट्। अथ ध्वमि टेरेत्वे तासि इटि एधितास् ध्वे इति स्थिते। **धिचेति** ॥ सस्यार्धधातुक इत्यतस्सस्येत्यनुवर्तते। तासस्त्योरित्यतो लोप इति। अङ्गाक्षिप्तप्रत्ययो धात्यनेन विशेष्यते। तदादिविधिः। तदाह। **धादाविति** ॥ तासस्सलोपे एधिताध्वे इति रूपम्। अथ लुटः इडादेशे एत्वे तासि इटि एधितास् ए इति स्थिते। **हएतीति** ॥ ह इति प्रथमान्तम्। अकार उच्चारणार्थः। सस्यार्धधातुक इत्यतः सस्येति तासस्त्योर्लोप इत्यतः तासस्त्योरिति चानुवर्तते। तदाह। **तासस्त्योरिति** ॥ तासस्सस्य हकारे एधिताहे इति रूपम्। **एधितास्वहे इति** ॥ लुटो वहिभावः टेरेत्वम् तास् इट्। एवं एधितास्महे इति। तत्र महिभावो विशेषः ॥ **इति लुट्प्रक्रिया** ॥ **एधिष्यत इति** ॥ लृटस्तादेशे टेरेत्वम्। स्यतासी इति शबपवादः स्यः इट् प्रत्ययावयवत्वात् षत्वम्। **एधिष्येते इति** ॥ आताम् टेरेत्वम् स्यः इट् आतो ङित इत्याकारस्य इय्। लोपो व्योरिति यलोपः आद्गुणः षत्वम्। **एधिष्यन्त इति** ॥ झस्य टेरेत्वं झकारस्य अन्तादेशः स्यः इट् पररूपं षत्वम्। थासादावपि लटीव सुयोजमिति मत्वा रूपाणि न प्रदर्शितानि। तत्र थासस्से स्यः इट् षत्वम् एधिष्यस इति रूपम्। एधिष्येते इतिवदाथामि एधिष्येथे इति रूपम्। ध्वम एत्वे स्यः इट् षत्वम् एधिष्यध्वे इति रूपम्। इट एत्वे स्यः इडागमः षत्वम् अतो गुण इति पररूपम्। एधिष्ये इति रूपम्। वहिमहोष्टेरेत्वम् स्यः इट् अतो

## २२५१ । आमेतः । (३-४-९०)

लोट एकारस्याम्स्यात् । एधताम् । एधेताम् । एधन्ताम् ।

## २२५२ । सवाभ्यां वामौ । (३-४-९१)

सवाभ्यां परस्य लोडेतः क्रमात् 'व' 'अम्' एतौ स्तः । एधस्व । एधेथाम् । एधध्वम् ।

## २२५३ । एत ऐ । (३-४-९३)

लोडुत्तमस्य एत ऐ स्यात् । आमोऽपवादः । एधै । एधावहै । एधामहै ।

## २२५४ । आडजादीनाम् । (६-४-७२)

अजादीनामाट् स्याल्लुङादिषु । अटोऽपवादः । 'आटश्च' (२६९) । ऐधत ।

---

दीर्घः एधिष्यावहे एधिष्यामहे इति रूपे । **इति लृट्प्रक्रिया** ॥ **आमेत इति** ॥ आम् एतः इति च्छेदः । लोटो लङ्वदित्यतो लोट इत्यनुवर्तते । तदाह । **लोट एकारस्येति** ॥ लोडादेशावयवस्य एकारस्येत्यर्थः । **एधतामिति** ॥ लोटस्तादेशे टेः एत्वे आमादेशे शपि रूपम् । **एधेतामिति** ॥ आताम् टेरेत्वं शप सार्वधातुकमपिदिति ङित्त्वादातो ङित इत्याकारस्य इय् गुणः यकारलोपः आमेत इत्येकारस्य आम् । **एधन्तामिति** ॥ झस्य टेरेत्वे शपि झकारस्य अन्तादेशे एकारस्य आम् । अथ लोटस्थास्सेभावे शपि एधसे इति स्थिते । **सवाभ्यामिति** ॥ सश्च वश्च सवौ । ताभ्यामिति विग्रहः । अकार उच्चारणार्थः । वश्च अम् च वामौ लोटो लङ्वदित्यस्मात् लोट इति आमेत इत्यस्मादेत इति चानुवर्तते । तदाह । **सका-रेति** ॥ आमेत इत्यस्यापवादः । **एधस्वेति** ॥ एधसे इत्यत्र एकारस्य व इति वकाराकारसं-घात आदेशः । **एधेथामिति** ॥ आथाम् टेरेत्वं शप् आतो ङित इत्याकारस्य इय् गुणः यलोपः आमेत इत्याम् । **एधध्वमिति** ॥ ध्वमि शप् टेरेत्वे कृते सवाभ्यामिति वकारात् परत्वादेकारस्य अम् । उत्तमपुरुषैकवचने इटि टेरेत्वे शपि आमेत इत्येकारस्य आमि प्राप्ते । **एत ऐ इति** ॥ ऐ इति लुप्तप्रथमाकम् । लोटो लङ्वदित्यस्माल्लोट इति आडुत्तमस्य पिच्चेत्यस्मा-दुत्तमस्येति आमेत इत्यस्मादेत इति चानुवर्तते । तदाह । **लोडुत्तमस्येति** । **एधै इति** ॥ एध ए इति स्थिते एकारस्य ऐत्वे आडुत्तमस्येत्याडागमे आटश्चेति वृद्धौ वृद्धिरेचीति वृद्धिः । **एधावहै** । **एधामहै इति** ॥ वहिमहोष्टेरेत्वे शपि एकारस्य ऐत्वे आटि सवर्ण-दीर्घः ॥ **इति लोट्प्रक्रिया** ॥ अथ एधधातोर्लङि लुङ्लङ्लृङ्क्ष्वडुदात्त इत्यडागमे वृद्धिम्बाधित्वा परत्वादतोगुण इति पररूपे प्राप्ते । **आडजादीनामिति** । **लुङादि-ष्विति** ॥ लुङ्लङ्लृङ्क्ष्वित्यनुवृत्तेरिति भावः । **अटोऽपवाद इति** ॥ आटि सति

ऐधेताम् । ऐधन्त । ऐधथाः । ऐधेथाम् । ऐधध्वम् । ऐधे । ऐधावहि । ऐधामहि ।

**२२५५ । लिङः सीयुट् । (३-४-१०२)**

लिङात्मनेपदस्य सीयुडागमः स्यात् । सलोपः । एधेत । एधेयाताम् ।

**२२५६ । झस्य रन् । (३-४-१०५)**

लिङो झस्य रन्स्यात् । एधेरन् । एधेथाः । एधेयाथाम् । एधेध्वम् ।

**२२५७ । इटोऽत् । (३-४-१०६)**

लिङादेशस्येटोऽत्स्यात् एधेय । एधेवहि । एधेमहि । आशीर्लिङि आर्ध-

---

पररूपं स्यादिति भावः । आटश्चेत्यनन्तरं वृद्धिरिति शेषः । यद्यपि वृद्धिरेचीति एत्येधतीति वा वृद्धौ इदं सिध्यति । तथापि ऐक्षतेत्याद्यर्थम् सूत्रमिहापि न्याय्यत्वादुपन्यस्तम् । **ऐधतेति** ॥ लङस्तादेशे शपि आडागमे आटश्चेति वृद्धिः । लङादेशानां टिदादेशत्वाभावात् एत्वम न भवति । आडजादीनामिति सूत्रं भाष्ये प्रत्याख्यातम् । **ऐधेतामिति** ॥ आतामि शपि आटि वृद्धिः । आतोङित इत्याकारस्य इय् । आद्गुणः यलोपः । **ऐधन्तेति** ॥ झेरन्तादेशः शप आट् वृद्धिः । **ऐधथा इति** ॥ थास् शप् आट् वृद्धिः । **ऐधेथामिति** ॥ आथाम् शप आट् वृद्धिः इय् आद्गुणः यलोपः । **ऐधध्वमिति** ॥ ध्वम् शप् आट् वृद्धिः । **ऐधे इति** ॥ इट् शप् आद्गुणः आटो वृद्धिः । **ऐधावहि** । **ऐधामहि इति** ॥ वहि-महोःशप आट् वृद्धिः अतो दीर्घः ॥ **इति लङ्प्रक्रिया** ॥ **लिङस्सीयुडिति** ॥ स्पष्टम । परस्मैपदानां लिङादेशानां यासुडागमविधानादात्मनेपदविषयमिदम् । सीयुटि टकार इत् । उकार उच्चारणार्थः । **सलोप इति** ॥ लिङस्सलोप इत्यनेनेति शेषः । **एधेतेति** ॥ लिङस्तादेशः सीयुट् शप सलोपः आद्गुणः यलोपः । **एधेयातामिति** ॥ आतामि सीयुट् शप सलोपः आद्गुणः । **झस्य रन्निति** ॥ लिङस्सीयुडित्यतो लिङ इत्यनुवर्तते । तदाह । **लिङो झस्येति** ॥ लिङादेशस्य झस्येत्यर्थः । अनेकाल्त्वात्सर्वादेशः । **एधेरन्निति** ॥ झस्य रन शप सीयुट् सलोपः आद्गुणः यलोपः । **एधेथा इति** ॥ थास् सीयुट् शप सीयुटस्सस्य लोपः आद्गुणः यलोपः थासस्सस्य रुत्वविसर्गौ । **एधेयाथामिति** ॥ आथाम् सीयुट् सलोपः शप आद्गुणः । **एधेध्वमिति** ॥ ध्वं सीयुट् शप् सलोपः आद्गुणः यलोपः । **इटोऽदिति** ॥ इटः अत् इति च्छेदः । लिङस्सीयुडित्यतो लिङ इत्यनुवर्तते । तदाह । **लिङादेशस्येति** ॥ अत्र घेर्ङितीत्यत्रेव आदेशे तकार उच्चारणार्थ एव नत्वित्संज्ञक इति शब्देन्दुशेखरे दिव औदित्यत्र प्रपञ्चितम् । इत्संज्ञक एवेत्यन्ये । न विभक्ताविति निषेधस्तु न । आदेशत्वात् प्राक् विभक्तित्वाभावात् । झस्य रन्नित्यत्र तु लक्ष्यानुरोधेन संयोगान्तलोपमाश्रित्य नकारान्तरप्रश्लेषादुपदेशे अन्त्यत्वाभावान्नकारस्य नेत्संज्ञेत्यलम् । **एधेयेति** ॥ इट् तस्य अकारादेशः । सीयुट् शप् सलोपः आद्गुणः । **एधेवहि** । **एधेमहीति** ॥ वहिमहोस्सीयुट् सलोपः शप

धातुकत्वाल्लिङः सलोपो न । सीयुट्सुटोः प्रत्ययावयवत्वात्षत्वम् । एधिषीष्ट । एधिषीयास्ताम् । एधिषीरन् । एधिषीष्ठाः । एधिषीयास्थाम् । एधिषीध्वम् । एधिषीय । एधिषीवहि । एधिषीमहि । ऐधिष्ट । ऐधिषाताम् ।

## २२५८ । आत्मनेपदेष्वनतः । (७-१-५)

अनकारात्परस्यात्मनेपदेषु झस्य 'अत्' इत्यादेशः स्यात् । ऐधिषत । ऐधिष्ठाः । ऐधिषाथाम् । 'इणःषीध्वं लुङ्लिटां धोऽङ्गात्' (२२४७) ।

---

आद्गुणः यलोपः । **इति विधिलिङ्प्रक्रिया ॥ आर्धधातुकत्वादिति** ॥ लिङाशिषीत्यनेनेति भावः । **सलोपो नेति** ॥ सार्वधातुकग्रहणस्य लिङस्सलोपः इत्यत्रानुवर्तनादिति भावः । **सीयुट्सुटोरिति** ॥ लक्ष्यभेदात्पुनःप्रवृत्तिरिति भावः । युगपदेवोभयोः षत्वमित्यर्थः । **एधिषीष्टेति** ॥ आशिषि लिङः तादेशः । आर्धधाधुकत्वात् न शप् सीयुट् तकारस्य सुट् सीयुट्सुटकारात् प्रागिडागमः यलोपः सीयुटस्सुटश्च सकारस्य षत्वं तकारस्य ष्टुत्वेन टकारः । **एधिषीयास्तामिति** ॥ आताम् सीयुट् आकारादुपरि तकारात्प्राक् सुट् । सीयुटः प्रागिट् । तत उत्तरस्य सकारस्य षत्वम् । **एधिषीरन्निति** ॥ झस्य रन् । सीयुट् इडागमः यकारलोपः षत्वम् । **एधिषीष्ठा इति** ॥ थास् सीयुट् थकारस्य सुट् सीयुटः प्रागिट् सकारद्वयस्य षत्वम् । थकारस्य ष्टुत्वेन ठकारः । रुत्वविसर्गौ । **एधिषीयास्थामिति** ॥ आथाम् सीयुट् । आकारादुपरि थकारात् प्राक् सुट् सीयुटः प्रागिट् । तत उत्तरस्य सकारस्य षत्वम् । **एधिषीध्वमिति** ॥ ध्वम् सीयुट् यलोपः सीयुटः प्रागिट् षत्वम् । इणः परत्वेऽपि इणन्तादङ्गात्परत्वन्नास्ति । इटः प्रत्ययभक्तत्वात् । ततश्च इणःषीध्वमिति ढत्वं न भवति । **एधिषीयेति** ॥ इटः अत् सीयुट् इट् षत्वम् । **एधिषीवहि । एधिषीमहीति** ॥ वहिमह्योस्सीयुट् इट् षत्वम् । **इत्याशीर्लिङ्प्रक्रिया ॥ ऐधिष्टेति** ॥ लुङस्तादेशः च्लिः सिच् इट् धातोराट् वृद्धिः षत्वम् ष्टुत्वम् । **ऐधिषातामिति** ॥ आताम् च्लिः सिच् इट् आट् वृद्धिः षत्वम् । अथ झस्य आदेर्झकारस्य झोऽन्त इत्यन्तादेशे प्राप्ते । **आत्मनेपद इति** ॥ झोऽन्त इत्यतः झ इति षष्ठ्यन्तमनुवर्तते । आत्मनेपदेष्विति परसप्तमी । आत्मनेपदावयवस्य झकारस्येति लभ्यते । अदभ्यस्तादित्यतः अदित्यनुवर्तते । न अत् अनत् । तस्मादिति विग्रहः । तदाह । **अनकारादित्यादिना । ऐधिषतेति** ॥ झावयवझकारस्य अत् इत्यादेशः च्लिः सिच् इट् आट् वृद्धिः षत्वम् । **ऐधिष्ठा इति** ॥ थास् च्लिः सिच् इट् आट् वृद्धिः षत्वं थकारस्य ष्टुत्वेन ठकारः रुत्वविसर्गौ । **ऐधिषाथामिति** ॥ आथाम् च्लिः सिच् इट् आट् वृद्धिः षत्वम् । अथ ध्वमो धस्य ढत्वम् स्मारयति । **इणःषीध्वमिति । ऐधिढ्वमिति** ॥ ध्वम् च्लिः सिच् इट् आट् वृद्धिः धि चेति सस्य लोपः । इणःषीध्वमिति धकारस्य ढत्वम् । इटः ङ्गसिज्भक्ततया सिजन्ताङ्गान्तर्भूतत्वेन इडन्तस्य इणन्ताङ्गत्वादिति भावः । **इड्भिन्न एवेति ॥ उत्तरसूत्रे विभाषेट इत्यत्र**

ऐधिढ्वम्। इङ्भिन्न एव इणिह गृह्यत इति मते तु ऐधिध्वम् ढधयोर्वस्य मस्य च द्वित्वविकल्पात्षोडश रूपाणि । ऐधिषि । ऐधिष्वहि । ऐधिष्महि । ऐधिष्यत। ऐधिष्येताम् । ऐधिष्यन्त। ऐधिष्यथाः। ऐधिष्येथाम् । ऐधिष्यध्वम् । ऐधिष्ये। ऐधिष्यावहि । ऐधिष्यामहि । उदात्तत्वाद्वलादेरिट् । प्रसङ्गादनुदात्ताः संगृह्यन्ते ।

> ऊदृदन्तैर्यौतिरुक्ष्णुशीस्नुनुक्षुश्विडीङ्श्रिभिः ।
> वृङ्वृञ्भ्यां च विनैकाचोऽजन्तेषु निहताः स्मृताः ॥

---

इङ्ग्रहणात् पूर्वसूत्रे इणःषीध्वमित्यत्र इङ्भिन्न एव इण् गृह्यत इति केचिदाहुः । तन्मतेतु प्रकृते इटः परत्वात् धकारस्य ढत्वाभावे ऐधिध्वमित्येव रूपमित्यर्थः । इदन्तु मतान्तरं भाष्यानारूढमिति सूचयितुं तुशब्दः । **ढधयोरिति** ॥ मतभेदमाश्रित्येदं । तत्र ढत्वाभावपक्षे धकारस्य अनचिचेति द्वित्वविकल्पात् द्विधमेकधमिति रूपद्वयम् । एवं ढत्वे द्विढं एकढं इति रूपद्वयम् । रूपचतुष्टयेऽपि यणो मयो द्वे वाच्ये इत्यत्र मय इति पञ्चमीमाश्रित्य वकारस्य द्वित्वविकल्पादेकवकाराणि द्विवकाराणि च प्रागुक्तानि चत्वारि रूपाणि भवन्ति । तथाच अष्टौ रूपाणि सम्पन्नानि । मकारस्य द्वित्वविकल्पादेतान्यष्टौ रूपाणि एकमकाराणि द्विमकाराणि चेति षोडश रूपाणि सम्पन्नानीत्यर्थः । **ऐधिषीति** ॥ लुङः इडादेशः च्लिः सिच् इडागमः आट् वृद्धिः । वहिमह्योस्तु च्लेस्सिचि इडागमे आटि वृद्धौ ऐधिष्वहि ऐधिष्महीति रूपे । **इति लुङ्प्रक्रिया** ॥ **ऐधिष्यतेति** ॥ लृङः तादेशः स्यः इट् आट् वृद्धिः षत्वम् । **ऐधिष्येतामिति** ॥ आतां स्यः इट् आकारस्य इय् आद्गुणः यलोपः आट् वृद्धिः षत्वम् । **ऐधिष्यन्तेति** ॥ झावयवमकारस्यान्तादेशः स्यः इट् आट् वृद्धिः षत्वम् । **ऐधिष्यथा इति** ॥ थास् स्यः इट् आट् वृद्धिः रुत्वविसर्गौ । **ऐधिष्येथामिति** ॥ आथाम् स्यः इट् आकारस्य इय् आद्गुणः यलोपः आट् वृद्धिः षत्वम् । **ऐधिष्यध्वमिति** ॥ ध्वम् स्यः इट् आट् वृद्धिः षत्वम् । **ऐधिष्य इति** ॥ इडादेशः स्यः इडागमः षत्वम् आद्गुणः वहिमह्योस्तु स्यः इट् अतो दीर्घः आट् वृद्धिः षत्वम् ऐधिष्यावहि ऐधिष्यामहि इति रूपे । नन्वेधधातोरनुदात्तेत्कत्वात् एकाच उपदेशेऽनुदात्तादितीण्णिषेधः कुतो न स्यादित्यत आह । **उदात्तत्वादिति** ॥ एधधातुर्यद्यपि अनुदात्तेत् । तथापि अनुदात्तस्येतः लोपे सति परिशिष्टो धातुर्नानुदात्त इति भावः । ननु कतिपये धातवः पाणिनिना अनुदात्ता उच्चरिता इति कथमिदानीन्तनैरवगन्तव्यमित्यत आह । **प्रसंगादिति** ॥ स्मृतस्योपेक्षानर्हत्वम्प्रसङ्गः । पाणिनिपठितानामनुदात्तधातूनान्तदानीन्तनशिष्यपरम्परया आनुनासिक्यवदिदानीं ज्ञानं सम्भवतीति भावः । **ऊदृदन्तैरिति** ॥ अजन्तेषु धातुषु ऊदन्तैः ऋदन्तैश्च धातुभिः विना यु रु क्ष्णु शीङ् स्नु नु क्षु श्वि डीङ् श्रि

शक्लपच्मुचिरिच्वच्विच्सिच्प्रच्छित्यज्निजिर्भजः ।
भञ्जभुज्भ्रस्जमस्जियज्युज्रुज्रञ्ज्विजिर्स्वञ्जिसञ्जसृजः ॥
अद्क्षुद्खिद्छिद्तुदिनुदः पद्यभिद्विद्यतिर्विनद् ।
शद्सदी स्विद्यति स्कन्दिहदी क्रुध् क्षुधिबुध्यती ॥
बन्धिर्युधिरुधी राधिव्यधशुधः साधिसिध्यती ।
मन्यहन्नाप्क्षिप्छुपितप्तिपस्तृप्यतिदृप्यती ॥
लिप्लुप्वप्शप्स्वप्सृपियभ्रभ्लभ्गम्नम्यमो रमिः ।

---

एतैश्च धातुभिर्विना वृङ् वृञ् आभ्याञ्च विना अन्ये एकाचः [illegible] अनुदात्ताः स्मृताः । पाणिनिशिष्यपरम्परया ज्ञाता इत्यर्थः । अथ हलन्तेषु अनुदात्तान् [illegible] ।
**शक्ल् पच् मुचीति** ॥ शक्ल पच मुच रिच वच विच [illegible] जिर् भज् एषां द्वन्द्वः । तत्र कान्तेषु शक्ल इत्येकः । [illegible] पाठो दृश्यते । चान्तेषु पच् मुच् रिच् वच विच सिच [illegible] ग्रहणं प्रसिद्धत्वात् । न तु पचि व्यक्तीकरणे इत्यस्येत्याहुः । [illegible] न तु मुचि कल्कन इति भौवादिकस्य । अविशेषात्सर्वस्येत्यन्ये । [illegible] उच्चारणार्थः । णिजिरित्यत्र इर इत्संज्ञा वक्ष्यते । [illegible] पदम् । जान्तेषु त्यज् निज् भज भञ्ज् भुज् भ्रस्ज [illegible] विज् स्वञ्ज् सञ्ज् सृज् इति पञ्चदश । अद क्षुदित्यादि नुद [illegible] रिकार उच्चारणार्थः । पद्यभिदित्येकम्पदम् । समाहारद्वन्द्वः । [illegible] विद्यतिरिति श्यना निर्देशः । विनदिति श्नमा निर्देशः । [illegible] समाहारद्वन्द्वः । सदिस्कन्दिहदिक्षुधि इति इका निर्देशः । [illegible] श्यन्विकरणयोर्निर्देशः । ततश्च दान्तेषु अद् क्षुद् खिद् छिद् तुद नुद् [illegible] (विद् श्यन्विकरणः) (विनद् श्नम्विकरणः) शद सद् (स्विद् श्यन्विकरणः) स्कन्द् हद् इति पञ्चदश । बन्धिरिति इका निर्देशः । युधिरुधी इत्येकम्पदम् इका निर्देशः । [illegible] शुधः इत्येकं पदम् । राधीति इका निर्देशः । साधिसिध्यती इति द्वन्द्वः । साधीति इका निर्देशः । ततश्च धान्तेषु क्रुध् क्षुध् बुध् श्यन्विकरणः बन्ध् युध् रुध् राध् व्यध् शुध् साध् सिध् श्यन्विकरणः इत्येकादश । मन्येत्यादि तिप इत्यन्तमेकम्पदम् । मन्येति श्यना निर्देशः । छुपीति इका निर्देशः । तृप्यतिदृप्यती इति द्वन्द्वः श्यना निर्देशः । लिपेत्यादि यम इत्यन्तमेकम्पदम् । सृपीति इका निर्देशः । रमिरिति भिन्नम्पदम् । इका निर्देशः । तथा च नान्तेषु मन् हन्निति द्वौ । मनिः श्यन्विकरणः । पान्तेषु आप् क्षिप् छुप् तप् तिप् तृप् दृप् लिप् लुप् वप् शप् स्वप् सृप् इति त्रयोदश । भान्तेषु यभ् रभ् लभ् इति त्रयः । मान्तेषु गम् नम् यम् रम् इति चत्वारः ।

कुशिर्दंशिदिशी दृशमृशरिशरुशलिशविशस्पृशः कृषिः ॥
त्विष् तुष् द्विष् दुष् पुष्य पिष् विष् शिष् शुष् श्लिष्यतयो घसिः ।
वसतिर्दहदिहिदुहो नहमिहरुहलिहवहिस्तथा ॥
अनुदात्ता हलन्तेषु धातवो द्व्यधिकं शतम् ।
तुदादौ मतभेदेन स्थितौ यौ च चुरादिषु ॥
तृपदृपी तौ वारयितुं श्यना निर्देश आदृतः ।

किं च ।

स्विद्यपच्यौ सिध्यबुध्यौ मन्यपुष्यश्लिषः श्यना ॥
वसिः शपा लुका यौतिर्निर्दिष्टोऽन्यनिवृत्तये ।
निजिर्विजिर्शक्ल इति सानुबन्धा अमी तथा ॥
विन्दतिश्चान्द्रदौर्गादेरिष्टो भाष्येऽपि दृश्यते ।
व्याघ्रभूत्यादयस्त्वेवं नेह पेठुरिति स्थितम् ॥

कुशिरित्यादि स्पृश इत्यन्तमेकम्पदम् । कुशिरिति दंशिरिति च इश्तिपा । दंशीति इका निर्देशः । तथा च शान्तेषु कुश् दंश् दिश् दृश् मृश् रिश् रुश् लिश् विश् स्पृश् इत्येते दश । कृषिरिति पृथक्पदम् । इका निर्देशः । त्विषित्यादि श्लिष्यतय इत्यन्तमेकम्पदम् । पुष्येति श्यना निर्देशः । शिष्यतीति श्यन्विकरणस्य श्तिपा निर्देशः । तथाच षान्तेषु कृष् त्विष् तुष् द्विष् दुष् (पुष श्यन्विकरणः) पिष् विष् शिष् शुष् (श्लिष् श्यन्विकरणः।) इत्येकादश । घसिरिति पृथक्पदम् । इका निर्देशः । वसतिरिति पृथक्पदं श्तिपा निर्देशः । सान्तेषु घस् वस् इति द्वौ । दह् दिह् दुह् इति द्वन्द्वः । दिहीति इका निर्देशः । नह् मिह् रुह् लिह् इति समाहारद्वन्द्वः । वहिः इति पृथक्पदं इका निर्देशः । तथेति चकारपर्यायः । हान्तेषु दह् दिह् दुह् नह् मिह् रुह् लिह् वह् इत्यष्टौ । **द्व्यधिकं शतमिति** ॥ भाष्ये गृहिप्रभृतीनां पाठस्तु लेखकप्रमादकृत इति भावः । अथ पान्तेषु द्वयोः श्यना निर्देशस्य फलमाह । **तुदादाविति** ॥ यौ तृपदृपौ तुदादौ चुरादौ च मतान्तरीयत्वेन धातुपाठे स्थितौ तौ अनुदात्तेभ्यो वारयितुं श्यना निर्देशः अभ्युपगत इत्यर्थः । अत एव शमुचादीनामिति सूत्रभाष्ये तृपितो दृपित इत्युदाहृतं सङ्गच्छत इति भावः । **किञ्चेति** ॥ अन्यदपि वक्ष्यत इत्यर्थः । **अन्यनिवृत्तय इति** ॥ विकरणान्तरनिवृत्तय इत्यर्थः । तच्चाग्रे तदार्धधातुकनिरूपणे स्पष्टीभविष्यति । **अमी तथेति** ॥ उक्तानुबन्धरहितानां व्यावृत्तय इत्यर्थः । एतदपि तत्तदार्धधातुकनिरूपणे स्पष्टीभविष्यति । **विन्दतिरिति** ॥ विद्लृ लाभे इति तौदादिकः । चान्द्रदौर्गादिव्याकरणसम्मतः । **भाष्येऽपि दृश्यते इति** ॥ विन्दिविद्यतीति तत्र पाठादिति भावः । **एवमिति** ॥ विन्दतिमित्यर्थः । **नेह पेठुरिति** ॥ तथापि भाष्यप्रामाण्यादस्यानि-

रञ्जिमस्जी अदिपदी तुद् क्षुध् शुषिपुषी शिषिः ।
भाष्यानुक्ता नवेहोक्ता व्याघ्रभूत्यादिसम्मतेः ॥

'स्पर्ध ३ संघर्षे'। संघर्षः पराभिभवेच्छा। धात्वर्थेनोपसंग्रहादकर्मकः। स्पर्धते।

## २२५९। शर्पूर्वाः खयः। (७-४-६१)

अभ्यासस्य शर्पूर्वाः खयः शिष्यन्ते। 'हलादिः शेषः' (२१७९) इत्यस्यापवादः। पस्पर्धे। स्पर्धिता। स्पर्धिष्यते। स्पर्धताम्। अस्पर्धत। स्पर्धेत।

---

ट्कत्वमिति भावः। रञ्जिमस्जी इत्येकम्पदम्। तुद्क्षुदिति पृथक्कृते पदे। शुषिपुषी इत्येकम्पदम्। शिषिरित्यनन्तरं इत्येते इति शेषः। **नवेहेति** ॥ नव धातवः भाष्यानुक्ता अपि इहानुदात्तेषु परिगणिता इत्यर्थः। कुत इत्यत आह। **व्याघ्रभूत्यादिसम्मतेरिति** ॥ भाष्येत्वेभ्यो नवभ्योऽन्येषां परिगणनं तु नवानामप्येषामुपलक्षणमिति भावः। ननु रक्तं रागात् तदस्मिन्नन्नं प्रायेण, क्तोक्तमितप्रतिपन्नाः, शुष्कधृष्टौ, केननन्त्रिविशिष्टेनत्यादिस्वाप्रयोगाः, पुष्टःमम पुष्टः मङ्क्ता मङ्क्तव्यमित्यादिभाष्यप्रयोगाश्चात्र लिङ्गम्। **इत्यनिट्कारिकाः** ॥ **स्पर्धसंघर्षे इति** ॥ वर्तते इति शेषः। **पराभिभवेति** ॥ परस्याभिभवः पराजयः। तद्विषयकेच्छेत्यर्थः। नन्वत्रेच्छायां पराभिभवस्य कर्मतया स्पर्धधातोस्सकर्मकत्वात् देवदत्तः यज्ञदत्तं स्पर्धयतीत्यादौ गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामित्यकर्मककार्यं कथमित्यत आह। **धात्वर्थेनोपसंग्रहादकर्मक इति** ॥ धात्वर्थबहिर्भूतकर्मकत्वमेव सकर्मकत्वमिति गुण आत्मनः स्याजिति सूत्रभाष्ये प्रपञ्चितत्वादिति भावः। नचैवं सति पदव्यवस्थायां स्पर्धायामाङ इत्यत्र कृष्णश्चाणूरमाह्वयते स्पर्धत इत्यर्थ इति मूलग्रन्थविरोध इति वाच्यम्। तत्र स्पर्धेऽभिभवपूर्वकाह्वाने वृत्तिरित्यलम्। **स्पर्धत इति** ॥ कथ्यन्ताः षट्त्रिंशदनुदात्तेत इत्युक्तेरात्मनेपदम्। एधधातुवत् लटि धातुरूपाणीति भावः। धातोरिजादित्वाभावादिजादेश्चेति लिट्याम् न। अत एव नानुप्रयोगोऽपि। किन्तु लिटस्तादेशे लिटस्तझयोरिति तस्यैशि लिटि धातोरितिद्वित्वे हलादिश्शेष इत्यभ्यासेप्रथमहल्व्यतिरिक्तहलां निवृत्तौ सस्पर्धे इति प्राप्ते। **शर्पूर्वा इति**। **अभ्यासस्येति** ॥ अत्रलोपोऽभ्यासस्येत्यतस्तदनुवृत्तेरिति भावः। शर्पूर्वाः खय इत्यत्र शर् पूर्वः येभ्य इत्यतद्गुणसंविज्ञानो बहुव्रीहिः। तेन शर् न शिष्यते। **शिष्यन्त इति** ॥ हलादिश्शेष इत्यतश्शेष इत्यनुवृत्तं कर्मणि घञन्तं बहुवचनान्ततया विपरिणम्यत इति भावः। तथाच प्रकृते अभ्यासे हल् पकारश्शिष्यते। नन्द्राऽस्संयोगादय इति रेफस्य द्वित्वनिषेधो न शंक्यः। द्वितीयैकाजवयवस्यैव तन्निषेधात्। तदाह। **पस्पर्धे इति** ॥ ननु [illegible] अभ्यासे चकार एव शिष्येतेति वाच्यम्। हलादिश्शेष इत्यतोहि आदिरित्यप्यनुवर्तते। शर्प्[illegible] धात्वादिभूता इत्यर्थः। पस्पर्धाते पस्पर्धिरे पस्पर्धिषे पस्पर्धाथे पस्पर्धिध्वे पस्पर्धे पस्पर्धिवहे पस्पर्धिमहे इति लिटि रूपाणि सुगमानि। **स्पर्धितेति** ॥ लुटि एधधातुवत् रूपाणि सुगमानीति भावः। **स्पर्धिष्यत इति** ॥ लृटि एधधातुवद्रूपाणीति भावः। **[illegible]मिति** ॥

स्पर्धिषीष्ट । अस्पर्धिष्ट । अस्पर्धिष्यत । 'गाधृ ४ प्रतिष्ठालिप्सयोर्ग्रन्थे च' । गाधते । जगाधे । 'बाधृ ५ लोडने' । लोडनं प्रतिघातः । बाधते । 'नाथृ ६ नाधृ ७ याच्ञोपतापैश्वर्याशीःषु' ।

**आशिषि नाथ इति वाच्यम् ।**

अस्याशिष्येवात्मनेपदं स्यात् । नाथते । अन्यत्र नाथति । नाधते । 'दध ८ धारणे' । दधते ।

## २२६० । अत एकहल्मध्येऽनादेशादेर्लिटि । (६-४-१२०)

**लिण्णिमित्तादेशादिकं न भवति यदङ्गं तदवयवस्यासंयुक्तहल्मध्यस्थस्याकारस्यैकारः स्यादभ्यासलोपश्च किति लिटि ।**

---

लोटि एधिवद्रूपाणीति भावः । **अस्पर्धतेति** ॥ लङि एधिवद्रूपाणीति भावः । हलादित्वादडेव । नत्वाडिति विशेषः । **स्पर्धेतेति** ॥ विधिलिङि एधिवद्रूपाणि । **स्पर्धिषीष्टेति** ॥ आशिषि लिङि एधिवद्रूपाणि । **अस्पर्धिष्टेति** ॥ लुङि एधिवद्रूपाणि । अडागम इति विशेषः । नत्वाट् । **अस्पर्धिष्यतेति** ॥ लृङि एधिवद्रूपाणि । अडागमो विशेषः । नत्वाट् । **गाधृ प्रतिष्ठेति** ॥ चतुर्थान्तो धातुः । ऋकारो नाग्लोपिशास्वृदितामिति निषेधार्थः । अजगाधत् । प्रतिष्ठा आधारे स्थितिः । ग्रन्थः ग्रथनं रचनम् । **जगाध इति** ॥ लिटि द्वित्वादि । अभ्यासस्य ह्रस्वः चुत्वं जश्त्वम् । **बाधृ इति** ॥ प्रतिघातः पीडनम् । **नाथृ, नाधृ इति** ॥ द्वितीयचतुर्थान्तौ धातू । उपतापः ज्वरप्रयुक्ता पीडा । आशीः आशासनम् । द्वितीयान्तस्य नाथृधातोर्विशेषमाह । **आशिषि नाथ इति** ॥ अत्र नाथ इति षष्ठी । अनुदात्तङित इत्यतः आत्मनेपदमित्यनुवर्तते । अनुदात्तेत्त्वादेव सिद्धे नियमार्थमिदं वार्तिकम् । तदाह । **अस्याशिष्येवेति** ॥ आशासनार्थवृत्तेरेवनाथधातोरात्मनेपदम् । याच्ञाद्यर्थवृत्तेस्तु शेषात् कर्तरीति परस्मैपदमेवेत्यर्थः । **नाथत इति** ॥ आशास्ते इत्यर्थः । **अन्यत्रेति** ॥ याच्ञाद्यर्थे विद्यमानस्येत्यर्थः । अथ चतुर्थान्तस्य नाधधातोरुदाहरति । **नाधत इति** । **दधेति** ॥ चतुर्थान्तोऽयम् । तस्य लटि एधिवद्रूपाणि सिद्धवत्कृत्य लिटस्तादेशे तस्यैशि द्वित्वे दध् दध् ए इति स्थिते । **अत एकहल्मध्य इति** ॥ आदेशः आदिर्यस्येति बहुव्रीहिः । अङ्गस्येत्यधिकृतम् अन्यपदार्थः । लिटीति परनिमित्तकसप्तमी अनादेशादेरित्यस्यैकदेशे आदेशेऽन्वेति । लिटि परे निमित्ते य आदेशः सः आदिर्यस्य न भवति तथाविधस्याङ्गस्येति लभ्यते । अङ्गस्येत्यवयवषष्ठी । तथाच तथाविधाङ्गावयवस्यात इति लभ्यते । एकशब्दः असहायवाची । एके मुख्यान्यकेवला इत्यमरः । एकौ असंयुक्तौ हलौ एकहलौ तयोर्मध्यः एकहल्मध्यः तत्र तिष्ठतीत्येकहल्मध्यस्थः । तस्येति विग्रहः । अत इत्यस्यैव विशेषणमिदम् । घ्वसोरेद्धावित्यतः एदिति अभ्यासलोप इति चानुवर्तते । गमहनेत्यतः कितीत्यनुवर्तते नतु ङितीति । लिडादेशानां ङित्त्वासम्भवात् । लिटीत्यत्वविधौ परनिमित्तञ्च । आवृत्त्या उभयार्थलाभः । तदाह । **लिण्णिमित्तेत्यादिना** ॥

## २२६१। थलि च सेटि। (६-४-१२१)

प्रागुक्तं स्यात्। आदेशश्चेह वैरूप्यसम्पादक एवाश्रीयते। शसिदद्योः प्रतिषेधवचनाज्ज्ञापकात्। तेन प्रकृतिजश्चरां तेषु सत्स्वपि एत्वाभ्यासलोपौ स्त एव। देधे। देधाते। देधिरे। 'अतः' किम्। दिदिवतुः। 'तपरः' किम्। ररासे। 'एक—' इत्यादि किम्। तत्सरतुः। 'अनादेशादेः' किम्। चकणतुः। लिट आदेशविशेषणादिह स्यादेव। नेमिथ। सेहे। 'स्कुदि ९ आप्रवणे'। आप्रवणमुत्प्लवनमुद्धरणं च।

---

**थलिचेति। प्रागुक्तमिति** ॥ अत एकहल्मध्य इति यत् प्रागुक्तं एत्वादि तत् सेटि थलि च स्यादित्यर्थः। थलः कित्वाभावात् पूर्वसूत्रेणाप्राप्तौ वचनम्। ननु देधे पेततुरित्यादौ अभ्यासे चर्चेति जशां चराश्च जाशी चरिच लिण्णिमित्तादेशादित्वात् कथमेत्वाभ्यासलोपाविन्यत आह। **आदेशश्चेति** ॥ इह अतएकहल्मध्य इति सूत्रे। आदेशशब्देन स्थान्यपेक्षया विरूप एवादेशो विवक्षितः। तथाच तथाविधादेशादेरेव एत्वाभ्यासलोपौ न भवतः। स्थानिसरूपादेशादेस्तु न पर्युदास इत्यर्थः। **शसिदद्योरिति** ॥ नशसददवादिगुणानामिति शसिदद्योरेत्वाभ्यासलोपयोः प्रतिषेध उच्यते। यदिह यथाकथञ्चिदादेशादेः पर्युदासस्स्यात् तर्हि शसिदद्योरभ्यासे शकारदकारयोश्चर्जशोः शकारदकारादेशे सति आदेशादित्वादेव एत्वाभ्यासलोपयोः अभावसिद्धौ न शसददवेति तत्प्रतिषेधोऽनर्थकस्स्यात्। अतः वैरूप्यसम्पादकादेशादेरेव पर्युदासो विज्ञायत इत्यर्थः। **तेनेति** ॥ स्थानिसरूपादेशादेः पर्युदासाभावादित्यनेनेत्यर्थः। **सत्स्वपीति** ॥ देधे पेततुः इत्यादौ दकाराद्यादेशेषु सत्स्वपीत्यर्थः। **देधे इति** ॥ दध दध् ए इति स्थिते दकारादकारस्य एत्वेऽभ्यासलोपे च रूपम्। असंयोगाल्लिट् किदिति कित्वमिह बोध्यम्। **देधिर इति** ॥ देधिषे देधाथे देधिध्वे देधे देधिवहे देधिमहे इति रूपाणि सम्भवन्तीति भावः। **दिदिवतुरिति** ॥ दिव्धातोरतुसि द्वित्वे हलोर्मध्ये अतोऽभावादेत्वाभ्यासलोपौ नेति भावः। **तपरः किमिति** ॥ अत इति तपरकरणं किमर्थमित्यर्थः। **ररासे इति** ॥ रास्ट शब्दे भ्वादिरात्मनेपदी। अत्र हल्मध्यस्थावर्णस्य ह्रस्वत्वाभावादेत्वाभ्यासलोपौ नेति भावः। **एकेत्यादि किमिति** ॥ एकहल्मध्यस्थस्येति किमर्थमित्यर्थः। **तत्सरतुरिति** ॥ त्सरच्छद्मगतौ। लिटोऽतुसि द्वित्वे अभ्यासाकारस्य नासंयुक्तहल्मध्यस्थत्वमिति भावः। **चकणतुरिति** ॥ कण शब्दे। लिटोऽतुसि द्वित्वे अभ्यासेचर्चेति ककारस्य चुत्वेन चकारः। तथाच वैरूप्यसम्पादकादेशादित्वादेत्वाभ्यासलोपौ नेति भावः। अथ लिण्णिमित्तादेशादिकमित्यत्र लिण्णिमित्तेत्यस्य प्रयोजनमाह। **लिट इति। नेमिथेति** ॥ णमु प्रह्वत्वे शब्दे च। णोन इति नत्वं। थलि इटि द्वित्वे नत्वसम्पन्ननकारादेशादित्वेपि नत्वस्य लिण्णिमित्तकत्वाभावाल्लिण्णिमित्तकादेशादित्वाभावादेत्वाभ्यासलोपौ निर्बाधाविति भावः। **सेहे इति** ॥ षह मर्षणे। धात्वादेः षस्स इति षत्वे थलि इटि द्वित्वे सत्वसम्पन्नसकारादेशादित्वेऽपि सत्वस्य

## २२६२। इदितो नुम्धातोः। (७-१-५८)

स्कुन्दते। चुस्कुन्दे। 'श्विदि १० श्वैत्ये'। अकर्मकः। श्विन्दते। शिश्विन्दे। 'वदि ११ अभिवादनस्तुत्योः'। वन्दते। ववन्दे। 'भदि १२ कल्याणे सुखे च'। भन्दते। बभन्दे। 'मदि १३ स्तुतिमोदमदस्वप्रकान्तिगतिषु'। मन्दते। ममन्दे। 'स्पदि १४ किञ्चिच्चलने'। स्पन्दते। पस्पन्दे। 'क्लिदि १५ परिदेवने'। शोक इत्यर्थः। सकर्मकः। क्लिन्दते चैत्रम्। चिक्लिन्दे। 'मुद १६ हर्षे'। मोदते। 'दद १७ दाने'। ददते।

---

लिण्णिमित्तकत्वाभावात् लिण्णिमित्तकादेशादित्वविरहादेत्वाभ्यासलोपौ निर्बाधाविति भावः। दाधिता। दधिष्यते। दधताम्। अदधत। दधेत। दधिषीष्ट। अदाधिष्ट। अदधिष्यत। **स्कुदीति** ॥ उत्प्लवनमुत्प्लुत्य गमनम्। **इदित इति** ॥ इत् ह्रस्व इकारः इत् इत्संज्ञकः यस्य सः इदित्, तस्येति विग्रहः। इत्संज्ञकेदन्तधातोरित्यर्थः। तेन चक्षिङादौ न दोषः। नुमि मकार इत्। उकार उच्चारणार्थः। मित्वादन्त्यादचः परः। **स्कुन्दत इति** ॥ नश्चापदान्तस्येत्यनुस्वारः परसवर्णः। **चुस्कुन्द इति** ॥ लिटि द्वित्वे शर्पूर्वाः खय इत्यभ्यासे ककारश्शिष्यते। कुहोश्चुरिति तस्य कुत्वेन चकारः। **श्विदीति** ॥ श्वैत्यम् श्वैत्यकरणम्। **अकर्मक इति** ॥ श्वैत्यस्य धात्वर्थोपसङ्ग्रहादिति भावः। ततश्च श्विन्दयति देवदत्तं यज्ञदत्त इत्यादौ गतिबुद्धिप्रत्यवसानेत्यादिना अकर्मककार्यं द्वितीया भवति। श्वेतीभवनं वा श्वैत्यम्। **श्विन्दत इति** ॥ श्वेतीभवतीत्यर्थः। इदित्वान्नुम्। अनुस्वारपरसवर्णौ। नुमिकृते गुरुमत्वेपि इजादित्वाभावादाम् नेति भावः। **वदीति** ॥ अभिवादनं आशीर्वादः, तत्कारणभूतो व्यापारः प्रणामादिरभिवादनम्। **वन्दत इति** ॥ इदित्वान्नुम्। **ववन्द इति** ॥ नुमि कृते अकारस्य संयुक्तहल्मध्यस्थत्वादेत्वाभ्यासलोपौ नेति भावः। **भदीति** ॥ कल्याणं शुभक्रिया, सुखं सुखीभावः। **भन्दत इति** ॥ इदित्वान्नुम्। **बभन्द इति** ॥ अभ्यासे भकारस्य जश्भावेन बकारः। नुमि अकारस्य संयुक्तहल्मध्यस्थत्वादेत्वाभ्यासलोपौ नेति भावः। **मदीति** ॥ मोदः सन्तोषः। मदः गर्वः। **मन्दत इति** ॥ इदित्वान्नुम्। **ममन्द इति** ॥ नुमि सति संयुक्तहल्मध्यस्थत्वादेत्वाभ्यासलोपौ नेति भावः। **स्पदीति** ॥ अकर्मकः। **स्पन्दत इति** ॥ इदित्वान्नुम्। **पस्पन्द इति** ॥ शर्पूर्वाः खय इत्यभ्यासे पकारः शिष्यते। **क्लिदीति** ॥ परिवेदनशब्दं व्याचष्टे। **शोक इति** ॥ स्मृत्वा क्लेशः शोकः। तदाह। **सकर्मक इति। क्लिन्दते चैत्रमिति** ॥ अतीतञ्चैत्रं स्मृत्वा क्लिश्नातीत्यर्थः। इदित्वान्नुम्। **चिक्लिन्द इति** ॥ अभ्यासे ककारस्य चुत्वेन च इति भावः। **मुदेति** ॥ हर्षः तुष्टिः। **मोदत इति** ॥ शपि लघूपधगुणः। **मुमुद इति** ॥ असंयोगाल्लिट्किदिति कित्वान्न गुणः। **ददेति** ॥ न ममेति त्यागो दानं। न तु द्रव्यत्यागः। तथा सति धात्वर्थोपसङ्ग्रहादकर्मकत्वापत्तेः।

## २२६३ । न शसददवादिगुणानाम् । (६-४-१२६)

शसेर्ददेर्वकारादीनां गुणशब्देन भावितस्य च योऽकारस्तस्यैत्वाभ्यासलोपौ न । ददडे । ददडाते । ददडिरे । 'ष्वद १८ स्वर्द १९ आस्वादने'। अयमनुभवे सकर्मकः । रुचावकर्मकः ।

## २२६४ । धात्वादेः षः सः । (६-१-६४)

धातोरादेः षस्य सः स्यात् । 'सात्पदाद्योः' (२१२३) इति षत्वनिषेधः । अनुस्वदते । सस्वदे । स्वर्दते । सस्वर्दे । 'उर्द २० माने क्रीडायां च'।

## २२६५ । उपधायां च । (८-२-७८)

धातोरुपधाभूतयो रेफवकारयोर्हल्परयोः परत इको दीर्घः स्यात् । ऊर्दते।

**न शसददेति** ॥ शस दद वादिगुण एषान्द्वन्द्वः । अवयवषष्ठी । गुणशब्देन विहित एव गुणशब्देन विवक्षितः । अन्यथा शसिददिग्रहणवैयर्थ्यात् । अत एकहल्मध्य इत्यस्मात् अत इति, घ्वसोरेद्धावित्यतः एदिति, अभ्यासलोपइति, चानुवर्तते । तदाह । **शसेरित्यादिना** ॥ गुणशब्देनेति किम् । पेचे, अत्र पचेरकारस्य गुणत्वेपि गुणशब्देन विहितत्वाभावान्नायंनिषेधः । पॄधातोः पपरतुरिति तु गुणस्योदाहरणम् । गुणशब्देन विहितः यः अर् तदवयवत्वादकारस्येति बोध्यम् । **ददद इति** ॥ ददेर्लिटस्तादेशस्य एशि द्वित्वे अत एकहल्मध्य इति प्राप्तावेत्वाभ्यासलोपौ न भवतः । **ष्वद स्वर्देति** ॥ आस्वादनं अनुभवः । प्रीतिविपर्याभावात्मिका रुचिर्वा । तदाह । **अयमिति** ॥ प्रत्येकाभिप्रायमेकवचनम् । **धात्वादेरिति** ॥ ष इति षष्ठ्यन्तम् । तदाह । **धातोरादेः षस्य सस्स्यादिति** ॥ षकारस्य सः स्यादित्यर्थः । धातुग्रहणङ्किं । षट् । अत्र धात्वादित्वाभावान्न सकारः । आदिग्रहणं किम् । **लषति** ॥ न चैवमपि षकारीयतीत्यादौ सुब्धात्वादेरपि षस्य सकारः स्यादिति वाच्यम् । आदेच उपदेशेऽशितीत्यतः उपदेश इत्यनुवृत्तेः । एवञ्च षडित्यादावपि उपदेशग्रहणानुवृत्त्यैव व्यावृत्तिसिद्धेर्धातुग्रहणं भाष्ये प्रत्याख्यातम् । ननु धातुपाठे स्वदस्वर्देत्येवं सकार एव उपदिश्यताम् । एवञ्च धात्वादेष्षस्स इत्यपि मास्तु इति चेन्मैवम् । ण्यन्तात् लुङि असिष्वददित्यत्र षकारश्रवणार्थकत्वात् । धातुपाठे सकारस्यैवोपदेशे तु असिष्वददित्यत्र सकारस्य आदेशसकारत्वाभावेन षत्वासम्भवात् । नन्वेवं सति अनुस्वदत इत्यत्रादेशसकारत्वात् षत्वापत्तिरित्यत आह । **सात्पदाद्योरिति । सस्वद इति** ॥ लिटि द्वित्वे संयुक्तहल्मध्यस्थत्वादेत्वाभ्यासलोपौ नेति भावः । **उर्देति** ॥ चकारादास्वादनेपीति केचित् । **उपधायाञ्चेति** ॥ सिपि धातोरित्यतः धातोरिति। र्वोरुपधाया इत्यतः र्वोरिक इति, हलिचेत्यतः हलीति, चानुवर्तते । उपधयोरित्यर्थे उपधायामित्यार्षम् । तदाह । **धातोरित्यादि । ऊर्दत इति** ॥ अत्र धातोः रेफवान्तत्वाभावात् र्वोरुपधाया इत्यस्य हलिचेत्यस्य चाप्राप्तौ उपधायाञ्चेत्यारम्भः । धातोरित्यभावे पदाधिकारस्थत्वात्

ऊर्दांचक्रे । 'कुर्द २१ खुर्द २२ गुर्द २३ गुद २४ क्रीडायामेव'। कूर्दते। चुकूर्दे। खूर्दते। गूर्दते। गोदते। जुगुदे। 'षूद २५ क्षरणे'। सूदते। सुषूदे।

**सेक्सृप्सृस्तृसृजस्तृस्त्यान्ये दन्त्याजन्तसादयः ।**
**एकाचः षोपदेशाः ष्वक्ष्विद्स्वद्स्वञ्जिस्वपस्मिङः ॥**

---

पदस्य उपधाभूतयोरित्यर्थः स्यात् । ततश्च क्विबन्ते ऊर्द् इत्यत्रैव स्यात् । ऊर्दत इत्यादौ न स्यात् । रेफवकारयोः किम्। पुष्यति । हल्परयोः किम्। चिरिणोति। इकः किं। नर्दति। **ऊर्दाश्चक्र इति** ॥ इजादित्वादाम्। कृञ्चानुप्रयुज्यत इत्यनुप्रयोगः। **कुर्देति** ॥ गुर्देत्यपि पृथग्धातुः । क्रीडायामेवेत्यर्थनिर्देशः । एवकारस्तु इतोऽन्यत्र धात्वर्थनिर्देशस्य उपलक्षणत्वं ज्ञापयति। **कूर्दत इति** ॥ उपधायाञ्चेति दीर्घः। **चुकूर्दे इति** ॥ कुहोश्चुरिति चुत्वम्। **खूर्दत इति** ॥ उपधायाञ्चेति दीर्घः। एवं गूर्दत इति। गोदत इति। शपि लघूपधगुणः। **जुगुद इति** ॥ असंयोगादिति कित्वान्नगुणः। **षूदेति** ॥ क्षरणं प्रस्रवणम्। **सूदत इति** ॥ प्रस्रवतीत्यर्थः। धात्वादेरिति षस्य सः। अलघूपधत्वान्न गुणः। **सुषूद इति** ॥ धात्वादेरिति षस्य सत्वे लिटि द्वित्वादौ इणः परस्यादेशसकारत्वात् षत्वम्। यदि धातुपाठे सकारस्यैव पाठः तर्हि इहादेशसकारत्वाभावात् षत्वं न स्यात्। षोपदेशे तु षस्य सत्वे सति आदेशसकारत्वात् षत्वं सूपपादमिति भावः। ननु धातुपाठे के धातवष्षादयः पठिताः, के वा सादयः। पाणिनिकृतषोपदेशपाठस्य इदानीम्परिभ्रष्टत्वादित्याशङ्क्य पाणिनीयपरम्परासिद्धान् षोपदेशान् पठति। सेगिति श्लोकेन। दंत्याजन्तसादय एकाचः षोपदेशास्स्युरित्यन्वयः। दंत्यश्च अच्च दंत्याचौ तौ अन्तौ अव्यवहितपरौ यस्य सः दंत्याजन्तः तथाविधः षः षकारः आदिर्येषान्ते दंत्याजन्तषादयः। दंत्यपरकः अच्परकश्च यः षकारः तदादय एकाचो धातवः इदानीं कृतसत्वास्सकारादित्वेन परिदृश्यमाना अपि षकारादित्वेन पाणिनिना उपदिष्टाः प्रत्येतव्या इत्यर्थः। सादय इति पाठेप्येवमेव व्याख्येयम्। अजदंत्यपराः षादयष्षोपदेशा इति भाष्यम्। षूद क्षरणे इत्यादयः अच्परकषोपदेशाः। ष्ठा गतिनिवृत्तावित्यादयस्तु दंत्यपरकषोपदेशाः। दंत्याजंन्तेति किम्। स्कुदि आप्रवणे। चुस्कुन्दे। अत्र सकारो न दंत्यपरकः नाप्यच्परकः। एकाचः किम्। सोसूत्रयते। सूत्र वेष्टने, चुरादिरजन्तः अनेकाच्। यद्यप्येकाच इति भाष्ये न दृश्यते। तथापि यङ्विधौ सोसूच्यत इति भाष्यन्तत्र मानामिति भावः। एवञ्च साध संसिद्धौ, इत्यादौ सकारपाठस्यैव दृश्यमानत्वेऽपि षोपदेशत्वमेव। ननु सेकृ गतौ, सृप्लृ गतौ, सृ गतौ, सृज विसर्गे, एते चत्वारः अच्परकसादयः, स्तृञ् आच्छादने, ऋदन्तः श्नुविकरणः। स्तॄञ् आच्छादने ॠदन्तः श्नाविकरणः, स्त्यै शब्दसङ्घातयोः, एते त्रयः दंत्यपरकसादयः। एतेषां सप्तानामपि षोपदेशत्वं स्यादित्यतिव्याप्तिमाशङ्क्य तद्भिन्नत्वं विशेषणमाह । **सेक् सृप् सृ स्तृ सृज स्तॄ स्त्या न्ये इति** ॥ स्त्यै धातोः कृतात्वस्य निर्देशः श्लोके समावेशार्थः। स्त्यै इत्यैकारान्तस्य निर्देशे स्त्यायन्य इत्येकस्याक्षरस्याधिक्यापत्तेः। नन्वेवमपि ष्वष्क गतौ, ञिष्विदा गात्रप्रस्रवणे, ष्वद आस्वादने, ष्वञ्ज परिष्वङ्गे, ञिष्वप् शये, ष्मिङ् ईषद्धसने, इत्येतेषु सकारस्य दंत्यपरकत्वाभावात् अच्परकत्वाभावाच्च षोपदेशेष्वसङ्ग्रहः स्यादित्यव्याप्तिमाशङ्क्य तानपि संगृह्णाति। **ष्वष्क् स्विद् स्वद् स्वञ्जि स्वपि**

दन्त्यः केवलदन्त्यो न तु दन्तोष्ठजोऽपि। ष्वक्कादीनां पृथग्ग्रहणाज्ज्ञापकात्। 'ह्लाद २६ अव्यक्ते शब्दे'। ह्लादते। जह्लादे। 'ह्लादी २७ सुखे च'। चादव्यक्ते शब्दे। ह्लादते। 'स्वाद २८ आस्वादने'। 'पर्द २९ कुत्सिते शब्दे'। गुदरव इत्यर्थः। पर्दते। 'यती ३० प्रयत्ने'। यतते। येते। 'युतृ ३१ जुतृ ३२ भासने'। योतते। युयुते। जोतते। जुजुते 'विथृ ३३ वेथृ ३४ याचने'। विविथे। विवेथे। 'श्रथि ३५ शैथिल्ये'। श्रन्थते। ग्रथि ३६ कौटिल्ये'। ग्रन्थते। 'कत्थ ३७ श्लाघायाम्'। कत्थते। एधादयोऽनुदात्तेतो गताः।

अथाष्टात्रिंशत्तवर्गीयान्ताः परस्मैपदिनः। 'अत ३८ सातत्यगमने'। अतति। 'अत आदेः' (२२४८)। आत। आततुः। आतुः। लुङि 'आतिस् 'ई' इति स्थिते।

---

**स्मिङ इति** ॥ अपीति शेषः। ननु स्त्र शब्दोपतापयोरित्यादीनामपि दन्त्यवकारपरकत्वात् षोपदेशत्वं स्यादित्यत आह। दन्त्यः **केवलदन्त्य इति** ॥ कुत इत्यत आह। **ष्वक्कादीनामिति** ॥ अन्यथा दंत्यपरकत्वादेव सिद्धे ष्वक्कादिग्रहणं व्यर्थं स्यादिति भावः। यद्यपि ष्वक्कतिरत्र भाष्ये न दृश्यते तथापि सुब्धातुष्ठिवुष्वक्कतीनां षत्वप्रतिषेध इति वार्तिकात्तल्लाभ इति भावः। **ह्रादेति** ॥ रेफवानयम्। अव्यक्तशब्दः अमनुष्यवाक्। **जह्राद इति** ॥ अभ्यासस्य ह्रस्वः चुत्वम्। **ह्लादीति** ॥ लकारवानयम्। श्वीदितोनिष्ठायामिति इण्णिषेधार्थमीत्वम्। **स्वादेति** ॥ केवलदंत्यपरकत्वाभावान्नायं षोपदेशः असिस्वदत्। **पर्देति** ॥ गुदरव इत्यर्थः। **यतीति** ॥ ईदित्वमिण्णिषेधार्थम्। **येते इति** ॥ अतएकहल्मध्य इत्येत्वाभ्यासलोपौ। युतृ जुतृ इति ऋदित्वम् नाग्लोपिशास्वृदितामित्याद्यर्थम्। **योतत इति** ॥ शपि लघूपधगुणः। **युयुत इति** ॥ असंयोगादिति कित्वान्न गुणः। **विथृवेथृ इति** ॥ द्वितीयान्ताविमौ। ननु विथृ इत्येवास्तु। लघूपधगुणे सति वेथत इत्यस्याविशिष्टत्वादित्यत आह। **विविथे, विवेथ इति** ॥ वेथृधातोर्विवेथ इति रूपम्। विथृधातोस्तु असंयोगादिति कित्वात् गुणाभावे विविथ इति रूपमिति भावः। **श्रथीति** ॥ द्वितीयान्तः शैथिल्यम् स्रंसनम्। श्रन्थत इति इदित्वान्नुम्। **ग्रथीति** ॥ द्वितीयान्तः। कौटिल्यम् वक्रीभवनम्। **ग्रन्थत इति** ॥ इदित्वान्नुम्। **कत्थेति** ॥ अविद्यमानगुणज्ञापनं श्लाघा। **अथाष्टात्रिंशदिति** ॥ अष्टौ च त्रिंशदिति द्वन्द्वः अष्टाधिकात्रिंशदिति वा। द्व्यष्टनस्सङ्ख्यायामित्यात्वम् अष्टात्रिंशदिति पाठे तु अष्टेति पृथक्पदम्। **परस्मैपदिन इति** ॥ अनुदात्तस्वरितञित्वाभावाच्छेषात् कर्तरीति परस्मैपदिन एवेति भावः। **अतेति** ॥ सातत्यगमनं सन्ततगमनम्। लिटि णलि द्वित्वे हलादिशेषे अ अत् अ इति स्थिते पररूपे प्राप्ते आह। **अत आदेरिति** ॥ इति दीर्घ इति शेषः। तथा च अभ्यासाकारस्य दीर्घे सति सवर्णदीर्घः। तदाह। **आतेति** ॥ अकारस्य हल्मध्यस्थत्वाभावादेत्वाभ्यासलोपौ न। **लुङीति** ॥ अतधातोर्लुङस्तिपि इतश्चेति इकारलोपे च्लेः सिचि तस्य इडागमे

## २२६६ । इट ईटि । (८-२-२८)

इटः परस्य सस्य लोपः स्यादीटि परे ।

सिज्लोप एकादेशे सिद्धो वाच्यः ।

आतीत् । आतिष्टाम् । आतिषुः ।

## २२३७ । वदव्रजहलन्तस्याचः । (७-२-३)

वदेर्व्रजेर्हलन्तस्य चाङ्गस्याचः स्थाने वृद्धिः स्यात्सिचि परस्मैपदेषु । इति प्राप्ते ।

## २२६८ । नेटि । (७-२-४)

इडादौ सिचि प्रागुक्तं न स्यात् । मा भवानतीत् । अतिष्टाम् । अतिषुः । 'चिती ३९ संज्ञाने'। चेतति । चिचेत । अचेतीत् । अचेतिष्टाम् । अचेतिषुः । 'च्युतिर् ४० आसेचने'। आसेचनमार्द्रीकरणम् । आङीषदर्थेऽभिव्याप्तौ च ।

---

अस्ति सिचोऽपृक्त इति ईडागमे आटि वृद्धौ आतिस् ई त् इति स्थिते सतीत्यर्थः । **इटईटीति** ॥ इट इति पञ्चमी रात्सस्येत्यतः सस्येति संयोगान्तस्येत्यतो लोप इति चानुवर्तते तदाह । **इटः परस्येति** ॥ एवञ्च आति स् ई त् इति स्थिते सकारस्य लोपे आति ई त् इति स्थिते सवर्णदीर्घे आतीदिति रूपम् वक्ष्यति । तत्र सलोपस्यासिद्धत्वात् कथं सवर्णदीर्घ इत्यत आह । **सिज्लोप एकादेशे सिद्धो वक्तव्य इति** । **आतिष्टामिति** ॥ लुङस्तस् । तस्य ताम् । च्लेः सिच् । तस्य इटि आटि वृद्धौ षत्वम् । अपृक्तत्वाभावेन ईडभावात् सलोपो न । **आतिषुरिति** ॥ लुङो झिः । च्लेः सिच् । जुस् इट् आट् वृद्धिः षत्वं रुत्वविसर्गौ । आतीः । आतिष्टम् । आतिष्ट । आतिषम् । आतिष्व । आतिष्म । अत्र वृद्धिमाशङ्कितुमाह । **वदव्रजेति** ॥ वद व्रज हलन्तः एषां समाहारद्वन्द्वात् षष्ठ्येकवचनम् । अङ्गस्येत्यधिकृतम् । सिचि वृद्धिः परस्मैपदेष्वित्यनुवर्तते । तदाह । **वदेत्यादिना** ॥ हलन्तत्वादेव सिद्धे वदव्रजग्रहणन्तु अवादीदव्राजीदित्यत्र अतोहलादेर्लघोरिति वृद्धिविकल्पबाधनार्थम् । **नेटीति** । **प्रागुक्तन्नेति** ॥ वदव्रजहलन्तस्याच इत्युक्तं नेत्यर्थः । तत्र वदव्रजयोर्विशिष्य विधानात् हलन्तलक्षणाया एव वृद्धेर्निषेधोऽयम् । हलन्तलक्षणा वृद्धिस्तु अधाक्षीदित्यादावनिडादौ सिचि चरितार्था । नन्वातीदित्यादौ अकारस्य वृद्धौ सत्यामसत्याञ्च आटा एकादेशे सति रूपे विशेषाभावात् किन्तन्निषेधेनेत्याशङ्क्येत्याह । **माभवानतीदिति** ॥ माङ्योगे आडभावे सति वृद्धिनिषेधः सफल इति भावः । **चितीति** ॥ ईदित्वं श्वीदितो निष्ठायां इति इण्णिषेधार्थम् । **चेततीति** ॥ शपि लघूपधगुणः । **चिचेतेति** ॥ तिबादेशणलः पित्वेन असंयोगादिति कित्वस्याप्रवृत्तेः न गुणनिषेधः चिचिततुरित्यादौ तु कित्वान्न गुणः । **अचेतीदिति** ॥ इट ईटीति सलोपः । **अचेतिष्टामिति** ॥ अपृक्तत्वाभावादीडभावान्नसिज्लोपः । नेटीति निषेधान्न हलन्तलक्षणा वृद्धिः । **च्युतिरिति** ॥ अत्र इकारस्य रेफस्य

**इर इत्संज्ञा वाच्या ।**

च्योतति । चुच्योत ।

**२२६९ । इरितो वा । (३-१-५७)**

**इरितो धातोश्च्लेरङ् वा स्यात्परस्मैपदे परे ।** अच्युतत्—अच्योतीत् । 'श्च्युतिर् ४१ क्षरणे' । श्च्योतति । चुश्च्योत । अश्च्युतत्—अश्च्योतीत् । यकाररहितोऽप्ययम् । श्चोतति । 'मन्थ ४२ विलोडने' । विलोडनं प्रतिघातः । मन्थति । ममन्थ । यासुटः 'किदाशिषि (२२१६) इति कित्त्वात् 'अनिदिताम्—' (४१५) इति नलोपः । मथ्यात् । 'कुथि ४३ पुथि ४४ लुथि ४५ मथि ४६ हिंसासंक्लेशनयोः' । इदित्त्वान्नलोपो न । कुन्थ्यात् । पुन्थ्यात्, लुन्थ्यात्, मन्थ्यात् 'षिधु ४७ गत्याम्' सेधति । सिषेध । सेधिता । असेधीत् । सात्पदाद्योः' (५१२३) इति षत्वनिषेधे प्राप्ते ।

---

च प्रत्येकमित्संज्ञायामिदित्वान्नुमि प्राप्ते आह । **इर इत्संज्ञेति** ॥ तथाच इर् इति समुदायस्य इत्संज्ञकत्वादिदित्वाभावान्ननुमिति भावः । **च्योततीति** ॥ लघूपधगुणः । **चुच्योतेति**॥ णलः पित्वेन कित्वाभावान्न गुणनिषेध इति भावः । चुच्युततुरित्यादौ तु कित्वान्न गुणः । लुङि च्लेः सिचि प्राप्ते । **इरितो वेति** ॥ धातोरेकाच इत्यतो धातोरिति च्लेः सिजित्यतः च्लेरिति अस्यति वक्तिख्यातिभ्य इत्यतः अङिति पुषादिद्युतादित्यतः परस्मैपदेष्विति चानुवर्तते । तदाह । **इरितो धातोरित्यादिना** । **अच्युतदिति** ॥ अङि सति ङित्वान्नगुणः । अच्युतताम् अच्युतन् अच्युतः अच्युततम् अच्युतत अच्युतम् अच्युताव अच्युताम । अङभावे त्वाह । **अच्योतीदिति** ॥ इट ईटीति सिज्लोपः । **अच्योतिष्टामित्यादि** । **श्च्युतिरिति** ॥ च्युतिवद्रूपाणि । **चुच्योतेति** ॥ शर्पूर्वा इति चकारः शिष्यते । **यकाररहितोपीति** ॥ मधुश्चुतंघृतमिव सुपूतमित्यादौ दर्शनादिति भावः । **मन्थेति** ॥ विलोडनमास्फालनम् । **मन्थतीत्यादि** ॥ सुगमम् । आशीर्लिङि विशेषमाह । **यासुट इति** । **कुथीति** ॥ चत्वारोऽपि द्वितीयान्ताः । इदित्वान्नुमि कुन्थतीत्यादि सुगमम् । आशीर्लिङि यासुटः कित्वेऽपि इदित्वेन अनिदितामिति पर्युदासात् नलोपो नेत्याह । **इदित्वादिति** । **कुन्थ्यादिति** ॥ पुन्थ्यात् लुन्थ्यात् मन्थ्यात् । एतदर्थमेव मन्थधातोः पृथक् मथीति निर्देशः । **षिधगत्यामिति** ॥ अच्परकषकारादित्वात् षोपदेशोऽयम् । ततश्च धात्वादेरिति सः । तदाह । **सेधतीति** । **सिषेधेति** ॥ आदेशसकारत्वात् षत्वम् । अनिट्सु श्यन्विकरणस्यैव सिधेर्ग्रहणात् सेट्कोऽयम् । **असेधीदिति** ॥ इट ईटीति सिज्लोपः । नेटीति निषेधात् न हलन्तलक्षणा वृद्धिः । **असेधिष्टामित्यादि** ॥ अथ निषेधतीत्यादौ उपसर्गात्सुनोतीति षत्वं वक्ष्यति । तत्किमर्थं आदेशप्रत्यययोरित्येव सिद्धेरित्या

२२७० । उपसर्गात्सुनोतिसुवतिस्यतिस्तौतिस्तोभतिस्थासेनयसेधसिचसञ्जस्वञ्जाम् । (८-३-६५)

उपसर्गस्थान्निमित्तादेषां सस्य षः स्यात् ।

२२७१ । सदिरप्रतेः । (८-३-६६)

प्रतिभिन्नादुपसर्गात्सदेः सस्य षः स्यात् ।

२२७२ । स्तन्भेः । (८-३-६७)

सौत्रस्य सस्य षः स्यात् । योगविभाग उत्तरार्थः । किंच 'अप्रतेः' इति नानुवर्तते । 'बाहुप्रतिष्टम्भविवृद्धमन्युः' इति ।

२२७३ । अवाच्चालम्बनाविदूर्ययोः । (८-३-६८)

अवात्स्तन्भेरेतयोरर्थयोः षत्वं स्यात् ।

---

शङ्क्याह । **सात्पदाद्योरिति** ॥ उपसर्गात्सुनोतीति । **उपसर्गस्थादिति** ॥ उपसर्गशब्द उपसर्गस्थे लाक्षणिक इति भावः । **निमित्तादिति** ॥ इण्रूपादित्यर्थः । इण्कोरित्यधिकारेऽपि कोरिति नात्र सम्बध्यते । असम्भवात् । **सस्येति** ॥ सहेः साढः स इत्यतः स इति षष्ठयन्तमनुवर्तत इति भावः । **षः स्यादिति** ॥ अपदान्तस्य मूर्धन्य इत्यधिकारादिति भावः । अत्र सुनोतीत्यादिश्तिपानिर्देशो यङ्लुङ्निवृत्त्यर्थ इति प्राञ्चः । स्पष्टार्थ इति प्रौढमनोरमायाम् । सेनयेति णिजन्तो नामधातुः । सेधतीति शपानिर्देशात् सिध्यतेर्न ग्रहणम् । अभिषुणोतीत्याद्युदाहरणं । प्रकृते निषेधतीत्याद्यर्थमिह सूत्रोपन्यासः । प्रसङ्गादाह । **सदिरप्रतेरिति** ॥ उपसर्गादिति ॥ उपसर्गस्थादिणःपरस्येत्यर्थः । **सदिरिति** ॥ षष्ठ्यर्थे प्रथमेत्यभिप्रेत्याह । **सदेस्सस्येति** ॥ निषीदतीत्युदाहरणम् । **स्तन्भेरिति** ॥ नकारोपधनिर्देशस्य प्रयोजनमाह । **सौत्रस्येति** ॥ स्तन्भु स्तुन्भु इति सूत्रनिर्दिष्टस्य नोपधस्येत्यर्थः । सहि प्रतिपदोक्तः । ष्टभि प्रतिबन्ध इत्यस्य तु धातोरिदित्वान्नुमि लाक्षणिकत्वान्न ग्रहणम् । तेन विस्तम्भत इत्यादौ न षत्वम् । उदस्थास्तम्भ्वोरिति सूत्रे तु मोपधग्रहणादुभयोरपि ग्रहणम् । मकारस्य उभयत्रापि लाक्षणिकत्वात् । ननु सदिस्तन्भ्योरप्रतेरित्येकमेव सूत्रं कुतो न कृतमित्यत आह । **योगविभाग उत्तरार्थ इति** ॥ अवाच्चालम्बनाविदूर्ययोरित्युत्तरसूत्रे सदेरननुवृत्त्यर्थ इत्यर्थः । ननु सदेरस्वरितत्वादालम्बनाविदूर्ययोर्वृत्त्यभावादेवच अनुवृत्त्यभावः सिद्ध इत्यस्वारस्यादाह । **किञ्चेति । नानुवर्तत इति** ॥ स्तन्भेरित्यत्र अप्रतेरित्यस्य अनुवृत्तिर्नेष्टा । एकसूत्रत्वे तु अप्रतेरित्यस्य स्तन्भिनाऽपि सम्बन्धः स्यादिति भावः । अप्रतेरित्यस्य स्तन्भावनन्वयो वृद्धप्रयोगानुगत इत्याह । **बाहुप्रतिष्टम्भेति । अवाच्चेति** ॥ आलम्बनश्च आविदूर्यश्चेति

## २२७४ । वेश्च स्वनो भोजने । (८-३-६९)

व्यवाभ्यां स्वनतेः सस्य षः स्याद्भोजने ।

## २२७५ । परिनिविभ्यः सेवसितसयसिवुसहसुट्स्तुस्वञ्जाम् । (८-३-७०)

परिनिविभ्यः परेषामेषां सस्य षः स्यात् । निषेधति ।

## २२७६ । प्राक्सितादड्व्यवायेऽपि । (८-३-६३)

'–सेवसित–' (२२७५) इत्यत्र सितशब्दात्प्राक् ये सुनोत्यादयस्तेषामड्व्यवायेऽपि षत्वं स्यात् । न्यषेधत् न्यषेधीत् । न्यषेधिष्यत् ।

## २२७७ । स्थादिष्वभ्यासेन चाभ्यासस्य । (८-३-६४)

प्राक्सितात्स्थादिष्वभ्यासेन व्यवायेऽपि षत्वं स्यात् । एषामेवचाभ्यासस्य न तु सुनोत्यादीनाम् । निषिषेध । निषिषिधतुः ।

---

द्वन्द्वात्सप्तमीद्विवचनम् । **एतयोरिति** ॥ आलम्बनाविदूर्ययोरर्थयोर्विद्यमानस्य अवात्परस्य स्तन्भेरित्यन्वयः । अपूर्वविधिरयम् । इणः परत्वाभावादप्राप्तेः । आलम्बने यथा । यष्टिमवष्टभ्य तिष्ठतीति । आश्रित्येत्यर्थः । आविदूर्यं सामीप्यम् । अवष्टब्धा गौः । निरुद्धा सती समीपे आस्त इत्यर्थः । **वेश्चेति** ॥ अवादित्यनुकर्षणार्थश्चकारः । तदाह । **व्यवाभ्यामिति** ॥ विष्वणति । अवष्वणति । सशब्दम्भुङ्क्ते इत्यर्थः । अट्कुप्वाङिति णत्वम् । **परिनिविभ्य इति** ॥ सेवेत्यकार उच्चारणार्थः । षेवृ सेवायामितिधातोर्ग्रहणम् । परिषेवते । निषेवते । विषेवते । सितेत्यनेन षिञ् बन्धन इति क्तान्तस्य ग्रहणम् । अस्यैव धातोः एरजन्तो वा पचाद्यजन्तो वा सयशब्दः । विषितः विषयः । षिवु तन्तुसन्ताने परिषीव्यति । षह मर्षणे परिषहते । सुडागमः । पारिष्करोति । स्तुस्वञ्जोरुपसर्गात् सुनोतीत्येव सिद्धे सिवादीनां वेति विकल्पार्थम्पुनर्वचनम् । **प्राक्सितादिति** ॥ **सुनोत्यादय इति** ॥ उपसर्गात्सुनोतीत्यादिसूत्रोपात्ता इति शेषः । **तेषामिति** ॥ पञ्चदशानामित्यर्थः । **न्यषेधदिति** ॥ अकारेण व्यवहितत्वादिणः परत्वाभावादप्राप्तौ वचनम् । अभ्यषुणोदित्यप्युदाहार्यम् । **स्थादिष्विति** ॥ अभ्यासेनेति तृतीयान्तम् प्राक्सितादित्यनुवर्तते । तदाह । **प्राक्सितादिति** ॥ उपसर्गात्सुनोतीति सूत्रे स्थाधातुमारभ्य परिनिविभ्यःसेवसितेत्यत्र सितशब्दात्प्राक् ये धातव उपात्ताः तेषु दशस्वित्यर्थः । निषिषेधेत्यादौ अभ्यासात्परस्य सस्य अभ्यासव्यवहितत्वेन उपसर्गात्परत्वाभावादप्राप्तौ वचनम् । ननु निषिषेधेत्यादौ अभ्यासस्थसकारस्य उपसर्गात्सुनोतीत्यनेनैव सिद्धत्वादभ्यासस्येति व्यर्थमित्याशङ्क्य नियमार्थमित्याह । **एषामेवेति** ॥ यद्यभ्यासस्थसकारस्य चेत् षत्वं तर्हि स्थादिदशानामेवेत्यर्थः । एवञ्च षू प्रेरणे अभिसुसूषति । अत्राभ्यासस्य न षत्वम् । अभ्यासात्परस्य तु सस्य

## २२७८। सेधतेर्गतौ। (८-३-११३)

गत्यर्थस्य सेधतेः न षत्वं स्यात्। गङ्गां विसेधति। 'षिधू ४८ शास्त्रे माङ्गल्ये च'। शास्त्रं शासनम्।

## २२७९। स्वरतिसूतिसूयतिधूञूदितो वा। (७-२-४४)

स्वरत्यादेरूदितश्च परस्य वलादेरार्धधातुकस्येड्वा स्यात्।

## २२८०। झषस्तथोर्धोऽधः। (८-२-४०)

झषः परयोस्तथोर्धः स्यान्न तु दधातेः। जश्त्वम्। सिषेद्ध—सिषेधिथ। सेद्धा—सेधिता। सेत्स्यति—सेधिष्यति। असैत्सीत्।

---

स्तौतिण्योरेवेति नियमान्नषत्वम्। **सेधतेरिति। नषत्वमिति** ॥ नरपरेत्यतो नेत्यनुवृत्तेरिति भावः। गङ्गां विसेधतीति ॥ गच्छतीत्यर्थः। इह उपसर्गात्सुनोतीति षत्वन्न भवति। अनन्तरस्येति न्यायेन उपसर्गात्सुनोतीत्यस्यैवायन्निषेधः। नत्वादेशप्रत्यययोरित्यस्यापि। तेन सिषेधेत्यादौ आदेशप्रत्यययोरिति षत्वम्भवत्येव। षिधू इति ॥ ननु वाक्यसङ्घविशेषात्मकस्य शास्त्रस्य अक्रियारूपत्वात्कथं धात्वर्थत्वमित्यत आह। **शास्त्रं शासनमिति** ॥ माङ्गल्यन्तु शुभकर्म। षिधगत्यामितिवदस्यापि रूपाणि। तत्र वलादावार्धधातुके नित्यमिटि प्राप्ते। **स्वरतीति**॥ आर्धधातुकस्येड्वलादेरित्यनुवर्तते। स्वरति सूति सूयति धूञ् ऊदित् एषां समाहारद्वन्द्वात्पञ्चम्येकवचनम्। फलितमाह। **स्वरत्यादेरिति** ॥ स्वरतीति स्वृधातोः शपा निर्देशः। सूतीति सूयतीति च लुग्विकरणस्य श्यन्विकरणस्यच सूधातोर्निर्देशः। एवञ्च षू प्रेरण इति तौदादिकस्य न ग्रहणम्। धूञ् कम्पने। स्वादिः क्र्यादिश्च। ञकारानुबन्धनिर्देशात्। धू विधूनन इत्यस्य न ग्रहणम्। इट्सनिवेत्यतो वेत्यनुवर्तमाने वा ग्रहणं लिङ्सिचोरात्मनेपदेष्विति विकल्पनिवृत्त्यर्थमिति भाष्यम्। एवञ्च थलि इडभावपक्षे द्वित्वादौ सिसेध् थ इति स्थिते। **झषस्तथोरिति** ॥ झष इति पञ्चमी। तश्च थ्चेति द्वन्द्वः। तकारादकार उच्चारणार्थः। तकारथकारयोरिति लभ्यते। धः इति प्रथमैकवचनम्। अकार उच्चारणार्थः। धकार इति लभ्यते। अध इति षष्ठ्यन्तम्। धाधातुभिन्नस्येति लभ्यते। तदाह। **झषः परयोरिति। जश्त्वमिति** ॥ सिसेध् ध इति स्थिते झलाञ्जश् झशीति प्रथमधकारस्य दकारे सिषेद्धेति रूपमित्यर्थः। सिषिधिव सिषिध्व सिषिधिम सिषिध्म। क्रादिनियमस्तु नेड्वशीति प्रक्रमान्नञ्प्रापितस्यैवाभावस्य निवर्तकः। ननु विभाषादिप्रापितस्यापि। अनन्तरस्येति न्यायात्। इट्पक्षे आह। **सिषेधिथेति। सेद्धेति** ॥ लुट् तास् इडभावः डा टिलोपः गुणः धत्वं। सेद्धारौ सेद्धार इत्यादि। **सेधितेति** ॥ इट्पक्षे रूपम्। सेत्स्यति सेधिष्यतीति॥ लृटि स्यः इड्विकल्पः। **असैत्सीदिति** ॥ लुङस्तिप् इकारलोपः च्लिः सिच् इडभावः अस्तिसिच इति ईट् वदव्रजेति वृद्धिः धकारस्य चर्त्वम्। असैध् स् तामिति स्थिते। अपृक्त-

## २२८१ । झलो झलि । (८-२-२६)

झलः परस्य सस्य लोपः स्याज्झलि । असैद्धाम् । असैत्सुः । असैत्सीः । असैद्धम् । असैद्ध । असैत्सम् । असैत्स्व । असैत्स्म । पक्षे असेधीत् । असेधिष्टामित्यादि । 'खाद ४९ भक्षणे' । ऋकार इत् । खादति । चखाद । 'खद ५० स्थैर्ये हिंसायां च' । चाद्भक्षणे । स्थैर्येऽकर्मकः । खदति ।

## २२८२ । अत उपधायाः । (७-२-११६)

उपधाया अतो वृद्धिः स्यात् ञिति णिति च प्रत्यये परे । चखाद ।

## २२८३ । णलुत्तमो वा । (७-१-९१)

उत्तमो णल्वा णित्स्यात् । चखाद—चखद ।

## २२८४ । अतो हलादेर्लघोः । (७-२-७)

हलादेर्लघोरकारस्येडादौ परस्मैपदे परे सिचि वृद्धिर्वा स्यात् । अखादीत्—अखदीत् । 'बद ५१ स्थैर्ये' । पवर्गीयादिः । बदति । बबाद । बेदतुः । बेदिथ ।

---

त्वाभावादीडभावादिडभावाच्च, इट ईटीति सिचो लोपे अप्राप्ते । **झलोझलीति** ॥ झल इति पञ्चमी । संयोगान्तस्येत्यतो लोप इति, रात्सस्येत्यतः सस्येति चानुवर्तते । तदाह । **झलः परस्य सस्य लोपः स्यादिति** । **असैद्धामिति** ॥ असैध् स् तामिति स्थिते सलोपे धत्वे जश्त्वे च रूपम् । **पक्ष इति** ॥ इट्पक्षे इत्यर्थः । **असेधीदिति** ॥ इट ईटीति सलोपः । नेटीति वृद्धिप्रतिषेधः । लघूपधगुणः । **खाद इति** ॥ अत्र ऋदित्वन्नाग्लोपीव्याद्यर्थमित्यभिप्रेत्याह । ऋकार इदिति ॥ **खदेति** ॥ स्थैर्यम् स्थिरीभवनम् । णलि अजन्तत्वाभावादचोञ्णितीति वृद्धेरप्राप्तौ । **अत उपधायाः इति** । **वृद्धिः स्यादिति** ॥ मृजेर्वृद्धिरित्यतः तदनुवृत्तेरिति भावः । **ञिति णिति चेति** ॥ अचोञ्णितीत्यतः तदनुवृत्तेरिति भावः । **चखादेति** ॥ एत्वाभ्यासलोपौ तु नात्र भवतः । पित्वे अकित्त्वात् आदेशादित्वात् तदपेक्षया वृद्धेः परत्वाच्च । **णलुत्तम इति** । **णित् स्यादिति** ॥ गोतोणिदित्यतस्तदनुवृत्तेरिति भावः । **चखाद चखदेति** ॥ णित्त्वे उपधावृद्धिः । तदभावे न । **अतो हलादेरिति** ॥ सिचि वृद्धिः परस्मैपदेष्वित्यनुवर्तते । नेटीत्यस्मादिटीति ऊर्णोतेर्विभाषेत्यतो विभाषेति च । तदाह । **हलादेरिति** ॥ हलाद्यङ्गावयवस्येत्यर्थः । आदिग्रहणं स्पष्टार्थम् । हलः परस्येत्येव सिद्धेः । **अखादीदखदीत् इति** ॥ वृद्धौ तदभावे च इटईटीति सिज्लोपः । अखादिष्टामखदिष्टामित्यादि । **बदेति** ॥ स्थैर्यम् स्थिरीभवनम् । **पवर्गीयादिरिति** ॥ पवर्गतृतीयादिरित्यर्थः । नतु दंत्योष्ठ्यादिरिति भावः । **बबादेति** ॥ अत उपाधाया इति वृद्धिः । **बेदतुरिति** ॥ अभ्यासजश्त्वेन आदेशादित्वेऽपि जश्त्वस्य वैरूप्यापादकत्वाभावादेत्वाभ्यासलोपाविति भावः । बबादेत्यत्र तु

बवाद्–बवद । अबादीत्–अबदीत् । 'गद ५२ व्यक्तायां वाचि' । गदति ।

**२२८५ । नेर्गदनदपतपदघुमास्यतिहन्तियातिवातिद्रातिप्सातिवपतिवहतिशाम्यतिचिनोतिदेग्धिषु च । (८-४-१७)**

उपसर्गस्थान्निमित्तात्परस्य नेर्णः स्याद्गदादिषु । प्रणिगदति । जगाद । 'रद ५३ विलेखने' । विलेखनं भेदनम् । रराद । रेदतुः । 'णद ५४ अव्यक्ते शब्दे ।

**२२८६ । णो नः । (६-१-६५)**

धातोरादेर्णस्य नः स्यात् । नदति ।

णोपदेशास्त्वनर्द्नाटिनाथ्नाध्नन्द्नक्कनॄनृतः ।

नाटेर्दीर्घोर्हस्य पर्युदासाद्घटादिर्णोपदेश एव । तवर्गचतुर्थान्तनाधतेर्नॄनन्द्योश्च केचिण्णोपदेशतामाहुः ।

---

पित्वेन कित्वाभावादेत्वाभ्यासलोपौ न । **बेदिथेति** ॥ अकित्वेऽपि थलिचसेटीत्येत्वाभ्यासलोपौ । बेदथुः । बेद । अथ उत्तमपुरुषणलि णलुत्तमोवेति णित्वविकल्पादुपधावृद्धिविकल्प इत्याह । **बवाद बबदेति** ॥ बेदिव बेदिम । **अबादीत् अबदीत् इति** ॥ अतो हलादेरिति वृद्धिविकल्पः । **गदेति** ॥ व्यक्तवाक् मनुष्यकृतशब्दप्रयोगः । **जगादेति** ॥ चुत्वजश्त्वे । उपधावृद्धिः । वैरूप्यापादकादेशादित्वादेत्वाभ्यासलोपौ न । जगदतुः जगदुरित्यादि । **नेर्गदेति** ॥ रषाभ्यां नोण इत्यनुवर्तते । उपसर्गादसमासेऽपीत्यत उपसर्गादिति च । तच्च उपसर्गस्थे लाक्षणिकम् । तदाह । **उपसर्गस्थादिति** ॥ श्तिपा शपाच्च निर्देशाः यङ्लुङ्निवृत्त्यर्थाः । **प्रणिगदतीति** ॥ भिन्नपदस्थत्वादप्राप्तौ वचनम् । **रदेति** ॥ णलि उपधावृद्धिमभिप्रेत्याह । **ररादेति** ॥ रेदतुरित्यादि । अरादीत् । अरदीत् । **णदेति** ॥ अव्यक्तशब्दः अमनुष्यपशुपक्ष्यादिकृतशब्दप्रयोगः । **णोन इति** ॥ णइति षष्ठ्यन्तम् । धात्वादेः षस्स इत्यतोऽनुवर्तनादाह । **धातोरादेरिति** ॥ तेन अणतीत्यादौ ननत्वम् । **नस्स्यादिति** ॥ नकारः स्यादित्यर्थः । **नदतीति** ॥ मेघादिरिति शेषः । णोन इति नत्वस्यानैमित्तकतया लिण्णिमित्तादेशादित्वाभावादेत्वाभ्यासलोपौ स्तएव । ननाद नेदतुरित्यादि । अथ नृतनर्द्नन्दनक्कनाट्नाथृनाधृनॄवर्जम् णोपदेशा इति भाष्यं श्लोकार्धेन सङ्गृह्णाति । **णोपदेशास्त्विति** ॥ नर्दशब्दे । नट अवस्पन्दने चुरादिः । नाथृ नाधृ याच्ञादौ । द्वितीयचतुर्थान्तौ । टुनदि समृद्धौ । नक्क नाशने नॄ नये । नृती गात्रविक्षेपे । एभ्योऽष्टभ्योऽन्ये णकारादिधातवः इदानीं नकारादित्वेन दृश्यमाना अपि नत्वसम्पन्ननकारादितया णोपदेशाः प्रत्येतव्या इत्यर्थः । नाटीतिण्यन्तस्य प्रयोजनमाह । **नाटेरिति** ॥ **घटादिरिति** ॥ नट नृत्ताविति घटादिपठित इत्यर्थः । तत्फलं घटादौ वक्ष्यते । मतान्तरमाह । **तवर्गेति** ॥ तवर्गचतुर्थान्तनाधधातोः नॄनन्द्योश्च णोपदेशेषु पर्युदासाभावमङ्गीकृत्य तेषामपि णोपदेशत्वमाहुरित्यर्थः । अत्र मते पञ्चभ्यो भिन्ना णोपदेशा इति फलितम् । भाष्यविरोधोऽत्रारुचिबीजम् । ननु

## २२८७। उपसर्गादसमासेऽपि णोपदेशस्य। (८-४-१४)

उपसर्गस्थान्निमित्तात्परस्य णोपदेशस्य धातोर्नस्य णः स्यात्समासेऽसमासेऽपि। प्रणदति। प्रणिनदति। 'अर्द ५५ गतौ याचने च' 'अत आदेः' २२४८।

## २२८८। तस्मान्नुड्द्विहलः। (७-४-७१)

द्विहलो धातोर्दीर्घीभूतादकारात्परस्य नुट् स्यात्। आनर्द। आर्दीत्। 'नर्द ५६ गर्द ५७ शब्दे'। णोपदेशत्वाभावान्न णः। प्रनर्दति। गर्दति। जगर्द। 'तर्द ५८ हिंसायाम्'। तर्दति। 'कर्द ५९ कुत्सिते शब्दे'। कुत्सिते कौक्षे कर्दति। 'खर्द ६० दन्दशूके'। दंशनहिंसादिरूपायां दन्दशूकक्रियायामित्यर्थः। खर्दति। चखर्द। 'अति ६१ अदि ६२ बन्धने'। अन्तति। आनन्त। अन्दति। आनन्द। इदि ६३ परमैश्वर्ये'। इन्दति। इन्दाञ्चकार। 'बिदि ६४ अवयवे'। पवर्गतृतीयादिः। बिन्दति। अवयवं करोतीत्यर्थः। 'भिदि' इति

---

णकारमुपदिश्य तस्य किमर्थं नकारो विधीयते। नकारएवोपदिश्यतामित्याशङ्क्य तत्प्रयोजनमाह। **उपसर्गादिति** ॥ रषाभ्यां नोण इत्यधिकृतम्। तदाह। **उपसर्गस्थादिति** ॥ समासेऽङ्कुलेः सङ्ग इत्यतः समास इत्यनुवृत्तेरसमासे नस्यादित्यसमासग्रहणम्। तथा सति प्रणाम इत्यादौ समासे नस्यादित्यपिग्रहणम्। तदाह। **समासे असमासेऽपीति** ॥ णस्योपदेशो यस्मिन्निति विग्रहः। **प्रणदतीति** ॥ भिन्नपदत्वादप्राप्तिः। **प्रणिनदतीति** ॥ नेर्गदेति णत्वम्। नचात्र उपसर्गादसमास इति धातुनकारस्य णत्वं शङ्क्यम्। अट्कुप्वाङ्भिन्नेन व्यवधानात्। **अर्देति** ॥ उपधायाश्चेत्यत्र इक इत्युपस्थानात् अर्दतीत्यादौ न दीर्घः। लिटि णलि द्वित्वे हलादि शेषे अतआदेरित्यभ्यासाकारस्य दीर्घे आ अर्देतिस्थिते। **तस्मान्नुडिति** ॥ द्वौ हलौ यस्य तस्येति विग्रहः। तच्छब्देन अत आदेरिति कृतदीर्घः परामृश्यते। तदाह। **दीर्घीभूतादिति** ॥ टकार इत्। उकार उच्चारणार्थः। टित्वादाद्यवयवः। तदाह। **आनर्देति** ॥ **आर्दीदिति** ॥ इटईटि इति सिज्लोपः। नर्देत्यादि स्पष्टम्। **कर्देति** ॥ कुत्सितशब्देन कुत्सितविशेषो विवक्षित इत्याह। **कुत्सिते कौक्ष इति** ॥ कुक्षिभवे इत्यर्थः। **खर्देति** ॥ दन्दशूकः दंशनस्वभावस्सर्पः। दन्दशूको बिलेशय इत्यमरः। ननु सर्पस्य क्रियात्वाभावात् कथन्धात्वर्थत्वमित्यत आह। **दंशनेति। अतिअदीति** ॥ इदित्वान्नुम्। तदाह। **अन्ततीति। आनन्तेति** ॥ अत आदेरिति दीर्घः। तस्मान्नुड्द्विहल इति नुट्। एवमन्दति। **आनन्देति** ॥ आन्दीत्। **इदीति** ॥ परमैश्वर्यम् परमेश्वरीभवनम्। **इन्दतीति** ॥ इदित्वान्नुम्। **इन्दांचकारेति** ॥ इजादेश्चेत्याम्। **बिदीति** ॥ इदित्वान्नुमित्याह। **बिन्दतीति** ॥ नन्ववयवस्य अक्रियारूपत्वात् कथन्धात्वर्थत्वमित्यत आह। **अवयवंकरोतीत्यर्थ इति** ॥ अबिन्दीत् अबिन्दिष्टामित्यादि।

## २५२७ । बभूथाततन्थजगृम्भववर्थेति निगमे । (७-२-६४)

एषां वेदे इडभावो निपात्यते । तेन भाषायां थलीट् । ववरिथ । ववृव । ववृवहे । वरिता–वरीता ।

## २५२८ । लिङ्सिचोरात्मनेपदेषु । (७-२-४२)

वृङ्वृञ्भ्यामृदन्ताच्च परयोर्लिङ्सिचोरिड्वा स्यात्तङि ।

## २५२९ । न लिङि । (७-२-३९)

वृतो लिङ इटो दीर्घो न स्यात् । वरिषीष्ट–वृषीष्ट । अवारीत् । अवरिष्ट–अवरीष्ट–अवृत । धुञ् १२५६ कम्पने । धुनोति । धुनुते । अधौषीत् । अधोष्यत् । दीर्घान्तोऽप्ययम् । धूनोति । धूनुते । 'स्वरतिसूति—' (सू २२७९) इति वेट् । दुधविथ–दुधोथ । किति लिटि तु 'श्र्युकः—' (सू २३८१) इति निषेधं बाधित्वा क्रादिनियमान्नित्यमिट् । दुधुविव । 'स्तुसुधूञ्भ्यः–' (सू २३८५) इति नित्यमिट् । अधावीत् । अधविष्ट–अधोष्ट ।

अथ परस्मैपदिनः । टु दु १२५७ उपतापे । दुनोति । हि १२५८ गतौ वृद्धौ च ।

---

ववार । ववुः । **बभूथाततन्थ** ॥ निगमो वेदः । तदाह । **एषां वेदे इति** ॥ ननु 'कृसृभृवृ' इति निषेधादेव थलि ववर्थेति सिद्धे किमर्थं ववर्थग्रहणमित्यत आह । **तेन भाषायां थलीडिति** ॥ निगम एव वृणोतेस्थलि इण्निषेध इति नियमलाभादिति भावः । वव्रे । वव्राते । वव्रृषे । 'वृतो वा' इति मत्वा आह । **वरिता–वरीतेति** ॥ **लिङ्सिचोः** ॥ 'इट् सनि वा' इत्यतः इड्वा इत्यनुवर्तते । 'वृतो वा' इत्यतो वृत इति । तदाह । **वृङ्वृञ्भ्यामित्यादिना** ॥ **न लिङि** ॥ 'वृतो वा' इत्यतो वृत इत्यनुवर्तते । लिङीति षष्ठ्यर्थे सप्तमी । 'आर्धधातुकस्येट्' इत्यतः इडित्यनुवृत्तं षष्ठ्या विपरिणम्यते । 'ग्रहोऽलिटि' इत्यतो दीर्घ इत्यनुवर्तते । तदाह । **वृतः इति** ॥ वृङ्वृञ्भ्यामृकाराच्चेत्यर्थः । **वरिषीष्टेति** ॥ इट्पक्षे 'वृतो वा' इति प्राप्तो दीर्घो न भवति । **वृषीष्टेति** ॥ इडभावपक्षे 'उश्च' इति कित्त्वान्न गुणः । **अवारीदिति** ॥ लुङि परस्मैपदे सिचि वृद्धिः । अवारिष्टाम् । अवारिषुः । 'सिचि च परस्मैपदेषु' इति निषेधादिह 'वृतो वा' इति न दीर्घः । लुङस्तङि सिचि 'लिङ्सिचोः' इति इट्पक्षे 'वृतो वा' इति दीर्घविकल्पं मत्वा आह । **अवरिष्ट–अवरीष्टेति । अवृतेति** ॥ इडभावपक्षे 'ह्रस्वादङ्गात्' इति सिचो लोपः । **धुञ् कम्पने इति** ॥ ह्रस्वान्तोऽयमनिट् । धुञ इव रूपाणि । दीर्घान्तोऽप्ययमित्यादि व्यक्तम् । **अथ परस्मैपदिनः इति** ॥ राध साध संसिद्धावित्येतत्पर्यन्ता इत्यर्थः । 'टु दु उपतापे' इत्यारभ्य 'स्तृ इत्येके' इत्येतत्पर्यन्ता धातवो ह्रस्वान्ताः । **हि गताविति** ॥ प्रहिणोतीत्यत्र भिन्नपदत्वात् णत्वे प्राप्ते आह । **हिनु-**

## २५३० । हिनुमीना । (८-४-१५)

उपसर्गस्थान्निमित्तात्परस्य एतयोर्नस्य णः स्यात् । प्रहिणोति ।

## २५३१ । हेरचङि । (७-३-५६)

अभ्यासात्परस्य हिनोतेर्हस्य कुत्वं स्यान्न तु चङि । जिघाय । पॄ १२५९ प्रीतौ । पृणोति । पर्ता । स्पॄ १२६० प्रीतिपालनयोः । 'प्रीतिचलनयोः' इत्यन्ये । 'चलनं जीवनम्' । इति स्वामी । स्पृणोति । पस्पार । 'स्मृ' इत्येके । स्मृणोति । पृणोत्यादयस्त्रयोऽपि छान्दसा इत्याहुः । आप्लृ १२६१ व्याप्तौ । आप्नोति । आप्नुतः । आप्नुवन्ति । आप्नुवः । आप्ता । आप्नुहि । लृदित्त्वादङ् । आपत् । शक्लृ १२६२ शक्तौ । अशकत् । राध १२६३ साध १२६४ संसिद्धौ । राध्नोति ।

## २५३२ । राधो हिंसायाम् । (६-४-१२३)

एत्त्वाभ्यासलोपौ स्तः किति लिटि सेटि थलि च । अपरेधतुः । रेधुः । रेधिथ । राद्धा । साध्नोति । साद्धा । असात्सीत् । असाद्धाम् ।

अथ द्वावनुदात्तेतौ । अशू १२६५ व्याप्तौ सङ्घाते च । अश्नुते ।

---

**मीना** ॥ हिनु मीना अनयोर्द्वन्द्वात्षष्ठीद्विवचनस्य आर्षो लुक् । 'रषाभ्यान्नो णः' इत्यनुवर्तते । 'उपसर्गादसमासेऽपि' इत्यत उपसर्गादिति च । तदाह । **उपसर्गस्थादिति** ॥ **हेरचङि** ॥ 'चजोः' इति सूत्रात् कुग्रहणमनुवर्तते । 'अभ्यासाच्च' इत्यतः । **अभ्यासादिति** ॥ 'हो हन्तेः' इत्यतः ह इति षष्ठ्यन्तमनुवर्तते । तदाह । **अभ्यासात्परस्येति** ॥ **जिघायेति** ॥ जिघ्यतुः । जिघयिथ–जिघेथ । जिघ्यिव । आप्लृ व्याप्तौ । अनिट् । **आप्नुवन्तीति** ॥ संयोगपूर्वकत्वात् 'हुश्नुवोः' इति न यण् । **आप्नुवः इति** ॥ संयोगपूर्वकत्वात् 'उतश्च प्रत्ययात्' इति नोकारलोपविकल्पः । **आप्नुहीति** ॥ संयोगपूर्वकत्वादेव 'उतश्च प्रत्ययात्' इति हेर्न लुक् । **शक्लृ शक्ताविति** ॥ शक्नोति । शशाक । शेकतुः । शशक्थ–शेकिथ । शेकिव । शक्ता । शक्ष्यति । **अशकदिति** ॥ लृदित्त्वादङ् । राध साध संसिद्धौ । अनिटौ । दीर्घाकारवत्त्वात् 'अत एकहल्' इत्यप्राप्तावाह । **राधो हिंसायाम्** ॥ 'घ्वसोः' इत्यतः एदिति अभ्यासलोप इति च अनुवर्तते । 'गमहन' इत्यतः कितीति । 'अत एकहल्मध्ये' इत्यतः लिटीति 'थलि च सेटि' इति च सूत्रमनुवर्तते । तदाह । **एत्त्वेत्यादिना** । **अपरेधतुरिति** ॥ उपसर्गवशादिह हिंसायां वृत्तिः । अन्यत्र रराधतुः । थल्यपि क्रादिनियमान्नित्यमिट् । 'उपदेशेऽत्वतः' इत्यत्र तपरकरणादिह नेण्निषेधः । तदाह । **रेधिथेति** । **राद्धेति** ॥ 'झषस्तथोः' इति धः । **अशू व्याप्ताविति** ॥ ऊदित्त्वाद्वेट् । **अश्नुते इति** ॥ अश्नुवाते ।

## २५३३ । अश्नोतेश्च । (७-४-७२)

दीर्घादभ्यासादवर्णात्परस्य नुट् स्यात् । आनशे । अशिता--अष्टा । अशिष्यते--अक्ष्यते । अश्नुवीत । अक्षीष्ट--अशिषीष्ट । आशिष्ट--आष्ट । आक्षाताम् । ष्टिघ १२६६ आस्कन्दने । स्तिघ्नुते । तिष्टिघे । स्तेघिता ।

अथ आ गणान्तात्परस्मैपदिनः । तिक १२६७ तिग १२६८ गतौ च । चादास्कन्दने । तिक्नोति । तिग्नोति । षघ १२६९ हिंसायाम् । सघ्नोति । ञि धृषा १२७० प्रागल्भ्ये । धृष्णोति । दधर्ष । धर्षिता । दम्भु १२७१ दम्भने । दम्भनं दम्भः । दभ्नोति । ददम्भ । 'श्रन्थिग्रन्थिदम्भिस्वञ्जीनां लिटः कित्त्वं वा' इति व्याकरणान्तरमिहाप्याश्रीयत इत्युक्तम् । 'अनिदिताम्—' (सू ४१५) इति नलोपः । तस्याभीयत्वादसिद्धत्वेन एत्त्वाभ्यासलोपयोरप्राप्तौ 'दम्भेश्च एत्त्वाभ्यासलोपौ वक्तव्यौ' (वा ४१५३) देभतुः । ददम्भतुः । इदं कित्त्वं पिदपिद्विषयकमिति सुधाकरादयः । तन्मते तिप्सिप्मिप्सु । देभ । देभिथ । 'देभ' इति रूपान्तरं बोध्यम् । अपिद्विषयकमिति न्यासकारादिमते तु, ददम्भ । ददम्भिथ । ददम्भेत्येव । दभ्यात् । ऋधु १२७२ वृद्धौ । 'तृप प्रीणने' इत्येके । क्षुभ्नादित्वाण्णत्वं न । तृप्नोति । 'छन्दसि' (गण १९७) आगणान्तादधिकारोऽयम् । अह १२७३ व्याप्तौ । अह्नोति । दध १२७४ घातने पालने च । दध्नोति । चमु १२७५ भक्षणे ।

---

अश्नुवते । संयोगपूर्वकत्वात् 'हुश्नुवोः' इति न यण् । **अश्नोतेश्च** ॥ 'अत्र लोपः' इत्यतः अभ्यासस्येत्यनुवर्तते । 'तस्मान्नुट्' इति च । तच्छब्देन 'अत आदेः' इति कृतदीर्घ आकारः परामृश्यते । तदाह । **दीर्घादिति । आनशे इति** ॥ आनशिषे । आनक्षे । आनशिवहे । आनश्वहे । **अष्टेति** ॥ व्रश्चादिना शस्य षत्वे ष्टुत्वम् । विधिलिङ्याह । **अश्नुवीतेति** ॥ आशीर्लिङि ऊदित्त्वादिड्विकल्पं मत्वा आह । **अक्षीष्ट-अशिषीष्टेति** ॥ लुङि सिच इट्पक्षे आह । **आशिष्टेति** ॥ अनिट्पक्षे 'झलो झलि' इति सिचो लोपं मत्वा आह । **आष्टेति** ॥ ष्टिघधातुष्षोपदेशः । सेट् । **आ गणान्तादिति** ॥ स्वादिगणसमाप्तिपर्यन्तमित्यर्थः । **इत्युक्तमिति** ॥ कित्त्वपक्षे आह । **अनिदितामिति नलोपः इति** ॥ नन्वनिदितामिति नलोपे सति 'अत एकहल्मध्ये' इत्येत्त्वसिद्धेः 'दम्भेश्च' इति व्यर्थमित्यत आह । **तस्याभीयत्वादिति** ॥ नलोपस्येत्यर्थः । **दभ्यादिति** ॥ आशीर्लिङि 'अनिदिताम्' इति न लोपः । **छन्दसीति** ॥ गणसूत्रम् । तद्याचष्टे । **आगणान्तादिति । रि क्षि इति** ॥ रि क्षि चिरि जिरि दाश दृ इति षट्

चञ्नोति । रि १२७६ क्षि १२७७ चिरि १२७८ जिरि १२७९ दाश १२८० दृ १२८१ हिंसायाम् । रिणोति । क्षिणोति । अयं भाषायामपीत्येके । "न तद्यशः शस्त्रभृतां क्षिणोति" ऋक्षीत्येक एवाजादिरित्यन्ये । ऋक्षिणोति । चिरिणोति । जिरिणोति । दाश्नोति । दृणोति । वृत् ।

इति तिङन्तस्वादिप्रकरणम् ।

---

# ॥ अथ तिङन्ततुदादिप्रकरणम् ॥

तुद १२८२ व्यथने । इतः षट् स्वरितेतः ।

### २५३४ । तुदादिभ्यः शः । (३-१-७७)

तुदति । तुदते । तुतोद । तुतोदिथ । तुतुदे । तोत्ता । अतौत्सीत् । अतुत्त । णुद १२८३ प्रेरणे । नुदति । नुदते । नुनोद । नुनुदे । नोत्ता । दिश १२८४ अतिसर्जने । अतिसर्जनं दानम् । देष्टा । दिक्षीष्ट । अदिक्षत् ।

---

धातवः आद्यद्वितीयावेकाक्षरौ । तदाह । **रिणोति । क्षिणोतीति । अयम्भाषायामपीति ॥** क्षिधातुरित्यर्थः । तत्र प्रयोगं दर्शयति । **न तद्यशः इति । वृदिति ॥** स्वादयो वृत्ता इत्यर्थः ॥

इति श्रीवासुदेवदीक्षितविदुषा विरचितायां सिद्धान्तकौमुदीव्याख्यायां बालमनोरमायां श्नुविकरणं समाप्तम् ।

---

अथ शविकरणा धातवो निरूप्यन्ते । **इतष्षडिति ॥** 'ऋषी गतौ' इत्यतः प्रागित्यर्थः । **तुदादिभ्यश्शः ॥** कर्त्रर्थे सार्वधातुके परे तुदादिभ्यश्शः स्यात् । स्वार्थे इत्यर्थः । शबपवादः । **तुदतीति ॥** लघूपधगुणं बाधित्वा नित्यत्वात् शे कृते तस्य अपित्त्वात् 'सार्वधातुकमपित्' इति ङित्त्वान्न गुण इति भावः । अजन्ताकारवत्त्वाभावात् क्रादिनियमाल्लिटि थल्यपि नित्यमिट् । तदाह । **तुतोदिथेति । तोत्तेति ॥** अनिडिति भावः । **अतौत्सीदिति ॥** हलन्तलक्षणा वृद्धिः । णुदधातुर्णोपदेशः । अनिट् । दिशधातुरप्यनिट् । **देष्टेति ॥** व्रश्चेति षत्वे ष्टुत्वम् । स्येतु 'षढोः' इति षस्य कत्वञ्च । देक्ष्यति । **दिक्षीष्टेति ॥** 'लिङ्सिचौ' इति कित्त्वान्न गुणः । 'शल इगुपधात्' इति क्सं मत्वा आह । **अदिक्षत् । अदिक्षतेति ॥** 'भ्रस्ज

अदिक्षत । भ्रस्ज १२८५ पाके । 'ग्रहिज्या—' (सू २४१२) इति सम्प्रसारणम् । सस्य श्चुत्वेन शः । शस्य श्चुत्वेन जः । भृज्जति—भृज्जते ।

## २५३५ । भ्रस्जो रोपधयो रमन्यतरस्याम् । (६-४-४७)

भ्रस्जे रेफस्योपधायाश्च स्थाने रमागमो वा स्यादार्धधातुके । मित्त्वादन्त्यादचः परः । स्थानषष्ठीनिर्देशाद्रोपधयोर्निवृत्तिः । बभर्ज । बभर्जतुः । बभर्जिथ—बभर्ष्ठ । बभर्जे । रमभावे, बभ्रज्ज । बभ्रज्जतुः । बभ्रज्जिथ । 'स्कोः—' (सू ३८०) इति सलोपः । 'व्रश्च—' (सू २९४) इति षः । बभ्रष्ठ । बभ्रज्ज । भ्रष्टा—भर्ष्टा । भ्रक्ष्यति—भर्क्ष्यति । क्ङिति रमागमं बाधि-

---

पाके' अनिट् । भ्रस्ज् अ ति इति स्थिते आह । **ग्रहिज्येति** ॥ ङित्त्वाद्रेफस्य सम्प्रसारणमृकारः पूर्वरूपञ्चेति भावः । भ्रसृज् अ ति इति स्थिते आह । **सस्येत्यादि** ॥ णलि भ्रस्ज् अ इति स्थिते । **भ्रस्जो रोपधयोः** ॥ भ्रस्ज इत्यवयवषष्ठी । रोपधयोरिति स्थानषष्ठी । रश्च उपधा च तयोरिति विग्रहः । रेफादकार उच्चारणार्थः । रेफस्य उपधायाश्च स्थाने इति लभ्यते । 'आर्धधातुके' इत्यधिकृतम् । तदाह । **भ्रस्जे रेफस्येत्यादिना** ॥ रमि मकार इत्, अकार उच्चारणार्थः । तदाह । **मित्त्वादन्त्यादचः परः इति** ॥ तथाच रेफाकारादुपरि सकारात् प्राक् रेफ आगम इति फलितम् । भ्र र् स् ज् अ इति स्थितम् । ननु रम आगमत्वे रोपधयोरिति कथं स्थानषष्ठीनिर्देश इत्यत आह । **स्थानेति** ॥ स्थानं प्रसङ्गः । रेफस्य उपधायाश्च उच्चारणप्रसङ्गे सति अकारादुपरि रेफः प्रयोज्यः । भकारादुपरि रेफः जकारात्प्राक्सकारश्च न प्रयोज्याविति लब्धम् । तथाच तयोर्निवृत्तिः फलितेति भावः । एवञ्च भर्ज् अ इति स्थिते द्वित्वादौ रूपमाह । **बभर्जेति** ॥ अतुसादावपि संयोगात्परत्वात्कित्त्वाभावात् 'ग्रहिज्या' इति सम्प्रसारणन्न भवति । भारद्वाजनियमात्थलि वेडिति मत्वा आह । **बभर्जिथ—बभर्ष्ठेति** ॥ इडभावपक्षे बभर्ज् थ इति स्थिते 'व्रश्च' इति जस्य षः । ष्टुत्वेन थस्य ठ इति भावः । बभर्जिव । लिटस्तङ्याह । **बभर्जे इति** ॥ बभर्जाते इत्यादि सुगमम् । रमभावे आह । **बभ्रज्जेति** ॥ णलि भ्रस्ज् अ इति स्थिते द्वित्वे हलादिशेषे अभ्यासजश्त्वे बभ्रस्ज् अ इति स्थिते सस्य श्चुत्वेन शकारे शस्य जश्त्वेन जकार इति भावः । 'लिट्यभ्यासस्य' इति सम्प्रसारणस्य न प्रसक्तिः । अभ्यासे हलादिशेषेण रेफाभावात् । **बभ्रज्जतुरिति** ॥ संयोगात्परत्वादकित्त्वात् 'ग्रहिज्या' इति न सम्प्रसारणमिति भावः । **बभ्रज्जिथेति** ॥ थलि भारद्वाजनियमादिट्पक्षे रमभावपक्षे रूपम् । तत्र इडभावपक्षे बभ्रस्ज् थ इति स्थिते आह । **स्कोरिति** ॥ **व्रश्चेति षः इति** ॥ जस्येति शेषः । रमभावपक्षे लिटस्तङ्याह । **बभ्रज्जेति** ॥ बभ्रज्जाते । बभ्रज्जिषे । इत्यादि सुगमम् । **भ्रष्टेति** ॥ रमभावपक्षे रूपम् । **भर्ष्टेति** ॥ रमागमे भर्ज् ता इति स्थिते जस्य श्चुत्वेन शः शस्य 'व्रश्च' इति षः ष्टुत्वेन तकारस्य ट इति भावः । एवं **भ्रक्ष्यति—भर्क्ष्यतीति** ॥ 'षढोः' इति कत्वे सस्य षत्वमिति विशेषः । भृज्जतु । अभृज्जत् ।

त्वा सम्प्रसारणं पूर्वविप्रतिषेधेन' (वा ४०७८)। भृज्ज्यात्। भृज्ज्यास्ताम्। भर्क्षीष्ट—भ्रक्षीष्ट। अभार्क्षीत्—अभ्राक्षीत्। अभर्ष्ट—अभ्रष्ट। क्षिप १२८६ प्रेरणे। क्षिपति। क्षिपते। क्षेप्ता। अक्षैप्सीत्। अक्षिप्त। कृष १२८७ विलेखने। कृषति। कृषते। क्रष्टा—कर्ष्टा। कृष्यात्। कृक्षीष्ट। 'स्पृशमृश—' (वा १८२३) इति सिज्वा। पक्षे क्सः। सिचि अम्वा। अक्राक्षीत्—अकार्क्षीत्—अकृक्षत्। तङि 'लिङ्सिचौ—' (सू २३००) इति कित्त्वादम्न। अकृष्ट। अकृक्षाताम्। अकृक्षत। अकृक्षत। अकृक्षाताम्। अकृक्षन्त। ऋषी १२८८ गतौ। परस्मैपदी। ऋषति। आनर्ष। जुषी १२८९ प्रीतिसेवनयोः। आत्मनेपदिनश्चत्वारः। जुषते। ओ विजी १२९० भयचलनयोः। प्रायेणायमुत्पूर्वः। उद्विजते।

---

भृज्जेत्। ननु आशीर्लिङि भ्रस्ज् यात् इति स्थिते यासुटः कित्त्वात् 'ग्रहिज्या' इति सम्प्रसारणे पूर्वरूपे सकारस्य श्चुत्वेन शकारे शस्य जश्त्वेन जकारे भृज्ज्यात् इति रूपं वक्ष्यति। तदयुक्तं सम्प्रसारणं बाधित्वा परत्वात् रमागमे कृते भर्ज्ज्यात् इति प्रसङ्गादित्यत आह। **क्ङिति रमागममिति** ॥ आशीर्लिङस्तङि सीयुटि रमागमपक्षे आह। **भर्क्षीष्टेति** ॥ रमभावे तु अकित्त्वात्सम्प्रसारणाभावादाह। **भ्रक्षीष्टेति** ॥ लुङि परस्मैपदे रमागमविकल्पं मत्वा आह। **अभार्क्षीत्—अभ्राक्षीदिति** ॥ आत्मनेपदे सिचि रमागमविकल्पं मत्वा आह। **अभर्ष्ट—अभ्रष्टेति** ॥ 'झलो झलि' इति सिज्लोपः। **क्षिप प्रेरणे इति** ॥ अनिट्। अजन्ताकारवत्त्वाभावात् क्रादिनियमात्थलि नित्यमिट्। चिक्षेपिथ। एवं कृषधातुरपि। चकर्षिथ। लुटि तासि 'अनुदात्तस्य चर्दुपधस्य' इत्यमागमविकल्पः। अमागमाभावे गुणे रपरत्वम्। तदाह। **क्रष्टा—कर्ष्टेति** ॥ आशीर्लिङि परस्मैपदे आह। **कृष्यादिति** ॥ कित्त्वात् झलादित्वाभावाच्च अमागमो गुणश्च नेति भावः। आशीर्लिङस्तङ्याह। **कृक्षीष्टेति** ॥ 'लिङ्सिचौ' इति कित्त्वादमागमो गुणश्च नेति भावः। लुङि परस्मैपदे आह। **स्पृशमृशेति सिज्वेति। पक्षे इति** ॥ सिजभावपक्षे 'शलः' इति क्स इत्यर्थः। **सिचि अम्वेति** ॥ सिच्पक्षे 'अनुदात्तस्य च' इत्यमागमविकल्प इत्यर्थः। क्से तु कित्त्वादमागमो नेति भावः। **अक्राक्षीदिति** ॥ सिचि अमागमे रूपम्। **अकार्क्षीदिति**॥ सिचि अमभावपक्षे हलन्तलक्षणा वृद्धिरिति भावः। क्सादेशपक्षे आह। **अकृक्षदिति** ॥ कित्त्वादमागमो गुणश्च नेति भावः। **तङीति** ॥ तङि सिच्पक्षे अकृष् स् त इति स्थिते 'लिङ्सिचौ' इति कित्त्वादम् नेत्यर्थः। गुणोऽपि नेति ज्ञेयम्। **अकृष्टेति** ॥ 'झलो झलि' इति सिज्लोप इति भावः। **अकृक्षतेति** ॥ सिच्पक्षे अनतः परत्वाददादेश इति भावः। क्सादेशपक्षे आह। **अकृक्षतेति** ॥ कित्त्वादम् नेति भावः। **अकृक्षन्तेति** ॥ क्सादेशपक्षे अ कृक्ष झ इति स्थिते अच्परकत्वाभावात् 'क्सस्याचि' इत्यकारलोपाभावादतः परत्वाददादेशाभावे अन्तादेश इति भावः। **ऋषी गताविति** ॥ सेट्। आनर्षिथ। आनर्षिव। अर्षिता। आर्षीत्। **ओ विजी भयेति** ॥ सेट्।

## २५३६ । विज इट् । (१-२-२)

विजेः पर इडादिः प्रत्ययो ङिद्वत् । उद्विजिता । उद्विजिष्यते । ओ लजी १२९१ ओ लस्जी १२९२ व्रीडायाम् । लजते । लेजे । लज्जते । ललज्जे

अथ परस्मैपदिनः । ओ व्रश्चू १२९३ छेदने । 'ग्रहिज्या—' (सू २४१२) वृश्चति । वव्रश्च । वव्रश्चतुः । वव्रश्चिथ–वव्रष्ठ । 'लिट्यभ्यासस्य—' (सू २४०८) इति सम्प्रसारणम् रेफस्य ऋकारः । 'उरत्' (सू २२४४ । तस्य च 'अचः परस्मिन्—' (सू ५०) इति स्थानिवद्भावात् 'न सम्प्रसारणे—' (सू ३६३) इति वस्योत्वं न । व्रश्चिता–व्रष्टा । व्रश्चिष्यति–व्रक्ष्यति । वृश्च्यात् । अव्रश्चीत्–अव्राक्षीत् ।

---

उद्विजितेत्यादौ लघूपधगुणे प्राप्ते । **विज इट्** ॥ 'गाङ्कुटादिभ्यः' इत्यतः ङिदित्यनुवर्तते । तदाह । **विजेः परः इत्यादि** ॥ उद्विजिता । उद्विजिषीष्ट । उदविजिष्ट । व्रश्च्धातुरूदित्त्वाद्वेट् । **ग्रहिज्येति** ॥ लटि व्रश्च् अ ति इति स्थिते शस्यापित्त्वेन ङित्त्वात् 'ग्रहिज्या' इति रेफस्य सम्प्रसारणमृकारः पूर्वरूपश्चेति भावः । तदाह । **वृश्चतीति** ॥ वृश्चतः । वृश्चन्तीत्यादि । **वव्रश्चेति** ॥ णलि रूपमिदम् । थलि च प्रक्रिया अनुपदं वक्ष्यते । अतुसादौ संयोगात्परत्वेन कित्त्वाभावात् 'ग्रहिज्या' इति न सम्प्रसारणम् । तदाह । **वव्रश्चतुरिति** ॥ ऊदित्त्वात्थलादौ वेट् । तदाह । **वव्रश्चिथ–वव्रष्ठेति** ॥ धातुपाठे व्रश्चू इत्यत्र व्रस् च् इति स्थिते सस्य श्चुत्वेन शकारनिर्देशः । तथाच वव्रश्च् थ इति स्थिते श्चुत्वस्यासिद्धत्वात् 'स्कोः' इति सकारलोपे, चस्य 'व्रश्च' इति षत्वे ष्टुत्वेन थस्य ठत्वे वव्रष्ठेति रूपम् । वव्रश्चिव । ननु णलि थलि च अकिति द्वित्वे कृते 'लिट्यभ्यासस्य' इत्यभ्यासावयवयोर्वकाररेफयोर्द्वयोरपि सम्प्रसारणं स्यात् । नच 'न सम्प्रसारणे सम्प्रसारणम्' इति वकारस्य सम्प्रसारणनिषेधः शङ्क्यः । पूर्वं वकारस्य सम्प्रसारणसम्भवादित्यत आह । **लिट्यभ्यासेति** ॥ 'न सम्प्रसारणे' इति निषेधादेव ज्ञापकात् प्रथमं रेफस्य ऋकारस्सम्प्रसारणमित्यर्थः । तस्य सम्प्रसारणसम्पन्नस्य ऋकारस्य अकारविधिं स्मारयति । **उरदिति** ॥ ननु ऋकारस्य अकारे कृते वकारस्य सम्प्रसारणं स्यात् । सम्प्रसारणपरकत्वविरहेण 'न सम्प्रसारणे' इति निषेधाप्रवृत्तेरित्यत आह । **तस्य चेति** ॥ अकारस्येत्यर्थः । नच उरदत्त्वस्य परनिमित्तकत्वाश्रवणात् कथं स्थानिवत्त्वमिति वाच्यम् । आपादपरिसमाप्तेरङ्गाधिकारः इत्यभ्युपगम्य अङ्गाक्षिप्तप्रत्ययनिमित्तकत्वाभ्युपगमात् । "लक्ष्ये लक्षणस्य सकृदेव प्रवृत्तिः" इति न्यायस्तु 'न सम्प्रसारणे' इति निषेधादेव न स्थानिभेदे प्रवर्तते इति ज्ञायते । अत एव सुद्ध्युपास्य इत्यादौ धकारस्य द्वित्वे कृते पूर्वं धकारस्य जश्त्वेन दकारे तस्य द्वित्वमित्यास्तान्तावत् । आशीर्लिङ्याह । **वृश्च्यादिति** ॥ कित्त्वात् सम्प्रसारणमिति भावः । **अव्रश्चीदिति** ॥ ऊदित्त्वादिट्पक्षे 'नेटि' इति हलन्तलक्षणवृद्धिनिषेधः । इडभावं मत्वा आह ।

व्यच १२९४ व्याजीकरणे। विचति। विव्याच। विविचतुः। व्यचिता। व्यचिष्यति। विच्यात्। अव्याचीत्–अव्यचीत्। 'व्यचेः कुटादित्वमनसि' (वा ३४५६) इति तु नेह प्रवर्तते। 'अनसि' इति पर्युदासेन कृन्मात्रविषयत्वात्। उछि १२९५ उञ्छे। उञ्छति। उछी १२९६ विवासे। उच्छति। ऋच्छ १२९७ गतीन्द्रियप्रलयमूर्तिभावेषु। 'ऋच्छत्यॄताम्' (सू २३८३) इति गुणः। द्विहल्ग्रहणस्यानेकहलुपलक्षणत्वान्नुट्। आनर्छ। आनर्छतुः। ऋच्छिता। मिच्छ १२९८ उत्क्लेशे। उत्क्लेशः पीडा। मिमिच्छ। अमिच्छीत्। जर्ज १२९९ चर्च १३०० झर्झ १३०१ परिभाषणभर्त्सनयोः। त्वच १३०२ संवरणे। तत्वाच। ऋच १३०३ स्तुतौ। आनर्च। उब्ज १३०४ आर्जवे। उज्झ १३०५ उत्सर्गे। लुभ १३०६ विमोहने। विमोहनमाकुलीकरणम्। लुभति। लोभिता–लोब्धा। लोभिष्यति। रिफ १३०७ कत्थनयुद्धनिन्दाहिंसादानेषु। रिफति। रिरेफ। 'रिह' इत्येके। 'शिशुं न विप्रा मतिभी रिहन्ति'। तृप १३०८ तृम्फ १३०९ तृप्तौ।

---

**अव्राक्षीदिति**॥ अव्रश्च् सीत् इति स्थिते हलन्तलक्षणा वृद्धिः। श्चुत्वस्यासिद्धत्वात् 'स्कोः' इति सलोपः। 'व्रश्च' इति चस्य षः तस्य 'षढोः' इति कः सस्य ष इति भावः। "नकारजावनुस्वारपञ्चमौ झलि धातुषु। सकारजश्शकारश्चेत् षाट्टवर्गस्तवर्गजः" इत्याहुः। व्यच व्याजीकरणे। सेट्। शे 'ग्रहिज्या' इति सम्प्रसारणं मत्वा आह। **विचतीति**॥ **विव्याचेति**॥ 'लिट्यभ्यासस्य' इत्यभ्यासयकारस्य सम्प्रसारणम्। 'न सम्प्रसारणे' इति न वकारस्य। **विविचतुरिति**॥ कित्त्वात् 'ग्रहिज्या' इति सम्प्रसारणे कृते द्वित्वादीति भावः। विव्यचिथ। विव्यचिव। **विच्यादिति**॥ आशीर्लिङि कित्त्वाद्यकारस्य सम्प्रसारणम्। 'अतो हलादेः' इति वृद्धिविकल्पं मत्वा आह। **अव्याचीत्–अव्यचीदिति**॥ ननु 'व्यचेः कुटादित्वमनसि' इति व्यचेः कुटादित्ववचनात् व्यचिता, व्यचिष्यति, इत्यादावपि 'गाङ्कुटादिभ्यः' इति ङित्त्वात् सम्प्रसारणं स्यादित्यत आह। **व्यचेरिति**॥ **कृन्मात्रेति**॥ अवधारणे मात्रशब्दः। 'उछि उञ्छे' 'उछी विवासे' इति भ्वादौ पठितौ। इह तयोः पाठस्तु शविकरणार्थः। तेन उञ्छती–उञ्छन्ती। उच्छती। उच्छन्ती। इति 'आच्छीनद्योः' इति नुम्विकल्पस्सिद्ध्यति। भ्वादौ पाठस्तु पित्स्वरार्थ इत्यन्यत्र विस्तरः। **ऋच्छ गतीति**॥ 'छे च' इति तुकि तस्य श्चुत्वेन चकारनिर्देशः। ऋच्छति। णलि लघूपधत्वाभावाद्गुणे अप्राप्ते आह। **ऋच्छत्यॄतामिति**॥ द्वित्वे उरदत्त्वे हलादिशेषे 'अत आदेः' इति दीर्घे आ अर्च्छ इति स्थिते बहुहल्त्वात् द्विहल्त्वाभावान्नुटि अप्राप्ते आह। **द्विहल्ग्रहणस्येति**॥ **आनर्च्छेति**॥ 'इजादेः' इत्यत्र अनृच्छः इति पर्युदासादाम् न। **ऋच्छितेति**॥ 'ऋच्छत्यॄताम्' इत्यत्र लिटीत्यनुवृत्तेर्न गुण इति भावः। लुभधातुस्सेट्। 'तीषसह' इति वेडिति मत्वा आह। **लोभिता–लोब्धेति**॥ **शिशुन्नेति**॥ नशब्द इवार्थे। विप्राः

अत्र: प्रथमान्तः । द्वितीयो द्वितीयान्तः । द्वावपि द्वितीयान्तावित्यन्ये । तृपति । ततर्प । तर्पिता । 'स्पृशमृश—' इति सिज्विकल्पः पौषादिकस्यैव । अङपवादत्वात् । तेनात्र नित्यं सिच् । अतर्पीत् । तृम्फति । शस्य ङित्त्वात् 'अनिदिताम्—' (सू ४१५) इति नलोपे 'शे तृम्फादीनां नुम् वाच्यः' (वा ४३२३) आदिशब्दः प्रकारे । तेन येऽत्र नकारानुषक्तास्ते तृम्फादयः । तृम्फन्ति । ततृम्फ । तृफ्यात् । तुप १३१० तुम्प १३११ तुफ १३१२ तुम्फ १३१३ हिंसायाम् । तुपति । तुम्पति । तुफति । तुम्फति । दृप १३१४ दृम्फ १३१५ उत्क्लेशे । प्रथमः प्रथमान्तः । द्वितीयो द्वितीयान्तः । प्रथमो द्वितीयान्त इत्येके । दृपति । दृफति । दृम्फति । ऋफ १३१६ ऋम्फ १३१७ हिंसायाम् । ऋफति । आनर्फ । ऋम्फति । ऋम्फाञ्चकार । गुफ १३१८ गुम्फ १३१९ ग्रन्थे । गुफति । जुगोफ । गुम्फति । जुगुम्फ । उभ १३२० उम्भ १३२१ पूरणे । उभति । उवोभ । उम्भति । 'उम्भाञ्चकार' । शुभ १३२२ शुम्भ १३२३ शोभार्थे । शुभति । शुम्भति । दृभी १३२४ ग्रन्थे । दृभति । चृती १३२५ हिंसाश्रन्थनयोः । चर्तिता । 'सेऽसिचि—' (सू २५०६) इति वेट् । चर्तिष्यति–चर्त्स्यति । अचर्तीत् । विध १३२६ विधाने । विधति । वेधिता । जुड १३२७ गतौ । तवर्गपञ्चमान्त इत्येके । जुडति । 'मरुतो जुनन्ति' मृड १३२८ सुखने । मृडति । मर्डिता । पृड १३२९ च । पृडति । पृण १३३० प्रीणने । पृणति । पपर्ण । वृण १३३१ च । वृणति । मृण १३३२ हिंसायाम् । तुण १३३३ कौटिल्ये । तुतोण । पुण १३३४ कर्मणि शुभे । पुणति । मुण १३३५ प्रतिज्ञाने । कुण १३३६ शब्दोपकरणयोः । शुन १३३७ गतौ । द्रुण १३३८ हिंसागतिकौटिल्येषु । घुण १३३९ घूर्ण १३४० भ्रमणे । षुर १३४१ ऐश्वर्यदीप्त्योः । सुरति । सुषोर । आशिषि सूर्यात् । कुर १३४२ शब्दे । कुरति । कुर्यात् । 'न भकुर्छुराम्' (सू १६२९) इति निषेधो न । कुरेरेव तत्र ग्रहणमित्याहुः । खुर १३४३ छेदने । मुर १३४४ संवेष्टने ।

---

शिशुमिव मतिभिः रिहन्ति हिंसन्ति इत्यर्थः । तृफ्यादस्य विकरण एवादिः । अङपवादत्वादिति ॥ अपवादस्य उत्सर्गव्याप्यत्वादिति भावः । चृती हिंसाश्रन्थनयोरिति ॥ श्रन्थनं विस्रसनम् । चततीत्यादि सुगमम् । "अथास्य योक्त्रं विचृतेत्" इत्याश्वलायनः ।

क्षुर १३४५ विलेखने। घुर १३४६ भीमार्थशब्दयोः। पुर १३४७ अग्रगमने। वृहू १३४८ उद्यमने। दन्त्योष्ठ्यादिः। पवर्गादिरित्यन्ये। तृहू १३४९। स्तृहू १३५० तृंहू १३५१ हिंसार्थाः। तृहति। ततर्ह। स्तृहति। तस्तर्ह। तर्हिता—तर्ढा। स्तर्हिता—स्तर्ढा। अतृंहीत्—अताङ्क्षीत्। अतार्ढाम्। इषु १३५२ इच्छायाम्। 'इषुगमि—' (सू २४००) इति छः। इच्छति। एषिता—एष्टा। एषिष्यति। इष्यात्। ऐषीत्। मिष १३५३ स्पर्धायाम्। मिषति। मेषिता। किल २३५४ श्वैत्यक्रीडनयोः। तिल १३५५ स्नेहे। चिल १३५६ वसने। चल १३५७ विलसने। इल १३५८ स्वप्नक्षेपणयोः। विल १३५९ संवरणे। दन्त्योष्ठ्यादिः। बिल १३६० भेदने। ओष्ठ्यादिः। णिल १३६१ गहने। हिल १३६२ भावकरणे। शिल १३६३ षिल १३६४ उञ्छे। मिऌ १३६५ श्लेषणे। लिख १३६६ अक्षरविन्यासे। लिलेख। कुट १३६७ कौटिल्ये। 'गाङ्कुटादिभ्यः—' (सू २४६१) इति ङित्त्वं। चुकुटिथ। अञ्णित इति किम्। चुकोट। कुटिता। पुट १३६८ संश्लेषणे। कुच १३६९ सङ्कोचने। गुज १३७० शब्दे। गुड १३७१ रक्षायाम्। डिप १३७२ क्षेपे। छुर १३७३ छेदने। 'न भकुर्छुराम्' (सू १३२९) इति न दीर्घः। छुर्यात्। स्फुट १३७४ विकसने। स्फुटति। पुस्फोट। मुट १३७५ आक्षेपमर्दनयोः। त्रुट १३७६ छेदने। 'वा भ्राश—' (सू २३२१) इति श्यन्वा। त्रुट्यति—त्रुटति। तुत्रोट। त्रुटिता। तुट १३७७ कलहकर्मणि। तुटति। तुतोट। तुटिता। चुट १३७८ छुट १३७९ छेदने। जुट १३८० बन्धने। कड १३८१ मदे। लुट १३८२ संश्लेषणे। कृड १३८३ घनत्वे। घनत्वं सान्द्रता। चकर्ड। कृडिता। कुड १३८४ बाल्ये। पुड १३८५

विस्रंसयेदित्यर्थः। उपसर्गवशात् "यजमानो मेखलां विचृतते" इत्यापस्तम्बसूत्रे तु तङ् आर्षः। षुधातुष्षोपदेशः। कुर शब्दे। करोतेरेवेति व्याख्यानमेवात्र शरणम्। वृहूधातुः ऋदुपधः। ऊदित्त्वाद्वेट्कः। **पवर्गादिरिति** ॥ पवर्गतृतीयादिरित्यर्थः। **तृहू स्तृहू तृंहू इति** ॥ त्रयोऽपि ऋकारवन्तः। तृतीयोऽनुस्वारवान्। ऊदित्त्वाद्वेट्। **तर्ढेति** ॥ तृहेस्तासि ढत्वधत्वष्टुत्वढलोपाः। एवं स्तर्ढा। तृण्ढा। अतर्हीत्—अतार्क्षीत्। अस्तर्हीत्—अस्तार्क्षीत्। इति सिद्धवत्कृत्य आह। **अतृंहीत्—अताङ्क्षीदिति** ॥ तृंहेरिडभावपक्षे हलन्तलक्षणवृद्धौ रपरत्वम्। हस्य ढः ढस्य कः षत्वं। अनुस्वारस्य परसवर्णो ङकार इति भावः। **अतार्ढामिति** ॥ तृहेस्तसस्तामि सिच इडभावपक्षे लोपे हलन्तलक्षणवृद्धौ ढत्वधत्वष्टुत्वढलोपा इति भावः।

उत्सर्गे । घुट १३८६ प्रतिघाते । तुड १३८७ तोडने । तोडनं भेदः । थुड १३८८ स्थुड १३८९ संवरणे । थुडति । तुथोड । तुस्थोड । 'खुड' 'छुड' इत्येके । स्फुर १३९० फुल १३९१ सञ्चलने । 'स्फुर स्फुरणे । 'स्फुल सञ्चलने' इत्येके ।

## २५३७ । स्फुरतिस्फुलत्योर्निर्निविभ्यः । (८-३-७६)

षत्वं वा स्यात् । निष्फुरति–निःस्फुरति । 'स्फर' इत्यकारोपधं केचित्पठन्ति । पस्फार । 'स्फुड १३९२ चुड १३९३ ब्रुड १३९४ संवरणे' 'क्रुड १३९५ भृड १३९६ निमज्जने' इत्येके । 'गुरी १३९७ उद्यमने' अनुदात्तेत् । गुरते । जुगुरे । गुरिता । 'णू १३९८ स्तवने' । दीर्घान्तः । 'परिणूतगुणोदयः' । इतश्चत्वारः परस्मैपदिनः । नुवति । अनुवीत् । 'धू १३९९ विधूनने' । धुवति । 'गु १४०० पुरीषोत्सर्गे' । जुगुविथ–जुगुथ । गुता । गुष्यति । अगुषीत् । 'ह्रस्वादङ्गात्' (सू २३६९) । अगुताम् । अगुषुः । 'ध्रु १४०१ गतिस्थैर्ययोः' । 'ध्रुव' इति पाठान्तरम् । आद्यस्य ध्रुवतीत्यादि गुवतिवत् । द्वितीयस्तु सेट् । दुध्रुविथ । ध्रुविता । ध्रुविष्यति । ध्रुव्यात् । अध्रुवीत् । अध्रुविष्टाम् । 'कुङ् १४०२ शब्दे' । दीर्घान्तः इति कैयटादयः । कुविता । अकुविष्ट । 'ह्रस्वान्तः' इति न्यासकारः । कुता । अकुत । वृत् । कुटादयो वृत्ताः ।

'पृङ् १४०३ व्यायामे' । प्रायेण व्याङ्पूर्वः । रिङ् । इयङ् । व्याप्रियते । व्यापप्रे । व्यापप्राते । व्यापरिष्यते । व्यापृत । व्यापृषाताम् । 'मृङ् १४०४ प्राणत्यागे ।

## २५३८ । म्रियतेर्लुङ्लिङोश्च । (१-३-६१)

---

एत्रं अस्ताढाम् । अताण्ढाम् । स्फुर स्फुरणे । **स्फुरतिस्फुलत्योः** ॥ मूर्द्धन्य इत्यधिकृतम् । 'सिवादीनां वा' इत्यतो वेत्यनुवर्तते । तदाह । **षत्वं वा स्यादिति** ॥ शेषपूरणम् । **णू स्तवने इति** । णोपदेशः। **परिणूतेति** ॥ 'श्र्युकः किति' इति नेट् । कुङ् शब्दे । **दीर्घान्तः इति** ॥ ततश्चायं सेट् । **पृङ् व्यायामे इति** ॥ ह्रस्वान्तोऽयमनिट् । 'ऋद्धनोः स्ये' इति इटं मत्वा आह । **व्यापरिष्यते इति** ॥ मृङ्धातुरनिट् । **म्रियतेः** ॥ 'अनुदात्तङितः' इत्यतः आत्मनेपदमित्यनुवर्तते । चकारेण 'शदेश्शितः' इत्यतः शित इत्यनुकृष्यते ।

लुङ्लिङोः शितश्च प्रकृतिभूतान्मृङस्तङ् नान्यत्र। ङित्त्वं स्वरार्थम्। म्रियते। ममार। ममर्थ। मम्रिव। मर्तासि। मरिष्यति। मृषीष्ट। अमृत।

अथ परस्मैपदिनः सप्त। रि १४०५ पि १४०६ गतौ। लघूपधगुणादन्तरङ्गत्वादियङ्। रियति। पियति। रेता। पेता। धि १४०७ धारणे। क्षि १४०८ निवासगत्योः। षू १४०९ प्रेरणे। सुवति। सविता। कॄ १४१० विक्षेपे। किरति। किरतः। चकार। चकरतुः। करिता–करीता। कीर्यात्। अकारीत्।

## २५३९। किरतौ लवने। (६-१-१४०)

उपात्किरतेः सुडागमः स्याच्छेदेऽर्थे। उपस्किरति। 'अडभ्यासव्यवायेऽपि सुट् कात्पूर्व इति वक्तव्यम्' (वा ३६९९)। उपास्किरत्। उपचस्कार।

## २५४०। हिंसायां प्रतेश्च। (६-१-१४१)

उपात्प्रतेश्च किरतेः सुट् स्याद्धिंसायाम्। उपस्किरति। प्रतिस्किरति। गॄ १४११ निगरणे।

## २५४१। अचि विभाषा। (८-२-२१)

---

प्रकृतिभूतादित्यध्याहार्यम्। तदाह। **लुङ्लिङोरिति** ॥ **तङ् स्यादिति** ॥ आत्मनेपदं स्यादित्यर्थः। म्रियमाणः इत्यत्र आनस्यापि इष्टत्वात्। ननु ङित्त्वादेव सिद्धे किमर्थमिदमित्याशङ्क्य नियमार्थमित्याह। **नान्यत्रेति** ॥ तर्हि ङित्त्वं व्यर्थमित्यत आह। **ङित्त्वं स्वरार्थमिति** ॥ 'तास्यनुदात्तेन्ङिददुपदेशाल्लसार्वधातुकमनुदात्तम्' इत्येतदर्थमित्यर्थः। **म्रियते इति** ॥ शे कृते रिङियङाविति भावः। ऋदन्तत्वात् भारद्वाजमतेऽपि नेडित्याह। **ममर्थेति।** **मम्रिवेति** ॥ क्रादिनियमादिट्। मर्ता। 'ऋद्धनोः स्ये' इति इटं मत्वा आह। **मरिष्यतीति** ॥ **रि पि गताविति** ॥ द्वाविमावनिटौ। ननु शे कृते तिपमाश्रित्य इकारस्य परत्वाल्लघूपधगुणः स्यादित्यत आह। **अन्तरङ्गत्वादियङिति** ॥ **कॄ विक्षेपे इति** ॥ दीर्घान्तोऽयं सेट्। **किरतीति** ॥ 'ऋत इद्धातोः' इति इत्त्वं रपरत्वम्। **चकरतुरिति** ॥ कित्त्वेऽपि 'ऋच्छत्यृताम्' इति गुण इति भावः। 'वृतो वा' इति मत्वा आह। **करिता–करीतेति** ॥ **किरतौ लवने** ॥ **उपादिति** ॥ 'उपात् प्रतियत्ने' इत्यतस्तदनुवृत्तेरिति भावः। **सुडागमः इति** ॥ 'सुट् कात्पूर्वः' इत्यतस्तदनुवृत्तेरिति भावः। 'अभ्यासव्यवायेऽपि' इति वार्तिकम्। 'सुट् कात्पूर्वः' इत्यनुवृत्तिलभ्यम्। **हिंसायां प्रतेश्च** ॥ चकारादुपादिति समुच्चीयते। तदाह। **उपादिति।** **गॄ निगरणे इति** ॥ निगरणं भक्षणम्। सेट्। **अचि विभाषा** ॥ 'ग्रो यङि' इत्यतः

गिरतेः रेफस्य लत्वं वा स्यादजादौ । गिरति–गिलति । जगार–जगाल । जगरिथ–जगलिथ । गरिता–गलिता । दृङ् १४१२ आदरे । आद्रियते । आद्रियेते । आदद्रे । अदद्रिषे । आदर्ता । आदरिष्यते । आदृषीष्ट । आदृत । आदृषाताम् । धृङ् १४१३ अवस्थाने । ध्रियते ।

अथ परस्मैपदिनः षोडश । प्रच्छ १४१४ ज्ञीप्सायाम् । पृच्छति । पप्रच्छ । पप्रच्छतुः । पप्रच्छिथ–पप्रष्ठ । प्रष्टा । प्रक्ष्यति । अप्राक्षीत् । वृत् । किरादयो वृत्ताः । सृज १४१५ विसर्गे । 'विभाषा सृजिदृशोः' (सू २४०४) । ससर्जिथ–सस्रष्ठ । स्रष्टा । स्रक्ष्यति । 'सृजिदृशोर्झल्यमकिति' (सू २४०५) इत्यमागमः । सृजेत् । सृज्यात् । अस्राक्षीत् । टु मस्जो १४१६ शुद्धौ । मज्जति । ममज्ज । मस्जिनशोर्झलि' (सू २५१७) इति नुम् । 'मस्जेरन्त्यात्पूर्वो नुम् वाच्यः (वा ३२१) । संयोगादिलोपः । ममङ्क्थ । ममज्जिथ ।

---

ग्रः इत्यनुवर्तते । 'कृपो रो लः' इत्यतः रो ल इति । तदाह । **गिरतेरिति** ॥ **अजादाविति** ॥ "धातोः कार्यमुच्यमानं तत्प्रत्यये भवति" इति परिभाषालब्धस्य प्रत्ययस्य अचा विशेषणात्तदादिविधिः । तेन गिराविल्यादौ नेति 'मृजेर्वृद्धिः' इति सूत्रभाष्ये स्पष्टम् । **दृङ् आदरे इति** ॥ ह्रस्वान्तोऽयम् । अनिट् । **आद्रियते इति** ॥ रिङ् इयङ् । 'ऋद्धनोः स्ये' इति इटं मत्वा आह । **आदरिष्यते इति** । **आदृषीष्टेति** ॥ 'उश्च' इति कित्त्वान्न गुणः । **आदृतेति** ॥ 'ह्रस्वादङ्गात्' इति सलोपः । **प्रच्छ ज्ञीप्सायामिति** ॥ ज्ञातुमिच्छा ज्ञीप्सा । अनिडयम् । **पृच्छतीति** ॥ शस्य ङित्त्वात् 'ग्रहिज्या' इति रेफस्य सम्प्रसारणं ऋकारः पूर्वरूपञ्चेति भावः । **पप्रच्छतुरिति** ॥ संयोगात् परत्वेन कित्त्वाभावान्न सम्प्रसारणमिति भावः । भारद्वाजनियमात्थलि वेडिति मत्वा आह । **पप्रच्छिथ–पप्रष्ठेति** ॥ इडभावपक्षे व्रश्चादिना छस्य षः थस्य ष्टुत्वेन ठ इति भावः । पप्रच्छिव । **प्रष्टेति** ॥ छस्य व्रश्चेति षः तकारस्य ष्टुत्वेन टः । नच षत्वस्यासिद्धत्वात् पूर्वं तुकि ततः छस्य षत्वे ष्टुत्वयोः प्रट्ष्टेति स्यादिति वाच्यम् । व्रश्चेतिसूत्रे सतुक्कस्य छस्य ग्रहणात् । **किरादयो वृत्ताः इति** ॥ नचैवं सति 'किरश्च पञ्चभ्यः' इत्यत्र पञ्चग्रहणं व्यर्थं । किरादीनाम्पञ्चत्वादिति वाच्यम् । तस्य 'रुदादिभ्यस्सार्वधातुके' इत्युत्तरार्थत्वात् । सृज विसर्गे । अनिट् । सृजति । ससर्ज । ससृजतुः । अजन्ताकारवत्त्वाभावेऽपि 'विभाषा सृजिदृशोः' इति थलि वेट् इति मत्वा आह । **ससर्जिथ–सस्रष्ठेति** ॥ इडभावे 'व्रश्च' इति जस्य षः थस्य ष्टुत्वेन ठः पित्त्वेन अकित्त्वात् 'सृजिदृशोः' इत्यमागम इति भावः । ससृजिव । टु मस्जो शुद्धौ । **मज्जतीति** ॥ सस्य श्चुत्वेन शः तस्य जश्त्वेन ज इति भावः । **ममङ्क्थेति** ॥ मस्जेर्द्वित्वे हलादिशेषे ममस्ज् थ इति स्थिते 'स्कोः' इति सकारलोपे ममज् थ इति स्थिते जस्य कुत्वेन गकारे 'मस्जिनशोः' इति नुमि तस्यानुस्वारे तस्य परसवर्णो ङकारः गस्य चर्त्वेन कः इति बोध्यम् । यद्यपि अकारात् परत्र नुमि सत्यपि इदं

मङ्क्ता। मङ्क्ष्यति। अमाङ्क्षीत्। अमाङ्क्ताम्। अमाङ्क्षुः। रुजो १४१७ भङ्गे। रोक्ता। रोक्ष्यति। अरौक्षीत्। अरौक्ताम्। भुजो १४१८ कौटिल्ये। रुजिवत्। छुप १४१९ स्पर्शे। छोप्ता। अच्छौप्सीत्। रुश १४२० रिश १४२१ हिंसायाम्। तालव्यान्तौ। रोष्टा। रोक्ष्यति। रेष्टा। रेक्ष्यति। लिश १४२२ गतौ। अलिक्षत्। स्पृश १४२३ संस्पर्शने। स्प्रष्टा—स्पर्ष्टा। स्प्रक्ष्यति—स्पर्क्ष्यति। अस्प्राक्षीत्—अस्पार्क्षीत्—अस्पृक्षत्। विच्छ १४२४ गतौ। 'गुपूधूप—' (सू २३०३) इत्यायः। आर्धधातुके वा। विच्छायति। विच्छायाञ्चकार—विविच्छ। विश १४२५ प्रवेशने। विशति। वेष्टा। मृश १४२६ आमर्शने। आमर्शनं स्पर्शः। अम्राक्षीत्—अमार्क्षीत्—अमृक्षत्। णुद १४२७ प्रेरणे। कर्त्रभिप्रायेऽपि फले परस्मैपदार्थः पुनः पाठः। षद्लृ १४२८ विशरणगत्यवसादनेषु। 'सीदति' इत्यादि भौवादिकवत्। इह पाठो नुम्विकल्पार्थः। सीदती—सीदन्ती। ज्वलादौ पाठस्तु णार्थः। सादः। स्वरार्थश्च। शबनुदात्तः। शस्तूदात्तः। शद्लृ १४२९ शातने। स्वरार्थ एव पुनः पाठः। शता तु नास्ति। 'शदेः शितः' (सू २३६२) इत्यात्मनेपदोक्तेः।

---

सिध्यति। तथापि अन्त्यात् पूर्वो नुमित्यस्य मग्न इत्यादौ नलोपः फलम्। अन्यथा उपधात्वाभावान्नस्य लोपो न स्यादिति भावः। एवं **मङ्क्तेति**॥ मङ्क्ष्यति इत्यत्र तु सस्य षत्वं विशेषः। 'रुजो भङ्गे' इत्यारभ्य 'विच्छ गतौ' इत्यतः प्रागनिटः। 'अनुदात्तस्य चर्दुपधस्य' इत्यम्विकल्पं मत्वा आह। **स्प्रष्टा—स्पर्ष्टेति**॥ णुद प्रेरणे। णोपदेशोऽयम्। 'विश प्रवेशने' इत्यारभ्य 'शद्लृ शातने' इत्यन्ताः अनिटः। तत्र अदुपधस्य थलि वेट्। अन्यस्य तु नित्यं नेट्। मृशेः 'अनुदात्तस्य च' इत्यम्विकल्पः। तदाह। **अम्राक्षीत्—अमार्क्षीदिति**॥ 'स्पृशमृश' इति सिज्वेति भावः। सिजभावे 'शलइगुपधात्' इति क्सं मत्वा आह। **अमृक्षदिति**॥ णुदधातुर्णोपदेशः। ननु तनादिगण एवास्मिन् स्वरितेत्सु पठितस्य किमर्थमिह पाठ इत्यत आह। **कर्त्रभिप्रायेऽपीति**॥ षद्लृधातोर्भ्वादौ पठितादेव सीदति इत्यादि सिद्धेः इह पाठो व्यर्थ इत्यत आह। **इह पाठः इति**॥ सीदन्ती इति शत्रन्तात् शविकरणात् ङीपि 'आच्छीनद्योः' इति नुम् विकल्पार्थ इह पाठ इत्यर्थः। भ्वादावेव पाठे तु 'शप्श्यनोर्नित्यम्' इति नित्यो नुम् स्यादिति भावः। तर्हि भ्वाद्यन्तर्गणे ज्वलादावस्य पाठो व्यर्थ इत्यत आह। **ज्वलादाविति**॥ 'ज्वलितिकसन्तेभ्यः' इति कर्तरि णप्रत्ययार्थ इति भावः। तदुदाहृत्य दर्शयति। **सादः इति**॥ उभयत्र पाठस्य फलान्तरमाह। **स्वरार्थश्चेति**॥ तदेव विशदयति। **शबनुदात्तः इति**॥ 'अनुदात्तौ सुप्पितौ' इति पित्स्वरेणेति भावः। **शस्तूदात्तः इति**॥ 'प्रत्यय आद्युदात्तश्च' इत्यनेनेति भावः। ननु 'शद्लृ शातने' इत्यस्य भ्वादौ पाठादेव सिद्धे इह पाठो व्यर्थ इत्यत आह। **स्वरार्थ एवेति**॥ प्रागुक्तपित्स्वापित्त्वकृतस्वरभेदार्थ एवेत्यर्थः। ननु शत्रन्तात् ङीपि उक्तरीत्या नुम्विकल्पार्थोऽपि कुतो न स्यादित्यत आह। **शाता तु**

अथ षट् स्वरितेतः । मिल १४३० सङ्गमे । 'मिल संश्लेषणे' इति पठितस्य पुनः पाठः कर्त्रभिप्राये तङर्थः । मिलति । मिलते । मिमेल । मिमिले । मुच्लृ १४३१ मोक्षणे ।

## २५४२ । शे मुचादीनाम् । (७-१-५९)

नुम् स्यात् । मुञ्चति । मुञ्चते । मोक्ता । मुच्यात् । मुक्षीष्ट । अमुचत् । अमुक्त । अमुक्षाताम् । लुप्लृ १४३२ छेदने । लुम्पति । लुम्पते । अलुपत् । अलुप्त । विद्लृ १४३३ लाभे । विन्दति । विन्दते । विवेद । विविदे । व्याघ्रभूत्यादिमते सेट्कोऽयम् । वेदिता । भाष्यादिमतेऽनिट्कः । वेत्ता । परिवेत्ता । परिवर्जने । ज्येष्ठं परित्यज्य दारानग्नींश्च लब्धवानित्यर्थः । तृन्तृचौ । लिप १४३४ उपदेहे । उपदेहो वृद्धिः । लिम्पति । लिम्पते । लेप्ता । 'लिपिसिचि—' (सू २४१८) इत्यङ् । तङि तु वा । अलिपत् । अलिपत—अलिप्त । षिच १४३५ क्षरणे । सिञ्चति । सिञ्चते । असिचत् । असिचत—असिक्त । अभिषिञ्चति । अभ्यषिञ्चत् । अभिषिषेच ।

अथ त्रयः परस्मैपदिनः । कृती १४३६ छेदने । कृन्तति । चकर्त । कर्तिता । कर्तिष्यति—कर्त्स्यति । अकर्तीत् । खिद १४३७ परिघाते । खिन्दति । चिखेद । खेत्ता । अयं दैन्ये दिवादौ रुधादौ च । पिशि १४३८ अवयवे । पिंशति । पेशिता । अयं दीपनायामपि । 'त्वष्टा रूपाणि पिंशतु' वृत् । मुचादयस्तुदादयश्च ।  । इति तिङन्ततुदादिप्रकरणम् ।

---

**नास्तीति** ॥ शदेर्लटश्शानजेव नतु शत्रादेश इत्यर्थः । कुत इत्यत आह । **शदेश्शितः इतीति** ॥ मिल सङ्गमे । **पठितस्येति** ॥ अस्मिन्नेव तुदादिगणे परस्मैपदिषु पठितस्येत्यर्थः । **तङर्थः इति** ॥ पूर्वत्र पाठस्तु कर्त्रभिप्रायेऽपि परस्मैपदार्थ इत्यर्थः । 'मुचॢ मोक्षणे' । **शे मुचादीनाम्** ॥ **नुम् स्यादिति** ॥ शेषपूरणम् । 'इदितो नुम्' इत्यतस्तदनुवृत्तेरिति भावः । **मुक्षीष्टेति** ॥ 'लिङ्सिचौ' इति कित्त्वान्न गुण इति भावः । **अमुचदिति** ॥ लृदित्त्वादङिति भावः । लुङि तङि आह । **अमुक्तेति** ॥ 'झलो झलि' इति सिज्लोप इति भावः । लिप उपदेहे । **तङि तु वेति** ॥ 'आत्मनेपदेष्वन्यतरस्याम्' इत्यनेनेति शेषः । 'षिच क्षरणे' । **अभिषिञ्चतीति** ॥ 'उपसर्गात्सुनोति' इति षः । **अभ्यषिञ्चदिति** ॥ 'प्राक्सितादड्व्यवायेऽपि' इति षत्वम् । **अभिषिषेचेति** ॥ 'स्थादिष्वभ्यासेन' इति षः । **कृती छेदने इति** ॥ ईदित्त्वं 'श्वीदितः' इत्येतदर्थम् । 'सेऽसिचि' इति वेडिति मत्वा आह । **कर्तिष्यति—कर्त्स्यतीति** । **पिशि अवयवे इति** ॥ अवयवक्रियायामित्यर्थः । **रूपाणि पिंशत्विति** ॥ प्रकाशयत्वित्यर्थः ॥

इति श्रीवासुदेवदीक्षितविदुषा विरचितायां सिद्धान्तकौमुदी-
व्याख्यायां बालमनोरमायां शविकरणं समाप्तम् ।

। श्रीरस्तु ।

# ॥ अथ तिङन्तरुधादिप्रकरणम् ॥

रुधिर् १४३९ आवरणे । नव स्वरितेत: इरितश्च ।

## २५४३ । रुधादिभ्यः श्नम् । (३-१-७८)

शपोऽपवादः । मित्त्वादन्त्यादचः परः । नित्यत्वाद्गुणं बाधते । रुणद्धि । 'श्नसोरल्लोपः' (सू २४६९) । णत्वस्यासिद्धत्वादनुस्वारः परसवर्णः । तस्यासिद्धत्वाण्णत्वं न । 'न पदान्त—' (सू ५१) इति सूत्रेणानुस्वारपरसवर्णयोरल्लोपो न स्थानिवत् । रुन्धः । रुन्धन्ति । रुन्धे । रोद्धा । रोत्स्यति । रोत्स्यते । रुणद्धु । रुन्धात् । रुन्धि । रुणधानि । रुणधै । अरुणत् । अरुन्धाम् । अरुणत्—अरुणः । अरुणधम् । अरुधत्--अरौत्सीत् । अरुद्ध । भिदिर् १४४०

अथ श्नम्विकरणा धातवो निरूप्यन्ते । **रुधिरित्यादिना । रुधादिभ्यः श्नम्** ॥ कर्त्रर्थे सार्वधातुके परे रुधादिभ्यः श्नम्प्रत्ययस्स्यात् स्वार्थे इत्यर्थः । तदाह । **शपोऽपवादः इति** ॥ श्नमि शमावितौ । मित्त्वस्य फलमाह । **मित्त्वादन्त्यादचः परः इति** ॥ प्रत्ययत्वात् शकारस्येत्संज्ञा । शकारनिर्देशस्य 'श्नसोरल्लोपः' 'श्नान्न लोपः' इत्यत्र विशेषणार्थः । नतु सार्वधातुकसञ्ज्ञार्थः । फलाभावात् । नच 'सार्वधातुकमपित्' इति ङित्त्वे गुणनिषेधः फलमिति शङ्क्यम् । श्नमः पूर्वस्य इगन्तस्य अङ्गत्वाभावादेव गुणाप्रसक्तेः । ननु श्नमः प्राक् परत्वाल्लघूपधगुणे कृते पश्चात् श्नमि रोणन्धि इति स्यादित्यत आह । **नित्यत्वाद्गुणं बाधते इति** ॥ कृते अकृते च गुणे प्रवृत्तेः श्नम् नित्यः । तस्मिन् सति लघूपधत्वाभावान्न गुण इति भावः । **रुणद्धीति** ॥ रुनध् ति इति स्थिते 'झषस्तथोः' इति धत्वे णत्वमिति भावः । रुनध् तस् इति स्थिते प्रक्रियां दर्शयति । **श्नसोरल्लोपः इति** ॥ क्ङिति सार्वधातुके तद्विधेरिति भावः । रुन्ध् तस् इति स्थिते नस्य णत्वमाशङ्क्य आह । **णत्वस्यासिद्धत्वादिति** ॥ ननु कृते परसवर्णे तस्य नस्य णत्वमस्त्वित्यत आह । **तस्यासिद्धत्वादिति** ॥ परसवर्णसम्पन्ननस्येत्यर्थः । नन्विह अल्लोपस्य 'अचः परस्मिन्' इति स्थानिवत्त्वात् कथमनुस्वारपरसवर्णावित्यत आह । **न पदान्तेति । रुन्धः इति** ॥ 'झषस्तथोः' इति धः । **रुन्धन्तीति** ॥ रुणत्सि । रुन्धः । रुन्ध । रुणध्मि । रुन्ध्वः । रुन्ध्मः । **रुन्धे इति** ॥ रुन्धाते । रुन्धते । रुन्त्से । रुन्धाथे । रुन्द्ध्वे । रुन्धे । रुन्ध्वहे । रुन्ध्महे । रुरोध । रुरोधिथ । **अरुणदिति** ॥ लङि हल्ङ्यादिना तिपो लोपः । धस्य चर्त्वविकल्पः । सिपि तु हल्ङ्यादिना लुप्ते 'दश्च' इति रुत्वविकल्पं मत्वा आह । **अरुणत्-अरुणः इति** ॥ रुन्ध्यात् । रुन्धीत । रुत्सीष्ट । इरित्त्वादङ्विकल्पं मत्वा आह । **अरुधत्-अरौत्सीदिति** ॥ अङभावे सिचि हलन्तलक्षणा वृद्धिः । लुङस्तङ्याह । **अरुद्धेति** ॥

विदारणे । भिनत्ति । भिन्ते । भेत्ता । भेत्स्यति । अभिनत्--अभिनः । अभिनदम् । अभिन्त । अभिदत्--अभैत्सीत् । अभित्त । छिदिर् १४४१ द्वैधीकरणे । अच्छिदत्--अच्छैत्सीत् । अच्छित्त । रिचिर् १४४२ विरेचने। रिणक्ति । रिङ्क्ते । रिरेच । रिरिचे । रेक्ता । अरिणक् । अरिचत्--अरैक्षीत् । अरिक्त । विचिर् १४४३ पृथग्भावे । विनक्ति। विङ्क्ते । क्षुदिर् १४४४ सम्पेषणे । क्षुणत्ति । क्षुन्ते । क्षोत्ता । अक्षुदत्--अक्षौत्सीत् । अक्षुत्त । युजिर् १४४५ योगे । योक्ता । उ छृदिर् १४४६ दीप्तिदेवनयोः । छृणत्ति । छृन्ते । चच्छर्द । 'सेऽसिचि—' (सू २५०६) इति वेट् । चच्छृदिषे--चच्छृत्से । छर्दिता । छर्दिष्यति--छर्त्स्यति । अच्छृदत्--अच्छर्दीत् । अच्छर्दिष्ट । उ तृदिर् १४४७ हिंसानादरयोः । तृणत्तीत्यादि । कृती १४४८ वेष्टने । परस्मैपदी । कृणत्ति । आर्धधातुके तौदादिकवत् । ञि इन्धी १४४९ दीप्तौ । त्रय आत्मनेपदिनः ।

## २५४४ । श्नान्नलोपः । (६-४-२३)

श्नमः परस्य नस्य लोपः स्यात् । श्नसोरल्लोपः । (सू २४६९) । इन्धे । इन्त्से । इन्धिता । इनधै । ऐन्ध । ऐन्धाः । खिद १४५० दैन्ये ।

---

'झलो झलि' इति सिज्लोपः । **भिनत्तीति** ॥ भिन्तः । भिन्दन्ति । भिनत्सि । भिन्थः । भिनद्मि । भिन्द्वः । भिन्द्मः । **भिन्ते इति** ॥ भिन्दाते । भिन्दते । भिन्त्से । भिन्दाथे । भिन्ध्वे । भिन्दे । भिन्द्वहे । बिभेद । बिभेदिथ । बिभिदिव । बिभिदे । बिभिदिषे । **अभिन्तेति** ॥ लङि तङि रूपम् । **अभिनत्-अभिनः इति** ॥ 'दश्च' इति रुर्वेति भावः । लुङः परस्मैपदे आह । **अभिदत्-अभैत्सीदिति** ॥ इरित्त्वादङ् वेति भावः । लुङि तङ्याह । **अभित्तेति** ॥ 'झलो झलि' इति सिज्लोपः । अभित्साताामित्यादि । **उ छृदिरिति** ॥ उकार इत् । 'उदितो वा' इति क्त्वायामिड्विकल्पार्थः । ञि इन्धी दीप्तौ । ईदित्त्वं 'श्वीदितः' इत्येतदर्थम् । श्नमि कृते इन न् ध् ते इति स्थिते । **श्नान्नलोपः** ॥ श्नम्प्रत्ययैकदेशस्य श्न इत्यस्य श्नादिति पञ्चमी । नेति लुप्तषष्ठीकम् । तदाह । **श्नमः परस्य नस्येति** ॥ नकारस्येत्यर्थः । अकार उच्चारणार्थः । तथाच इन ध् ते इति स्थिते आह । **श्नसोरल्लोपः इति** ॥ तथाच इन्ध् ते इति स्थिते 'झषस्तथोः' इति तकारस्य धत्वे पूर्वधस्य जश्त्वे परिनिष्ठितमाह । **इन्धे इति** ॥ यद्यपि 'अनिदिताम्' इत्येवात्र नलोपः सिद्ध्यति । तथापि अनक्ति इत्याद्यर्थं सूत्रमिहापि न्याय्यत्वादुपन्यस्तमिति भावः । इन्धते । इन्ध्वे । इन्धाम् । इन्त्स्व । इन्ध्वम् । **इनधै इति** ॥ श्नमि उत्तमस्य इटः एत्वे आटि वृद्धौ इन न् ध् ऐ इति स्थिते श्नान्नलोपे आटः पित्त्वेन ङित्त्वाभावात् 'श्नसोरल्लोपः' इत्यभावे रूपमिति भावः । अत्र नलोपार्थमपि श्नान्न

खिन्ते। खेत्ता। विद १४५१ विचारणे। विन्ते। वेत्ता।

अथ परस्मैपदिनः। शिष्लृ १४५२ विशेषणे। शिनष्टि। शिंष्टः। शिंषन्ति। शिशेषिथ। शेष्टा। शेक्ष्यति। हेर्धिः। जश्त्वम्। ष्टुत्वं 'झरो झरि—' (सू ७१) इति वा डलोपः। अनुस्वारपरसवर्णौ शिण्ढि—शिण्ड्ढि। शिनषाणि। अशिनट्। ऌदित्त्वादङ्। अशिषत्। पिष्लृ १४५३ संचूर्णने। शिषिवत्। पिनष्टि। भञ्जो १४५४ आमर्दने। भनक्ति। बभञ्जिथ। बभङ्क्थ। भङ्क्ता। भुज १४५५ पालनाभ्यवहारयोः। भुनक्ति। भोक्ता। भोक्ष्यति। अभुनक्। तृह १४५६ हिंसि १४५७ हिंसायाम्।

---

लोप इत्यावश्यकम्। आटः पित्त्वेन ङित्त्वाभावात् 'अनिदिताम्' इत्यस्याप्रवृत्तेः। इनधावहै। लङ्या-ह्। **ऐन्धेति। ऐन्धाः इति॥** 'झषस्तथोः' इति थस्य धः। इन्धीत। लुङि ऐन्धिष्ट। शिष्लृ विशेषणे। अनिट्। **शिशेषिथेति॥** अजन्ताकारवत्त्वाभावात् क्रादिनियमान्नित्यमिट्। शि न ष् हि इति स्थिते अल्लोपे शि न् ष् हि इति स्थिते आह। **हेर्धिरिति॥** शिन् ष् धि इति स्थिते आह। **जश्त्वमिति॥** 'झलां जश् झशि' इति षस्य ड इति भावः। **ष्टुत्वमिति॥** धस्य ढ इति भावः। यद्यपि जश्त्वस्यासिद्धत्वात्ततः प्रागेव ष्टुत्वस्य उपन्यासो युक्तः। तथापि जश्त्वं ष्टुत्वमिति प्रक्रियाप्रदर्शनमात्रपरं क्रमस्तु न विवक्षितः। **झरः इति॥** जश्त्वसम्पन्नस्य डस्य लोपविकल्प इत्यर्थः। **अनुस्वारपरसवर्णाविति॥** नकारस्य 'नश्च' इत्यनुस्वारे सति तस्य परसवर्णो णकार इत्यर्थः। 'न पदान्त' इति निषेधान्नाल्लोपः स्थानिवत्। ढस्य लोपपक्षे उदाहरति। **शिण्ढीति॥** ढस्य लोपाभावे उदाहरति। **शिण्ड्ढीति॥** वस्तुतस्तु सानुस्वार एव पाठ उचितः 'दीर्घादाचार्याणाम्' इत्युत्तरं 'अनुस्वारस्य ययि परसवर्णः' 'वा पदान्तस्य' 'तोर्लि' 'उदः स्थास्तम्भ्वोः पूर्वस्य' झयो होऽन्यतरस्याम्। 'शश्छोटि' इति षट्सूत्रपाठोत्तरं 'झलाञ्जश्झशि' 'अभ्यासे चर्च' 'खरि च' 'वावसाने' 'अणोऽप्रगृह्यस्यानुनासिकः' इति पञ्चसूत्रपाठ इति भाष्यसम्मताष्टाध्यायीपाठे परस-वर्णदृष्ट्या 'झलाञ्जश्झशि' इत्यस्य 'झरो झरि' इत्यस्य चासिद्धत्वेन यय्परत्वाभावे परसवर्णाप्राप्ते-रिति शब्देन्दुशेखरे स्थितम्। शिंष्टात्। शिंष्टम्। शिंष्ट। **शिनषाणीति॥** आटः पित्त्वेन ङित्त्वा-भावात् 'श्नसोः' इत्यल्लोपो नेति भावः। **अशिनडिति॥** लङस्तिपो हल्ङ्यादिलोपे षस्य जश्त्वमिति भावः। अशिंष्टाम्। अशिंषन्। अशिनट्। अशिंष्टम्। अशिंष्ट। अशिनषम्। अशिंष्व। अशिंष्म। भञ्जो आमर्दने। **भनक्तीति॥** श्नमि भ न न् ज् ति इति स्थिते 'श्नान्न लोपः' इति नलोप इति भावः। भङ्क्तः। भञ्जन्तीत्याद्यूह्यम्। भारद्वाजनियमात्थलि वेडिति मत्वा आह। **बभञ्जिथ-बभङ्क्थेति॥ भङ्क्तेति॥** अनिडिति भावः। **भुज पालनेति॥** 'भुजोऽनवने' इति तङ् वक्ष्यते। भुङ्क्ते। भुञ्जाते इत्यादि। तृह, हिसि, हिंसायाम्। ऋदुपधः।

## २५४५ । तृणह इम् । (७-३-९२)

**तृहः श्नमि कृते इमागमः स्याद्धलादौ पिति । तृणेढि । तृण्ढः । ततर्ह । तर्हिता । अतृणेट् । हिनस्ति । जिहिंस । हिंसिता । उन्दी १४५८ क्लेदने । उनत्ति । उन्तः । उन्दन्ति । उन्दाञ्चकार । औनत् । औन्ताम् । औन्दन् । औनः–औनत् । औनदम् । अञ्जू १४५९ व्यक्तिमर्षणकान्तिगतिषु । अनक्ति । अङ्क्तः । अञ्जन्ति । आनञ्ज । आनञ्जिथ--आनङ्क्थ । अङ्क्ता । अञ्जिता । अङ्ग्धि । अनजानि । आनक् ।**

---

सेट् । श्नमि कृते णत्वे तृणह् ति इति स्थिते । **तृणह इम्** ॥ तृणह इति षष्ठी । कृतश्नमः तृहधातोर्निर्देशः । 'नाभ्यस्तस्य' इत्यतः पितीति 'उतो वृद्धिः' इत्यतः हलीति चानुवर्तते । फलितमाह । **तृहः श्नमि कृते इति** ॥ मित्त्वादचः परः । श्नमि कृते इत्यनुक्तौ तु येन नाप्राप्तिन्यायेन इमागमेन श्नम् बाध्येत । "सत्यपि सम्भवे बाधनम्भवति" इति न्यायात् । अन्यथा "ब्राह्मणेभ्यो दधि दीयताम् । तक्रं कौण्डिन्याय" इत्यत्र तक्रेण दधि न बाध्येत । श्नमा शप्च न बाध्येत । देशभेदेन उभयसम्भवादिति भावः । **तृणेढीति** ॥ तृणह् ति इति स्थिते इमागमे आद्गुणे तृणे ह् ति इति स्थिते । ढत्वधत्वष्टुत्वढलोपा इति भावः । **तृण्ढः इति** ॥ तसि श्नमि कृते तृणह् तस् इति स्थिते तसः अपित्त्वादिमागमाभावे श्नसोः' इत्यल्लोपे ढत्वधत्वष्टुत्वढलोपा इति भावः। तृंहन्ति । तृणेक्षि । तृण्ढः । तृण्ढ । तृणेह्मि । तृंह्वः । तृंह्मः । **ततर्हेति** ॥ ततृहतुः । ततर्हिथ । ततृहिव । **तर्हितेति** ॥ सेडिति भावः। तर्हिष्यति । तृणेढु–तृण्ढात् । तृण्ढाम् । तृंहन्तु । तृण्ढि–तृण्ड्ढ । तृण्ढात् । तृण्ढम् । तृण्ढ । तृणहानि । तृणहाव । तृणहाम । **अतृणेडिति** ॥ लङस्तिपि श्नमि इम् हल्ङ्यादिलोपः ढत्वजश्त्वे इति भावः । अतृण्ढाम् । अतृंहन् । अतृणेट् । अतृण्ढम् । अतृण्ढ । अतृणहम् । अतृंह्व । अतृंह्म । तृंह्यात् । तृह्यात् । अतर्हीत् । अतर्हिष्यत् । हिसिधातोरुदाहरति । **हिनस्तीति** ॥ इह श्नमि इदित्त्वान्नुमि च कृते 'श्नान्नलोपः' इति नुमो लोप इति भावः । हिंस्तः । हिंसन्ति । हिनस्सि । हिंस्थः । हिंस्थ । हिनस्मि । हिंस्वः । हिंस्मः । **जिहिंसेति** ॥ किति इदित्त्वान्नलोपो न । जिहिंसतुः । जिहिंसिथ । **हिंसितेति** ॥ सेडिति भावः । हिंसिष्यति । हिनस्तु । हिंस्ताम् । हौ श्नमि नुमि कृते 'श्नान्नलोपः' इति नुमो लोपे हेरपित्त्वेन ङित्वात् 'श्नसोः' इत्यल्लोपे 'धि च' इति सलोपे, हिन्धि इति रूपम् । हिंस्तात् । हिनसानि । अहिनत् । अहिंस्ताम् । अहिंसन् । सिपि रुर्वा । अहिनः–अहिनत् । अहिंस्तम् । अहिनसम् । अहिंस्व । हिंस्यात् । हिंस्याताम् । आशीर्लिङि श्नमभावान्नुमेव । इदित्त्वान्नलोपो न । हिंस्यादित्येव । हिंस्यास्ताम् । अहिंसीत् । अहिंसिष्यत् । उन्दी क्लेदने । **उन्दन्तीति** ॥ उनत्सि । उन्थः । उनद्मि । उन्द्वः । **उन्दामिति** ॥ इजादेश्चेत्याम् । उन्दिता । उन्दिष्यति । उनत्तु–उन्तात् । उन्धि । उनदानि । लङ्याह । **औनदिति** ॥ औन्ताम् । औन्दन् । औनः–औनत् । औनदम् । औन्द्व । उन्द्यात् । उद्यात् । अञ्जूधातुः

## २५४६। अञ्जेः सिचि। (७-२-७१)

अञ्जेः सिचो नित्यमिट् स्यात्। आञ्जीत्। तञ्चू १४६० सङ्कोचने। तङ्क्ता–तञ्चिता। ओ विजी १४६१ भयचलनयोः। विनक्ति। विङ्क्तः। 'विज इट्' (सू २५३६) इति ङित्त्वम्। विविजिथ। विजिता। अविनक्। अविजीत्। वृजी १४६२ वर्जने। वृणक्ति। वर्जिता। पृची १४६३ सम्पर्के। पृणक्ति। पपर्च।

इति तिङन्तरुधादिप्रकरणम्।

---

नोपधः। कृतपरसवर्णनिर्देशः। ऊदित्त्वाद्वेट्। **अनक्तीति** ॥ श्नमि कृते परसवर्णस्यासिद्धत्वात् 'श्नान्न लोपः' इति नकारलोपे जस्य कुत्वेन गः तस्य चर्त्वेन कः इति भावः। **अङ्क्तः इति** ॥ नलोपे अल्लोपे जस्य कुत्वेन गः गस्य चर्त्वेन कः श्नमो नस्य परसवर्णो ङ इति भावः। **अञ्जन्तीति** ॥ नलोपाल्लोपौ। श्नमो नस्य परसवर्णो ञ इति भावः। अनङ्क्षि। अङ्क्थः। अनज्मि। अञ्ज्वः। **अङ्ग्धीति** ॥ ह्यौ श्नमि धिभावे नलोपाल्लोपौ। जस्य कुत्वेन गकारः नस्य परसवर्णो ङकार इति भावः। **अनजानीति** ॥ श्नान्नलोपः। आटः पित्त्वादल्लोपो न। लङ्याह। **आनगिति** ॥ आङ्क्ताम्। आञ्जन्। अञ्ज्यात्। अज्यात्। **अञ्जेस्सिचि** ॥ 'इडत्यर्ति' इत्यतः इडित्यनुवर्तते। ऊदित्त्वादेव सिद्धे नित्यार्थमिदम्। तदाह। **अञ्जेरित्यादिना** ॥ तञ्चू सङ्कोचने। नोपधः कृतपरसवर्णनिर्देशः। अञ्जूवद्रूपाणि। यथायोग्यमूह्यानि। **ओ विजीति** ॥ ओकार इत्। अनिट्सु इरितो ग्रहणादयं सेट् ॥

इति श्रीवासुदेवदीक्षितविदुषा विरचितायां सिद्धान्तकौमुदीव्याख्यायां बालमनोरमायां श्नम्विकरणं समाप्तम्।



। श्रीरस्तु ।

# ॥ अथ तिङन्ततनादिप्रकरणम् ॥

अथ सप्त स्वरितेतः । तनु १४६४ विस्तारे । 'तनादिकृञ्भ्य उः' (सू २४६६) । तनोति । तन्वः—तनुवः । तनुते । ततान । तेने । तनु । अतनीत्—अतानीत् ।

## २५४७ । तनादिभ्यस्तथासोः । (२-४-७९)

तनादेः सिचो वा लुक्स्यात्तथासोः । थासा साहचर्यादेकवचनतशब्दो गृह्यते । तेनेह न । यूयमतनिष्ट--अतानिष्ट । 'अनुदात्तोपदेश—'

---

अथ उविकरणधातवो निरूप्यन्ते । तनुधातुरुदित् । 'उदितो वा' इति प्रयोजनम् । **तनादिकृञ्भ्य उः** ॥ कर्त्रर्थे सार्वधातुके तनादिभ्यः कृञश्च उप्रत्ययः स्यात् स्मार्थे इत्यर्थः । शपोऽपवादः । **तनोतीति** ॥ उप्रत्ययस्य तिपमाश्रित्य गुणः । तसादौ तु ङित्त्वान्न गुणः । तनुतः । झोऽन्तादेशे कृते उवङम्बाधित्वा 'हुश्नुवोः' इति यण् । तन्वन्ति । तनोषि । तनुथः । तनुथ । तनोमि । 'लोपश्चास्यान्यतरस्याम्' इत्युकारलोपविकल्पमभिप्रेत्याह । **तन्वः—तनुवः इति** ॥ तङ्याह । **तनुते इति** ॥ तन्वाते । तन्वते । तनुषे । तन्वाथे । तनुध्वे । तन्वे । तनुवहे । तन्वहे । तनुमहे । तन्महे । **ततानेति** ॥ तेनतुः । तेनिथ । तेन । तेनिव । तङ्याह । **तेने इति** ॥ तेनाते । तेनिरे । तेनिषे । तेनाथे । तेनिध्वे । तेने । तेनिवहे । तेनिमहे । तनिता । तनिष्यति । तनिष्यते । तनोतु—तनुतात् । तनुताम् । तन्वन्तु । 'उतश्च प्रत्ययात्' इति हेर्लुकं मत्वा आह । **तन्विति** ॥ तनुतात् । तनुतम् । तनुत । तनवानि । तनवाव । तनवाम । अतनोत् । अतनुताम् । अतन्वन् । अतनोः । अतनवम् । अतन्व । अतनुव । तनुयात् । तन्वीत । तनिषीष्ट । अतो हलादेरिति वृद्धिविकल्पं मत्वा आह । **अतनीत्—अतानीदिति** ॥ अतानिष्टाम् । अतनिषुः । अतनीः । अतनिष्टम् । अतानिष्ट । अतनिषम् । अतानिष्व । अतनिष्म । वृद्धिपक्षे अतानिष्टामित्यादि । अतनिष्यत् । लुङः प्रथमैकवचने मध्यमपुरुषैकवचने च विशेषमाह । **तनादिभ्यस्तथासोः** ॥ 'गातिस्था'इत्यतस्सिच इति'ण्यक्षत्रियार्ष'इत्यतो लुङीति 'विभाषा घ्राधेट्' इत्यतो वेति चानुवर्तते । तदाह । **तनादेरित्यादिना** ॥ **एकवचनतशब्दो गृह्यते इति** ॥ ननु लुङादेशपरस्मैपदमध्यमपुरुषबहुवचनतादेशोऽपीत्यर्थः । **यूयमिति** ॥ लुङि मध्यमपुरुषबहुवचने सिचि वृद्धिविकल्पे सति अतनिष्ट, अतानिष्टेत्यत्र सिचो नायं लुग्विकल्प इत्यर्थः । तदेवं प्रत्युदाहरणमुक्त्वा सूत्रस्योदाहरणं वक्ष्यन् प्रक्रियां दर्शयति । **अनुदात्तोपदेशेत्यनुनासिकलोपः । तङीति** ॥ तङि प्रथमैकवचने तशब्दे मध्यमपुरुषैकवचने थासि च सिचो लुकि 'अनुदात्तोपदेश' इति नकारस्य लोप इत्यर्थः । तदाह । **अतत**

(सू २४२८) इत्यनुनासिकलोपः । तङि । अतत–अतनिष्ट । अतथाः–अतनिष्ठाः । षणु १४६५ दाने । सनोति। सनुते । 'ये विभाषा' (सू २३१९)। सायात्–सन्यात् । 'जनसन—' (२५०४) इत्यात्त्वम् । असात–असनिष्ट । असाथाः–असनिष्ठाः । क्षणु १४६६ हिंसायाम् । क्षणोति । क्षणुते । 'ह्मयन्त—' (सू २२९९) इति न वृद्धिः । अक्षणीत् । अक्षत–अक्षणिष्ट । अक्षथाः–अक्षणिष्ठाः । क्षिणु १४६७ च । उप्रत्ययनिमित्तो लघूपधगुणः । 'संज्ञापूर्वको विधिरनित्यः' (९४) इति न भवतीत्यात्रेयादयः । भवत्येवेत्यन्ये । क्षिणोति–क्षेणोति । क्षेणितासि । क्षेणितासे । अक्षेणीत् । अक्षित–अक्षेणिष्ट । ऋणु १४६८ गतौ । ऋणोति–अर्णोति । अर्णुतः । अर्णुवन्ति । आनर्ण । आनृणे । अर्णितासि । आर्णीत् । आर्त–आर्णिष्ट । आर्थाः–आर्णिष्ठाः । तृणु १४६९ अदने । तृणोति–तर्णोति । तृणुते–तर्णुते । घृणु १४७० दीप्तौ । जघर्ण । जघृणे ।

अथ द्वावनुदात्तेतौ । वनु १४७१ याचने । वनुते । ववने । चान्द्रमते परस्मैपदी । वनोति । ववान । मनु १४७२ अवबोधने । मनुते । मेने । डु कृञ् १४७३ करणे । करोति । 'अत उत्सार्वधातुके' (सू २४६७) कुरुतः । यण् 'न भकुर्छुराम्' (सू १६२९) इति न दीर्घः । कुर्वन्ति ।

## २५४८ । नित्यं करोतेः । (६-४-१०८)

---

**अतनिष्टेति** ॥ **अतथाः–अतनिष्ठाः इति च** ॥ अतनिषाथामित्यादि सुगमम् । 'षणु दाने'। षोपदेशोऽयम् । तनुवद्रूपाणि । **असातेति** ॥ सिचो लुक्पक्षे रूपम् । **असनिष्टेति** ॥ इट् । झलादिपरकत्वाभावादात्वन्नेति भावः। क्षणुधातुरदुपधः। "वज्रेऽध्वर्युः क्षण्वीत" इति तैत्तिरीये। **क्षिणु चेति** ॥ इदुपधः । अयमपि हिंसायामित्यर्थः । "वज्रेऽध्वर्युः क्षिण्वीत" इति शाखान्तरं शाबरभाष्ये उदाहृतम् । ननु क्षिणोतीत्यत्र उप्रत्ययमाश्रित्य इकारस्य लघूपधगुणः कस्मान्नेत्यत आह । **उप्रत्ययनिमित्तः इति** ॥ 'ऋणु गतौ' । अत्रापि क्षणुवत् । मतभेदाल्लघूपधगुणतदभावौ । तदाह । **ऋणोति–अर्णोतीति** ॥ एवमग्रेऽपि । **अर्णुवन्तीति** ॥ संयोगपूर्वकत्वात् 'हुश्नुवोः' इति न यणिति भावः । डु कृञ् करणे । **करोतीति** ॥ उप्रत्ययमाश्रित्य ऋकारस्य गुणः रपरत्वम् । उकारस्य तु तिपमाश्रित्य गुणः । **कुरुतः इति** ॥ तसो ङित्त्वादुकारस्य न गुणः । कुरु अन्ति इति स्थिते उवङमाशङ्क्य आह । **यणिति** ॥ 'हुश्नुवोः' इत्यनेनेति शेषः। उकारस्य यणि कुर्व् अन्ति इति स्थिते 'हलि च' इति दीर्घमाशङ्क्य आह । **नभेति** ॥ वसि मसि च 'लोपश्चास्यान्यतरस्याम्' इत्युकारलोपविकल्पे प्राप्ते। **नित्यं करोतेः** ॥ 'उतश्च प्रत्य-

करोतेः प्रत्ययोकारस्य नित्यं लोपः स्याद्वमयोः परयोः । कुर्वः । कुर्मः । चकर्थ । चकृव । कर्ता । करिष्यति ।

## २५४९ । ये च (६-४-१०९)

कृञ उलोपः स्याद्यादौ प्रत्यये परे । कुर्यात् । आशिषि क्रियात् । कृषीष्ट । अकार्षीत् । 'तनादिभ्यः—' (सू २५४७) इति लुकोऽभावे 'ह्रस्वादङ्गात्' (सू २३६९) इति सिचो लोपः । अकृत । अकृथाः ।

## २५५० । संपरिभ्यां करोतौ भूषणे । (६-१-१३७)

## २५५१ । समवाये च । (६-१-१३८)

सम्परिपूर्वस्य करोतेः सुट् स्याद्भूषणे सङ्घाते चार्थे । संस्करोति । अलङ्करोतीत्यर्थः । संस्कुर्वन्ति । सङ्घीभवन्तीत्यर्थः । संपूर्वस्य क्वचिदभूषणेऽपि सुट् । 'संस्कृतं भक्षाः' (सू १२१७) इति ज्ञापकात् । 'परिनिविभ्यः—' (सू २२७५) इति षः । परिष्करोति । 'सिवादीनां वा—' (सू २३५९) । पर्यष्कार्षीत्—पर्यस्कार्षीत् ।

## २५५२ । उपात्प्रतियत्नवैकृतवाक्याध्याहारेषु च । (६-१-१३९)

उपात्कृञः सुट् स्यादेष्वर्थेषु । चात्प्रागुक्तयोरर्थयोः । प्रतियत्नो गुणाधानम् । विकृतमेव वैकृतं विकारः । वाक्यस्याध्याहारः आकाङ्क्षितैकदेशपूरणम् ।

---

यात्' इत्यनुवर्तते। 'लोपश्चास्यान्यतरस्याम्' इत्यतः लोपः म्वोरिति च। तदाह। **करोतेरिति** ॥ **चकर्थेति** ॥ 'कृसृभृवृ' इति नेडिति भावः। अजन्तत्वेऽपि ऋदन्तत्वात् भारद्वाजमतेऽपि नेट्। **करिष्यतीति** ॥ करोतु–कुरुतात्। कुरु। करवाणि। कुरुताम्। कुर्वाताम्। करवै। करवावहै। करवामहै। अकरोत्। अकुरुताम्। अकुरुत। अकुर्वाताम्। विधिलिङि कुरु यात् इति स्थिते। **ये च** ॥ 'लोपश्चास्यान्यतरस्याम्'इत्यतो लोप इति अस्येति चानुवर्तते। अस्येत्यनेन पर्वसूत्रे उत इत्युपात्तः उत्परामृश्यते। 'नित्यङ्करोतेः' इत्यतः करोतेरित्यनुवर्तते। अङ्गाक्षिप्तः प्रत्ययो यकारेण विशेष्यते तदादिविधिः। तदाह। **कृञः उलोपः इति। आशिषि क्रियादिति** ॥ 'रिङ् शयग्लिङ्क्षु' इति रिङिति भावः। **कृषीष्टेति** ॥ 'उश्च' इति कित्त्वान्न गुण इति भावः। **अकार्षीदिति** ॥ सिचि वृद्धौ रपरत्वमिति भावः। ननु लुङस्तङि अकृ स् त इति स्थिते 'तनादिभ्यस्तथासोः' इति सिचो लुकि अकृतेतीष्टं सिद्ध्यति। सिचो लुगभावे तु सकारः श्रूयेतेत्यत आह। **तनादिभ्यः इत्यादि ॥ संपरिभ्याम्। समवाये च** ॥ **सुट् स्यादिति** ॥ 'सुट् कात्पूर्वः' इत्यतः 'नित्यं करोतेः' इत्यतश्च तदनुवृत्तेरिति भावः। **प्रागुक्तयोरिति** ॥ भूषणसमवाययोरित्यर्थः। ननु 'संपरिभ्याम्' इति सुट् पदद्वयापेक्षत्वात्

पाटेः पटिः । पाटयतीति पटुः । नम्यतेऽनेन नाकुर्वल्मीकम् । मन्यत इति मधु । जायत इति जतु ।

१९ । **वलेर्गुक्च** । 'वल संवरणे' । वल्गुः ।

२० । **शः कित्सन्वच्च** । श्यतेरुः स्यात्स च कित्सन्वच्च । शिशुर्बालः ।

२१ । **यो द्वे च** । ययुरश्वोऽश्वमेधीयः । सन्वदिति प्रकृते द्वेग्रहणमित्वनिवृत्त्यर्थम् ।

२२ । **कुर्भ्रश्च** । बभ्रुः । 'बभ्रुर्मुन्यन्तरे विष्णौ बभ्रू नकुलपिङ्गलौ ।' चादन्यतोऽपि । चक्रुः कर्ता । जघ्नुर्हन्ता । पपुः पालकः ।

२३ । **पृभिदिव्यधिगृधिधृषिभ्यः** । कुः स्यात् । पुरुः । भिनत्ति भिदुर्वज्रम् । 'ग्रहिज्या–' (सू २४१२) इति सम्प्रसारणम् । विरहिणं विध्यति विधुः । 'विधुः शशाङ्के कर्पूरे हृषीकेशे च राक्षसे' । गृधुः कामः । धृषुर्दक्षः ।

२४ । **कृग्रोरुच्च** । करोतीति कुरुः । गृणातीति गुरुः ।

२५ । **अपदुःसुषु स्थः** । 'सुषामादिषु च' (सू १०२२) इति षत्वम् । अपष्ठु । प्रतिकूलम् । दुष्ठु । सुष्ठु ।

२६ । **रपेरिच्चोपधायाः** । अनिष्टं रपतीति रिपुः ।

२७ । **अर्जिदृशिकम्यमिपशिबाधामृजिपशितुग्धुग्दीर्घहकारश्च** । अर्जयति गुणानृजुः । सर्वानविशेषेण पश्यतीति पशुः । कन्तुः कन्दर्पः । अन्धुः कूपः ।

विवेकः । अनागमकानां सागमका आदेशा इति पक्षे तु स्थानषष्ठ्येवेति बोध्यम् । 'फल्गवसारेऽभिधेयवत् । नदीभेदे मलग्वां स्त्री' इति मेदिनी । **वल संवरणे इति** ॥ दन्त्योष्ठ्यादिः । यत्तूज्ज्वलदत्तेन सूत्रे पवर्गीयादिं पठित्वा, 'बल प्राणने' इत्युपन्यस्तम् । तल्लक्ष्यविरोधादुपेक्ष्यम् । 'अयं नाभा वदति वल्गवो गृहे' इत्यादौ दन्त्योष्ठ्यपाठस्य निर्विवादत्वात् । धरणिकोशस्थमाह । **बभ्रुरिति** ॥ 'बभ्रुर्वैश्वानरे मूलपाणौ च गरुडध्वजे । विशाले नकुले पुंसि पिङ्गले त्वभिधेयवत् ॥' इति मेदिनीकोशः । **अन्यतोऽपीति** ॥ 'भ्रः कुश्च' इति वक्तव्ये प्राक् प्रत्ययनिर्देशादित्याहुः । भ्रश्चेति प्रकृतिसंसृष्टेन चकारेण प्रकृत्यन्तरसमुच्चयाच्चेति बोध्यम् । **पृभिदिव्यधिगृधि** ॥ 'पुरुः प्राज्ये अभिधेयवत् । पुंसि स्याद्देवलोके च नृत्यभेदपरागयोः' इति मेदिनी । **सुषामेत्यादि** ॥ एतच्च न्यासाद्यनुरोधेनोक्तम् । वार्तिककृता तु, स्थास्थिन्स्थूनामुपसङ्ख्यातम् । 'अपष्ठुः पुंसि बाले च वामे स्यादन्यलिङ्गके' इति मेदिनी । **अर्जिदृशि** ॥ 'अर्ज अर्जने' । अस्य ऋजिरादेशः । दृशेः पशिः । कमेस्तुगागमः । 'अम रोगगत्यादिषु ।' अस्य धुगागमः । 'पशि नाशने' । सौत्रो धातुः । अस्य दीर्घः । 'बाधृ लोडने' । अस्य हादेशः । षड्भ्योऽपि कुप्रत्ययः स्यादित्यर्थः । **अविशेषेणेति** ॥ चादिगणे तु पश्विति पठितम् । 'पशु दृश्यर्थमव्ययम्' इति धरणिः । **कन्तुः कन्दर्प इति** ॥ 'कन्तुर्मकराङ्कः'

'पांसुर्ना न द्वयो रजः' । 'तालव्या अपि दन्त्याश्च सम्बसूकरपांसवः' । बाधत इति बाहुः । 'बाहुः स्त्रीपुंसयोर्भुजः' ।

२८ । **प्रथिम्रदिभ्रस्जां संप्रसारणं सलोपश्च** । त्रयाणां कुः सम्प्रसारणं भ्रस्जेः सलोपश्च । पृथुः । मृदुः । न्यङ्क्वादित्वात्कुत्वम् । भृज्जति तपसा भृगुः ।

२९ । **लङ्घिबंह्योर्नलोपश्च** । लघुः । 'बालमूललघ्वलमङ्गुलीनां वा लो रत्वमापद्यते' (वा ४७९८) । रघुर्नृपभेदः । बहुः ।

३० । **ऊर्णोतेर्नुलोपश्च** । ऊरु सक्थि ।

३१ । **महति ह्रस्वश्च** । उरु महत् ।

३२ । **श्लिषेः कश्च** । श्लिष्यतीति श्लिकुर्भृत्यः । उद्यतो ज्योतिश्च ।

३३ । **आङ्परयोः खनिशृभ्यां डिच्च** । आ खनतीत्याखुः । परं शृणातीति परशुः । पृषोदरादित्वादकारलोपात्पर्शुरपि ।

३४ । **हरिमितयोर्द्रुवः** । 'द्रु गतौ' अस्मात् हरिमितयोरुपपदयोः कुः स च डित् । हरिभिर्द्रूयते हरिद्रुर्वृक्षः । मितं द्रवति मितद्रुः समुद्रः ।

३५ । **शते च** । शतधा द्रवति शतद्रुः । बाहुलकात्केवलादपि । द्रवत्यूर्ध्वमिति द्रुर्वृक्षः शाखा च । तद्वान्द्रुमः ।

---

इति त्रिकाण्डशेषः । **पांसुरिति** ॥ 'पडि पसि नाशने ।' चुरादिर्दन्त्यान्तः । **स्त्रीपुंसयोरिति** ॥ उक्तं ह्यमरेण । 'द्वौ परौ द्वयोर्भुजबाहू' इति । परौ द्वौ भुजबाहुशब्दौ द्वयोः स्त्रीपुंसयोरिति तदर्थः । अकारान्तोऽप्ययम् । अत एव 'बाह्वोश्च भुजयोः पुमान्' इति दामोदरः । 'बाहा भुजेऽपुमान्मानभेदाश्वत्रुषवायुषु' इति मेदिन्याम् । टाबन्तोऽप्ययम् । **प्रथिम्रदि** ॥ प्रथते इति पृथुः । 'पृथुः स्यान्महति त्रिषु । त्वक्पत्र्याङ्कृष्णजीरेऽथ पुमानग्नौ नृपान्तरे' इति मेदिनी । म्रदितुं शक्यते अकठिनत्वादिति मृदुः कोमलः । 'भृगुः पुमान् मुनौ हरे तटे शुक्रे' इति मेदिनी । 'भृगुः शुक्रे प्रपाते च जमदग्नौ पिनाकिनि' इति कोशान्तरम् । **लघुरिति** ॥ 'पृक्कायां स्त्री लघुः क्लीबं शीघ्रे कृष्णागुरुण्यपि' इति त्रिकाण्डशेषः । 'लघुरगुरौ च मनोज्ञे निःसारे वाच्यवत् क्लीबम् । शीघ्रे कृष्णागुरुणि च पृक्कानामौषधौ तु स्त्री' इति मेदिनी । **नृपभेद इति** ॥ एतेन 'अवेक्ष्य धातोर्गमनार्थमर्थविच्चकार नाम्ना रघुमात्मसम्भवम्' इति व्याख्यातम् । **बहुरिति** ॥ बहुस्तु त्र्यादिसङ्ख्यासु विपुले त्वभिधेयवत्' इति मेदिनी । ऊरुर्जङ्घेति उज्ज्वलदत्तः । तन्न । तयोर्भेदात् । ऊर्णूयते आच्छाद्यते इत्यूरुः । कर्मणि प्रत्ययः । **उरु महदिति** ॥ कर्तरि प्रत्ययः । **उद्यत इति** ॥ स हि यावत्कार्यं श्लिष्यति लगति व्याप्रियते इति यावत् । **पर्शुरपीति** ॥ 'पर्शुः परशुना सह' इति विश्वः । **हरिद्रुर्वृक्ष इति** ॥ दारुहरिद्रा इत्येके । **तद्वानिति** ॥

**३६ । खरुशङ्कुपीयुनीलंगुलिगु** । पञ्चैते कुप्रत्ययान्ता निपात्यन्ते । खनते रेफश्चान्तादेशः । खरुः कामः क्रूरो मूर्खोऽश्वश्च । 'शङ्कुर्ना कीलशल्ययोः' । 'पिबतेरीत्त्वं युगागमश्च' । पीयुर्वायसः कालः सुवर्णञ्च । निपूर्वाल्लगि गतावस्मात्कुर्नेर्दीर्घश्च । नीलङ्कुः कृमिविशेषः शृगालश्च । 'नीलाङ्कुः' इति पाठान्तरम् । तत्र धातोरपि दीर्घः । 'लग सङ्गे' अस्य अत इत्वञ्च । लगतीति लिगु चित्तम् । लिगुर्मूर्खः ।

**३७ । मृगय्वादयश्च** । एते कुप्रत्ययान्ता निपात्यन्ते । मृगं यातीति मृगयुर्व्याधः । देवयुर्धार्मिकः । मित्रयुर्लोकयात्राभिज्ञः । आकृतिगणोऽयम् ।

**३८ । मन्दिवाशिमथिचतिचङ्क्यङ्किभ्य उरच्** । मन्दुरा वाजिशाला । वाशुरा रात्रिः । मथुरा । चतुरः । चङ्कुरो रथः । अङ्कुरः । खर्जूरादित्वादङ्कूरोऽपि ।

**३९ । व्यथेः सम्प्रसारणं किच्च** । 'विथुरश्चोररक्षसोः' ।

---

'युद्रुभ्यां मः' । खरुशब्दस्य क्रूरो मूर्ख इत्यर्थः । द्वयं दशपादीवृत्त्यनुसारेणोक्तम् । खरुः पतिंवरा कन्येत्यपि बोध्यम् । 'खरुर्दन्ते हरे दर्पे हये श्वेते तु वाच्यवत्' इति विश्वत्रिकाण्डशेषौ । **शंकुरिति** ॥ 'शकि शङ्कायाम्' । शङ्कतेऽस्मादिति, 'शङ्कुः कीले गरे शस्त्रे सङ्ख्यापादपभेदयोः । यादोभेदे च पापे च स्थाणावपि च दृश्यते' इति विश्वः । **पीयुरिति** ॥ 'पीयुः काले रवौ घूके' इति मेदिनी । **कृमिविशेष इति** । 'नीलङ्कुः कृमिजातौ स्यात् भम्भरालीप्रसूनयोः' इति विश्वः । **पाठान्तरमिति** ॥ 'नीलङ्कुरपि नीलाङ्कुः' इति विश्वः । **धातोरपीति** ॥ केचित्तु नीलशब्दे उपपदे गमेष्टिलोपः उपपदस्य मुम् दीर्घश्च पाक्षिको निपात्यते इत्याहुः । 'लिगु चित्ते नपुंसकम्' इति वररुचिः । **मृगय्वादयश्च** ॥ 'मृगयुः पुंसि गोमायौ व्याधे च परमेष्ठिनि' इति मेदिनी । 'मृगयुर्ब्रह्मणि ख्यातो गोमायुव्याधयोरपि । देवयुर्धार्मिके ख्यातो देवयुर्लोकयात्रिके' इति विश्वः । **आकृतिगण इति** ॥ तेन, 'पील प्रतिष्टम्भे' अस्मात्कुः । 'पीलुर्गजे द्रुमे काण्डे परमाणुप्रसूनयोः' इति विश्वः । भट्टास्तु पीलुशब्दस्य वृक्षे आर्यप्रसिद्धिः गजे तु म्लेच्छप्रसिद्धिरित्याश्रित्य व्यवजह्रुः । कडि मदे । कण्डुरित्यादि बोध्यम् । **वाशुरा रात्रिरिति** ॥ वाश्यन्ते अस्यामिति विग्रहः । वाशुरो गर्दभ इत्यन्ये । 'वाशुरा वासितारात्र्योः' इति मेदिनी । 'चङ्कुरः स्यन्दने वृक्षे' इति मेदिनी । 'अङ्कुरो रुधिरे लोम्नि पानीयेऽभिनवोद्भिदि' इति च । **खर्जूरेति** ॥ 'अङ्कूराङ्कुर एव च' इति विश्वप्रकाशः । **व्यथेः** ॥ 'व्यथ भयसञ्चलनयोः' । अस्मादुरच् कित् स्याद्धातोः सम्प्रसारणञ्च । दशपाद्यां तु धः किच्चेति पठित्वा धकारमन्तादेशं विधाय विधुरोऽनग्निकः इत्युदाहृतम् । माधवेनापि तदेवानुसृतम् । न त्वेतद्युक्तम् । 'त्वमेषां विथुरा शवांसि । अतिविद्धा विथुरेणाचिदस्त्रा' इत्यादिमन्त्रेषु थकारपाठस्य निर्विवादत्वात् । यदपि माधवेनोक्तं विदिभिदि इत्यत्र व्यथेः सम्प्रसारणञ्चेति वचनात् कुरचि थान्तं रूपमिति । तदतिस्थवीयः । कुरज्विधायके

४० । **मुकुरदर्दुरौ** । मुकुरो दर्पणः । बाहुलकान्मकुरोऽपि । 'दॄ विदारणे' धातोर्द्विर्वचनमभ्यासस्य रुक्टिलोपश्च । 'दर्दुरस्तोयदे भेके वाद्यभाण्डाद्रिभेदयोः' । 'दर्दुरा चण्डिकायां स्याद्ग्रामजाले च दर्दुरम्' इति विश्वः ।

४१ । **मद्गुरादयश्च** । उरजन्ता निपात्यन्ते । माद्यतेर्गुक् । मद्गुरो मत्स्यभेदः । 'कबृ वर्णे' । रुगागमः । 'कर्बुरं श्वेतरक्षसोः' । बध्नातेः खर्जूरादित्वादूरोऽपि । 'बन्धूरबन्धुरौ स्यातां नम्रसुन्दरयोस्त्रिषु' इति रन्तिदेवः । 'कोकतेर्वा कुक् (च)' (गण १९५) कुक्कुरः—कुकुरः ।

४२ । **असेरुरन्** । असुरः । प्रज्ञाद्यण् । आसुरः ।

४३ । **मसेश्च** । पञ्चमे पादे 'मसेरूरन्' इति वक्ष्यते । 'मसूरा मसुरा व्रीहिप्रभेदे पण्ययोषिति' । 'मसूरा मसुरा वा ना वेश्याव्रीहिप्रभेदयोः' । 'मसूरी पापरोगे स्यादुपधाने पुनः पुमान्' । 'मसूरमसुरौ च द्वौ' इति विश्वः ।

४४ । **शावशेराप्तौ** । शु इत्याश्चर्ये । श्वशुरः । 'पतिपत्न्योः प्रसूः श्वश्रूः श्वशुरस्तु पिता तयोः' इत्यमरः ।

४५ । **अविमह्योष्टिषच्** । अविषः । महिषः ।

४६ । **अमेर्दीर्घश्च** । 'आमिषं त्वस्त्रियां मांसे तथा स्याद्भोग्यवस्तुनि' ।

४७ । **रुहेर्वृद्धिश्च** । 'रङ्कुशम्बररौहिषाः' । 'रौहिषो मृगभेदे स्याद्रौहिषञ्च तृणं मतम्' इति संसारावर्तः ।

---

सूत्रे व्यर्थेरुपसङ्ख्यानस्याप्रसिद्धत्वात् । तस्मादिह धः किच्चेति दशपादीपाठं पुरस्कुर्वन्तः प्रसादकारादयोऽप्युपेक्ष्याः । कथं तर्हि विधुर इति प्रयोगस्य निर्वाह इति चेत् । धुरो विगत इति प्रादिसमासेनेत्यवधेहि । 'समासान्ताः' इति सूत्रे वृत्तिपदमञ्जर्योस्तथैवोक्तत्वात् । **मुकुर इति** ॥ 'मकि मण्डने' । अस्मादुरच् नलोपश्च । **बाहुळकादिति** ॥ धातोरुपधायाः पक्षे उकार इति भावः । 'मुकुरो मकुरोऽपि च' इति विश्वः । 'मुकुरः स्यान्मकुरवत् दर्पणे वकुळद्रुमे । कुलालदण्डे' इति मेदिनी च । **धातोरिति** ॥ केचित्तु गुणो दुरागमश्च निपात्यते इत्याहुः । **कर्बुरमिति** ॥ 'कर्बुरं सलिले हेम्नि कर्बुरः पापरक्षसोः । कर्बुरा कृष्णवृन्तायां शबले पुनरन्यवत्' इति मेदिनी । **अविष इति** ॥ राजा समुद्रश्च । माहिषो महान् । 'तुरीयन्धाम महिषो विवक्ति । उत माता महिषमन्ववेनत् ।' टित्त्वात् ङीप् । महिषी राजपत्नी । **रुहेः** ॥ 'रौहिषो मृगभेदे स्याद्रौहिषञ्च तृणं मतम्' इति संसारावर्तः ।

४८ । **तवेर्णिद्वा** । 'तव' इति सौत्रो धातुः । 'तविषताविषावब्धौ स्वर्गे च' । स्त्रियां तविषी—ताविषी नदी देवकन्या भूमिश्च । 'तविषी बलम्' इति वेदभाष्यम् ।

४९ । **नञि व्यथेः** । 'अव्यथिषोऽब्धिसूर्ययोः' । अव्यथिषी धरारात्र्योः ।

५० । **किलेर्बुक्च** । किल्बिषम् ।

५१ । **इषिमदिमुदिखिदिछिदिभिदिमन्दिचन्दितिमिमिहिमुहिमुचिरुचिरुधिबन्धिशुषिभ्यः किरच्** । इषिरोऽग्निः । मदिरा सुरा । 'मुदिरः कामुकाभ्रयोः' इति विश्वमेदिन्यौ । खिदिरश्चन्द्रः । 'छिदिरोऽसिकुठारयोः' । भिदिरं वज्रम् । मन्दिरं गृहम् । स्त्रियामपि । 'मन्दिरं मन्दिरापि स्यात्' इति विश्वः । 'चन्दिरौ चन्द्रहस्तिनौ' । तिमिरं तमोऽक्षिरोगश्च । मिहिरः सूर्यः । 'मुहिरः काम्यसभ्ययोः' । मुचिरो दाता । रुचिरम् । रुधिरम् । बधिरः । 'शुष शोषणे' शुषिरं छिद्रम् । शुष्कमित्यन्ये ।

५२ । **अशेर्णित्** । आशिरो वह्निरक्षसोः ।

५३ । **अजिरशिशिरशिथिलस्थिरस्फिरस्थविरखदिराः** । अजेर्वीभावाभावः । अजिरमङ्गणम् । शशेरुपधाया इत्वम् । 'शिशिरं स्यादृतोर्भेदे तुषारे शीतलेऽन्यवत्' । 'श्रथ मोचने' उपधाया इत्वं रेफलोपः । प्रत्ययरेफस्य लत्वम् । शिथिलम् । स्थास्फाय्योष्टिलोपः । स्थिरं निश्चलम् । स्फिरं प्रभूतम् ।

---

**वेदभाष्यमिति** ॥ 'इन्द्रो मित्रस्य तविषीम् । इन्द्रस्यात्र तविषीभ्यः' इत्यादिमन्त्रेष्विति भावः । वैदिकनिघण्टौ, 'ओजः पाजः' इत्यादिषु बलनामसु तविषीशब्दस्य पाठश्चेह मूलमिति बोध्यम् । 'तविषः शोभनाकारे भेलेऽब्धिव्यवसाययोः । तविषी देवकन्यायां पुंसि स्वर्गे महोदधौ ॥ तविषी चेन्द्रकन्यायां ना स्वर्गाम्बुधिकाञ्चने' इति मेदिनी । **किलेर्बुक् च** ॥ 'किल श्वैत्यक्रीडनयोः' । 'किल्बिषं पापरोगयोः । अपराधेऽपि' इति मेदिनी । **इषिरोऽग्निरिति** ॥ आहार इत्यन्ये । 'छिदिरः पावके रज्जौ करवाले परश्वधे । मन्दिरं नगरेऽगारे क्लीबं ना मकरालये । चन्दिरोऽनेकपे चन्द्रे । तिमिरन्ध्वान्तनेत्रामयान्तरे । मिहिरः सूर्यबुधयोः । मुहिरः काममूर्खयोः । रुधिरोऽङ्गारके पुंसि क्लीबन्तु कुङ्कुमासृजोः । शुषिरं वंश्यादिवाद्ये विवरे च नपुंसकम् । मूषिके न स्त्रियां नील्योषधौ रन्ध्रान्विते त्रिषु । आशिरो वीतिहोत्रे स्यात् राक्षसे भास्करे पुमान्' इति मेदिनी । **अजिरमङ्गणमिति** ॥ अङ्गेर्ल्युटि अनादेशस्य बाहुलकाण्णत्वमित्येके । अन्ये तु विश्वकोशाद्युपष्टम्भेन दन्त्यमेवेच्छन्ति । इह दशपादीवृत्तौ नञ्पूर्वस्य जीर्यतेः ऋवर्णलोपो निपात्यते इत्युक्तन्तदपि ग्राह्यम् । 'आशुन्दूतमजिरं प्रत्नमीड्यम्' इत्यादौ न जीर्यतीत्यजिरः इत्यर्थस्यानुगुणत्वात् । 'अजिरं प्राङ्गणे कार्यविषये दर्दुरेऽनिले । शिशिरो ना हिमे न स्त्री त्वृतुभेदे जडे

तिष्ठतेर्वुक्ह्रस्वत्वञ्च। स्थविरः। खदिरः। बाहुलकाच्छीङो बुक्ह्रस्वत्वञ्च। शिबिरम्।

५४। **सलिकल्यनिमहिभडिभण्डिशण्डिपिण्डितुण्डिकुकिभूभ्य इलच्**। सलति गच्छति निम्नमिति सलिलम्। कलिलः। अनिलः। महिळा। पृषोदरादित्वान्महेळापि। भड इति सौत्रो धातुः। 'भडिलौ शूरसेवकौ'। भण्डिलो दूतः कल्याणञ्च। शण्डिलो मुनिः। पिण्डिलो गणकः। तुण्डिलो मुखरः। कोकिलः। भविलो भव्यः। बाहुळकात्कुटिलः।

५५। **कमेः पश्च**। कपिलः।

५६। **गुपादिभ्यः कित्**। गुपिलो राजा। तिजिलो निशाकरः। गुहिलं वनम्।

५७। **मिथिलादयश्च**। मथ्यन्तेऽत्र रिपवो मिथिला नगरी। पथिलः—पथिकः।

५८। **पतिकठिकुठिगडिगुडिदंशिभ्य एरक्**। पतेरः पक्षी गन्ता च। कठेरः कृच्छ्रजीवी। कुठेरः पर्णाशः। बाहुळकान्नुम्न। गडेरो मेघः। गुडेरो गुडकः। दंशेरो हिंस्रः।

५९। **कुम्बेर्नलोपश्च**। कुबेरः।

६०। **शदेस्त च**। शतेरः शत्रुः।

६१। **मूलेरादयः**। एरगन्ता निपात्यन्ते। मूलेरो जटा। गुधेरो गोप्ता। गुहेरो लोहघातकः। मुहेरो मूर्खः।

६२। **कबेरोतः पश्च**। कपोतः पक्षी।

---

त्रिषु। खदिरः शाकभेदे स्यात् ना चन्द्रे दन्तधावने' इति मेदिनी। **शिबिरमिति** ॥ शेरतेऽस्मिन् राजानः। 'निवेशः शिबिरं षण्डम्' इत्यमरः। **सलिकलि** ॥ **कलिल इति** ॥ मिश्रो गहनश्च। **महिळेति** ॥ 'महिळा फलिनीस्त्रियोः' इति मेदिनी। **पृषोदरेति** ॥ तथाच दमयन्तीकाव्ये, 'परमहेलारतोऽप्यपारदारिकः' इति। परस्य महेला स्त्री। अथ च परमा उत्कृष्टा हेला क्रीडा तत्र रत इत्यर्थः। **कपिल इति** ॥ 'कपिला रेणुकायाञ्च शिंशपागोविशेषयोः। पुण्डरीकः करिण्यां स्त्री वर्णभेदे त्रिलिङ्गकम्। नानले वासुदेवे च कुक्कुरे' इति मेदिनी। रेणुकेह लताविशेषः। 'हरेणू रेणुका कौन्ती कपिला भस्मगन्धिनी' इत्यमरात्। **मिथिलादयश्च** ॥ मथे विलोडने। अकारस्येत्वं निपातनात्। **कुठेर इति** ॥ कठ कृच्छ्रजीवने। कुठि च। द्वितीयस्य इदित्त्वान्नुमि प्राप्ते आह। **बाहुलकादिति** ॥ **कबेरोतः** ॥ गुपादिसूत्रादारभ्य एतदन्तानि सप्त सूत्राणि केषाञ्चिदसम्मतानि। **कपोत**

६३ । **भातेर्डवतुः** । भातीति भवान् ।

६४ । **कठिचकिभ्यामोरन्** । कठोरः । चकोरः ।

६५ । **किशोरादयश्च** । किंपूर्वस्य शृणातेष्टिलोपः । किमोऽन्त्यलोपः । किशोरोऽश्वशावः । सहोरः साधुः ।

६६ । **कपिगडिगण्डिकटिपटिभ्य ओलच्** । कपीति निर्देशान्नलोपः । कपोलः । गडोलगण्डोलौ गुडकपर्यायौ । कटोलः कटुः । पटोलः ।

६७ । **मीनातेरूरन्** । मयूरः ।

६८ । **स्यन्देः सम्प्रसारणञ्च** । सिन्दूरम् ।

६९ । **सितनिगमिमसिसच्यविधाञ्क्रुशिभ्यस्तुन्** । सिनोतीति सेतुः । 'तितुत्र–' (३१६३) इति नेट् । तन्तुः । गन्तुः । मस्तु दधिमण्डम् । सच्यत इति सक्तुः । अर्धर्चादिः । 'ज्वर त्वर–' (सू २६५४) इत्यूठ् । तत्र क्ङितीत्यनुवर्तत इति मते तु बाहुलकात् । ओतुर्बिडालः । धातुः । क्रोष्टा ।

७० । **पः किच्च** । पिबतीति 'पितुर्वह्नौ दिवाकरे' ।

७१ । **अर्तेश्च तुः** । अर्तेस्तुः स्यात्स च कित् 'ऋतुः स्त्रीपुष्पकालयोः' ।

---

**इति** ॥ 'कपोतः स्याच्चित्रकण्ठे पारावतविहङ्गयोः' इति मेदिनी । 'कपोतः पक्षिमात्रेऽपि' इति त्रिकाण्डशेषः । अत्रौतचश्चित्त्वं प्रामादिकम् । 'यत्कपोतः पदमग्ना कृणोति । देवाः कपोत इषितो यदिच्छन्' इत्यादौ सर्वत्र प्रत्ययस्वरेण मध्योदात्तस्यैव पठ्यमानत्वात् । **कठोर इति** ॥ कठिनः पूर्णश्च । 'कठोरताराधिपलाञ्छनच्छविः' इति माघः । **किशोर इति** ॥ 'किशोरोऽश्वस्य शावके । तैलपर्ण्यौषधौ च स्यात्तरुणावस्थसूर्ययोः' इति मेदिनी । **कपोल इति** ॥ कटे वर्षावरणयोः । केचित्तु सूत्रे कडि मदे इत्येतं पठन्ति । कण्डोलः पिटकः, चण्डालश्च । 'चण्डालिका तु कण्डोलवीणाचण्डालवल्लकी' इत्यमरः । **पटोल इति** ॥ 'पटोलं वस्त्रभेदे नौषधौ ज्यौत्स्न्यान्तु योषिति' इति मेदिनी । 'कल्ल शब्दे ।' बाहुळकादतोऽप्योलच् । 'कल्लोलः पुंसि हर्षे स्यान्महत्सूर्मिषु वारिणः' इति मेदिनी । **स्यन्देः** ॥ 'सिन्दूरस्तरुभेदे स्यात् सिन्दूरं रक्तचूर्णके । सिन्दूरी रोचनारक्तचेलिकाधातकीषु च' इति मेदिनीविश्वप्रकाशौ । **सितनि** ॥ 'सेतुर्नालौ कुमारके' इति मेदिनी । 'सेतुरालौ स्त्रियां पुमान्' इति, 'मण्डन्दधिभवं मस्तु' इति चामरः । 'धातुर्नेन्द्रियेषु च । शब्दयोनिमहाभूततद्गुणेषु रसादिषु । मनःशिलादौ श्लेष्मादौ विशेषाद्गैरिकेऽस्थि च' इति मेदिनी । 'श्लेष्मादिरसरक्तादिमहाभूतानि तद्गुणाः । इन्द्रियाण्यश्मविकृतिः शब्दयोनिश्च धातवः' इत्यमरः । **अर्तेश्च तुः** ॥ तुनि प्रकृते अन्तोदात्तत्वार्थन्तुः क्रियते । 'ऋतुना यज्ञम् । य ऋतुर्जनानाम्' इत्यादि । 'ऋतुर्वर्षादिषट्सु च । आर्तवे मासि च पुमान्' इति

७२ । **कमिमनिजनिगाभायाहिभ्यश्च** । एभ्यस्तुः स्यात् । 'कन्तुः कन्दर्पचित्तयोः' । मन्तुरपराधः । जन्तुः प्राणी । 'गातुः पुंस्कोकिले भृङ्गे गन्धर्वे गायनेऽपि च' । भातुरादित्यः । 'यातुरध्वगकालयोः' । रक्षसि क्लीबम् । हेतुः कारणम् ।

७३ । **चायः किः** । 'केतुर्ग्रहपताकयोः' ।

७४ । **आप्नोतेर्ह्रस्वश्च** । अप्तुः शरीरम् ।

७५ । **वसेस्तुन्** । वस्तु ।

७६ । **अगारे णिच्च** । 'वेश्मभूर्वास्तुरस्त्रियाम्' ।

७७ । **कृञः क्रतुः** । क्रतुर्यज्ञः ।

७८ । **एधिवह्योश्चतुः** । एधतुः पुरुषः । वहतुरनड्वान् ।

७९ । **जीवेरातुः** । 'जीवातुरस्त्रियां भक्ते जीविते जीवनौषधे' ।

८० । **आतृकन्वृद्धिश्च** । जीवेरित्येव । 'जैवातृकस्त्विन्दुभिषगायुष्मत्सु कृषीवले' ।

८१ । **कृषिचमितनिधनिसर्जिखर्जिभ्य ऊः** । 'कर्षूः पुंसि करीषाग्नौ कर्षूर्नद्यां स्त्रियां मता' । चमूः । तनूः । धनूः शस्त्रम् । 'सर्ज सर्जने' । सर्जूर्वणिक् । 'खर्ज व्यथने' । खर्जूः पामा ।

८२ । **मृजेर्गुणश्च** । मर्जूः शुद्धिकृत् ।

८३ । **वहो धश्च** । 'वधूर्जायास्नुषास्त्रीषु' ।

---

मेदिनी। **कमि** ॥ कमिग्रहणं प्रपञ्चार्थम् । 'अर्जिदृशि' इत्यादिना कुप्रत्यये तुकि सिद्धत्वात् । **मन्तुरिति** ॥ 'मन्तुः पुंस्यपराधेऽपि मनुष्येऽपि प्रजापतौ' इति मेदिनी। 'दीर्घं ह्यङ्कुशम्' इति मन्त्रस्य वेदभाष्ये तु मन्तुम इति मन्तुर्ज्ञानन्तद्वान् हे इन्द्रेति व्याख्यातम् । 'गातुर्ना कोकिले भृङ्गे गन्धर्वे त्रिषु रोषणे' इति मेदिनी । 'भातुर्ना किरणे सूर्ये' इति च । **चायः किः** ॥ 'केतुर्ना रुक्पताकारिग्रहोत्पातेषु लक्ष्मणि' इति मेदिनी । **अप्तुः शरीरमिति** ॥ अभिलषितार्थश्च, आप्तव्यत्वात् । अत एव अप्तोर्यामशब्दस्याभिलषितार्थप्रापक इत्यवयवार्थमाहुः । **कृञः क्रतुः** ॥ 'क्रतुर्यज्ञे मुनौ पुंसि' इति मेदिनी । **एधिवह्योश्चतुः** ॥ चित्त्वादन्तोदात्तः। 'स्योनं पत्ये वहतुं कृणुष्व'। 'वहतुः पथिके वृषभे पुमान्' इति मेदिनी । **आतृकन्** ॥ 'जैवातृकः पुमान् सोमे कृषकायुष्मतोस्त्रिषु' इति मेदिनी। **कृषि** ॥ रभसकोशस्थमाह । **कर्षूरिति** ॥ 'कर्षूः पुमान् करीषाग्नौ स्त्रियां कुल्याल्पखातयोः' इति मेदिनी । 'सर्जूर्वणिजि विद्युति । स्त्रियां स्वर्गे विधौ रुद्रे' इति, 'खर्जूः कीटान्तरे स्मृता । खर्जूरी पादपे कण्डूाम्' इति च । **मृजेः** ॥ 'मर्जूः स्त्री शुद्धौ धावकेऽपि च' इति मेदिनी । **वहः** ॥ 'वधूः स्नुषा नवोढा स्त्री भार्यापृक्काङ्गनासु च' इति विश्वः। 'पृक्का च महिला

८४ । **कषेश्छश्च** । कच्छूः पामा ।

८५ । **णित्कसिपद्यर्तेः** । कासूः शक्तिः । पादूश्चरणधारिणी । आरूः पिङ्गलः ।

८६ । **अणो डश्च** । आडूर्जलप्लवद्रव्यम् ।

८७ । **नञि लम्बेर्नलोपश्च** । 'तुम्ब्यलाबूरुभे समे' इत्यमरः ।

८८ । **के श्र एरङ् चास्य** । कशब्दे उपपदे श्रृणातेरूः स्यात् एरङादेशः । 'कशेरूस्तृणकन्दे स्त्री' बाहुलकादुप्रत्यये कशेरुः । क्लीबे पुंसि च ।

८९ । **त्रो दुट् च** । तरतेरूः स्यात्तस्य दुट् । 'तर्दूः स्याद्दारुहस्तकः' ।

९० । **दरिद्रातेर्यालोपश्च** । इश्च आश्च यौ तयोर्लोपः । दर्द्रूः कुष्ठप्रभेदः ।

९१ । **नृतिशृध्योः कूः** । नृतूर्नर्तकः । शृधूरपानम् ।

९२ । **ऋतेरम् च** । ऋतिः सौत्रो धातुः । ततः कूरमागमश्च । रन्तूर्देवनदी सत्यवाक्च ।

९३ । **अन्दूदृम्भूजम्बूकफेलूकर्कन्धूदिधिषूः** । एते कूप्रत्ययान्ता निपात्यन्ते । अन्दूर्बन्धनम् । 'दृभी ग्रन्थे' निपातनान्नुम् । दृम्भूः । अनुस्वाराभावोऽपि निपातनादित्येके । दृन्भूः । जनेर्बुक् । जम्बूः । 'जमु अदने' इत्यस्येत्येके ।

---

वधूः' इति त्रिकाण्डशेषः । **कषेः** ॥ कषशषेति दण्डके पठितः । 'कच्छ्वान्तु, पामपामे विचर्चिका' इत्यमरः । **णित्कसि** ॥ कस गतौ । 'कासूर्विकलवाचि स्यात् तथा शक्त्यायुधे स्त्रियाम्' इति मेदिनी । 'कासूः शक्त्यायुधे रुजि । बुद्धौ विकलवाचि स्यात्' इति हेमचन्द्रः । न लम्बते अलाबूः । **त्रो दुट् च** ॥ **तर्दूरिति** ॥ 'नेड्वशि' इति नेट् । वरमनादाविति परिगणनस्यानाश्रितत्वात् बाहुलकाद्वा । केचित्तु त्रो दुक् चेति पठित्वा धातोर्दुगागममाहुः । तेषान्धातोर्गुणो दुर्लभः । चकारबलेन वा साधनीयः, दुगागमात्पूर्वं यत्प्राप्तन्तदपि भवतीति व्याख्यानात् । **दरिद्रातेः** ॥ **इश्च आश्चेति** ॥ भोजदेवस्तु र्यालोप इति रेफादिकं पदं छित्वा द्वेधा व्याख्यत् । इश्च आश्च । दर्द्रूः । रश्च इश्च आश्च । 'अन्त्यबाधेऽन्त्यसदेशस्य' इति द्वितीयरेफलोपः । दर्दूः । मृगय्वादित्वाद्दर्द्रुर्ह्रस्वान्तश्च । 'दद्रुणो दद्रुरोगी स्यात्' इत्यमरः । इत्थञ्चत्वारि रूपाणि । **अन्दूदृम्भू** ॥ **अन्दूर्बन्धनमिति** ॥ 'अदि बन्धने' । 'अन्दूः स्त्रियां स्यान्निगडे प्रभेदे भूषणस्य च' इति मेदिनी । 'अन्दुको हस्तिनिगडे' इत्यमरः । 'संज्ञायाङ्कन्' । 'केऽणः' इति ह्रस्वः । केचित्तु 'अम गतौ' अस्य दुक् अन्दूर्बुद्धिरिति व्याचख्युः । दृभी ग्रन्थे इति तुदादिः । **दृम्भूरिति** ॥ सन्दर्भकर्तेत्यर्थः । कथकः इत्यन्ये । अस्य रूपाणि हूहूवदित्युक्तम् । कैयटोऽप्यत्रानुकूलः । माधवादयस्तु दृढशब्दे उपपदे भुवः क्विप्प्रत्ययः, उपपदस्य दृन्नादेशो निपात्यते । यद्वा दृन्निति नान्तमव्ययं दृढार्थकमुपपदं, दृन्भूः, तरुः सर्पः कपिर्वेति व्याख्याय 'दृन्कर' इति य

बाहुलकाद्ध्रस्वोऽपि । जम्बु: । कफं लाति कफेलू: श्लेष्मातक: । निपातनादेत्वम् । कर्कं दधाति कर्कन्धूर्बदरी । निपातनान्नुम् । दिधिं धैर्यं स्यति त्यजतीति दिधिषू: पुनर्भू: । केचित्तु 'अन्दूदृम्भूजम्बूकम्बू' इति पठन्ति । 'दृम्फ उत्क्लेशे' दृम्फू: सर्पजाति: । 'कमेर्बुक्' । कम्बू: परद्रव्यापहारी ।

९४ । **मृग्रोरुति:** । मरुत् । गरुत्पक्ष: ।

९५ । **ग्रो मुट् च** । गिरतेरुतिस्तस्य च मुट् । गर्मुत्सुवर्णं तृणविशेषश्च ।

९६ । **हृषेरुलच्** । 'हृषुलो मृगकामिनो:' । बाहुलकाच्चटते: । चटुलं शोभनम् ।

९७ । **हृसृरुहियुषिभ्य इति:** । 'हरित्ककुभि वर्णे च तृणवाजिविशेषयो:' । सरिन्नदी । 'रोहित्' मृगविशेषस्य स्त्री । 'युष' इति सौत्रो धातु: । 'ऋश्यस्य रोहित् पुरुषस्य योषित्' इति भाष्यम् ।

९८ । **ताडेर्णिलुक् च** । ताडयतीति तडित् ।

९९ । **शमेर्ढ:** । बाहुलकादित्संज्ञा एयादेश: इट् च न । 'शण्ढ: स्यात्पुंसि गोपतौ' । शण्ढ: । क्लीब: ।

---

वर्षाभूवद्रूपमस्येत्याहु: । **ह्रस्वोऽपीति** ॥ उदाहृतश्च विक्रमादित्येन । 'तस्या जम्बो: फलरसो नदीभूय प्रवर्तते' इति । यत्तु "परिणतजम्बुफलोपभोगहृष्टा" इति भारविप्रयोगं ह्रस्वान्तत्वे साधकत्वेनोदाजह्रु: । तन्न । 'इको ह्रस्वोऽङ्यः' इति सूत्रेण गतार्थत्वात् । **दिधिमिति** ॥ केचित्तु दधातेरित्वन्द्वित्वं षुक् च निपात्यते । दधात्यसौ दिधिषूरित्याहु: । उज्ज्वलदत्तोक्तं पाठमाह । **केचित्त्विति** ॥ एतच्च कैयटमाधवादिमहाग्रन्थविरुद्धमित्यवधेयम् । अत एव 'दृम्भू: स्त्री सर्पचक्रयो:' इति भ्रान्ते मेदिनी । **मरुदिति** ॥ प्रज्ञादित्वादणि मारुतोऽपि । मरुतशब्दोऽप्यव्युत्पन्नोऽस्ति । तथा च विक्रमादित्यकोश: । 'मरुत: स्पर्शन: प्राण: समीरो मारुतो मरुत्' इति संसारावर्तश्च । 'कोऽयं वाति स दाक्षिणात्यमरुत:' इति कविराज: । अत्रानुपपत्तिं मत्वा दाक्षिणात्यपवन इति पाठं कल्पयन्त्यल्पदृश्वान: इति वर्णविवेक: । **गरुदिति** ॥ यवादिरयम् । तेन मतुपो वत्वं न । गरुत्मान् । **ग्रो मुट् च** ॥ 'गर्मुत् स्त्री स्वर्णलतयो:' इति मेदिनी । विश्वकोशमाह । **हरिदिति** ॥ 'हरिद्दिशि स्त्रियां पुंसि हयवर्णविशेषयो: । अस्त्रियां स्यात्तृणे च' इति मेदिनी । **ऋश्यस्येति** ॥ एतेन 'गतं रोहिद्भूतां रिरमयिषुमृश्यस्य वपुषा' इति पुष्पदन्तप्रयोगो व्याख्यात: । 'रोहिन्मृग्यां लताभेदे स्त्री नार्के' इति मेदिनी । **शमेर्ढ:** ॥ **बाहुलकादिति** ॥ यद्यपि 'नेड्वशिकृति' इति इण्निषेध: सुवच: । तथापि नेड्वरमनादाविति परिगणनादेवमुक्तम् । 'शण्ढ: स्यात्पुंसि गोपतौ' आकृष्टाङ्गे वर्षवरे तृतीयप्रकृतावपि' इति मेदिनी । **कमठ इति** ॥ 'कमठ: कच्छपे पुंसि भाण्डभेदे नपुंसकम्' इति

१०० । **कमेरठः** । कमठः । 'कमठः कच्छपे पुंसि भाण्डभेदे नपुंसकम्' इति मेदिनी । बाहुलकाज्जरठः ।

१०१ । **रमेर्वृद्धिश्च** । रामठं हिङ्गु ।

१०२ । **शमेः खः** । शङ्खः ।

१०३ । **कणेष्ठः** । कण्ठः ।

१०४ । **कलस्तृपश्च** । तृपतेः कलप्रत्ययः । चात्तृफतेः । तृपला लता । 'तृफला तु फलत्रिके' ।

१०५ । **शपेर्वश्च** । शबलः ।

१०६ । **वृषादिभ्यश्चित्** । वृषलः । पललम् । बाहुलकाद्गुणः । सरलः । तरलः । 'कमेर्बुक् (च)' (गण १९६) कम्बलः । 'मुस खण्डने' मुसलम् । 'लङ्गेर्वृद्धिश्च' (गण १९७) लाङ्गलम् । 'कुटिकशिकौतिभ्यः प्रत्ययस्य मुट् ।

---

मेदिनी । **जरठ इति** ॥ जॄष् वयोहानौ । 'जरठः कठिने पाण्डौ कर्कशेऽप्यभिधेयवत्' इति विश्वमेदिन्यौ । 'जरठः कठिने जीर्णे' इति वैजयन्ती । **शमेः खः** ॥ 'शङ्खो निधौ ललाटास्थ्नि कम्बौ न स्त्री' इत्यमरः । 'शङ्खः कम्बौ न योषिन्ना भालास्थ्नि निधिभिन्नखे' इति मेदिनी । **कणेष्ठः** ॥ 'कण्ठो गले सन्निधाने ध्वनौ मदनपादपे' इति विश्वमेदिन्यौ । **फलत्रिके इति** ॥ 'त्रिफला तृफला च सा' इति विश्वः । त्रिफलाशब्दसमानार्थस्तृफलाशब्द इति 'द्विगोः' इति सूत्रे रक्षितः । 'शप आक्रोशे' । **वृषादिभ्यश्चित्** ॥ 'शूद्राश्चावरवर्णाश्च वृषलाश्च जघन्यजाः' इत्यमरः । 'वृषलस्तुरगे शूद्रे' इति हेमचन्द्रः । **पललमिति** ॥ पल गतौ । 'पललं तिलचूर्णे च पङ्के मांसे नपुंसकम् । ना राक्षसे' इति मेदिनी । 'सरलः पूतिकाष्ठे नाऽथोदारावक्रयोस्त्रिषु' इति मेदिनी । 'सरला विरलायन्ते घनायन्ते कलिद्रुमाः । न शमी न च पुन्नागा अस्मिन्संसारकानने' इत्यभियुक्तप्रयोगः । **कमेरिति** ॥ बाहुलकादित्यत्रानुषज्यते । 'कम्बलो नागराजे स्यात् सास्नाप्रावारयोरपि । कृमावप्युत्तरासङ्गे सलिले तु नपुंसकम्' इति मेदिनी । 'मुसलं स्यादयोऽग्रे च पुंनपुंसकयोः स्त्रियाम् । तालमूल्यामाखुपर्णीगृहगोधिकयोरपि' इति मेदिन्याम् । मूर्धन्यमध्योऽप्ययमिति वर्णदेशना, 'मुस खण्डने' इति धातोर्दन्त्यान्तेषु मूर्धन्यान्तेषु च बोपदेवात्रेयादिभिः पठितत्वात् । उज्ज्वलदत्तादयस्तु तालव्यमध्यमप्याहुः । अत एव मुसलोऽपि चेति विश्वकोशे मुशलोऽपि चेति पाठान्तरम् । **लङ्गेरिति** ॥ बाहुलकादित्येव । एवमग्रेऽपि । 'लाङ्गलं तालहलयोः पुष्पभिद्गृहदारुणोः । लाङ्गली गृहपिप्पल्याम्' इति हेमचन्द्रः । 'लाङ्गली तोयपिप्पल्यां क्लीबन्तु कुसुमान्तरे । गोदारणे तृणे राजगृहदारुविशेषयोः' इति मेदिनी । 'कुड्मलो मुकुले पुंसि न द्वयोर्नरकान्तरे । 'कोमलं मृदुले जले' इति च । बाहुलकादन्यत्रापि । तथा 'कुस श्लेषणे' । दन्त्यान्तो निर्विवादः । बोपदेवमते तालव्यान्तोऽपि । गुणः । कोसलः कोशलो

(च), (गण १९८) कुट्मलः। कुडेरपि। कुड्मलः। कश्मलम्। बाहुलकाद्गुणः। कोमलम्।

१०७। **मृजेष्टिलोपश्च**। मलम्।

१०८। **चुपेरच्चोपधायाः**। चपलम्।

१०९। **शकिशम्योर्नित्**। शकलम्। शमलम्।

११०। **छो गुग्घ्रस्वश्च**। छगलः। प्रज्ञादित्वाच्छागलः।

१११। **अमन्ताड्डः**। दण्डः। रण्डा। खण्डः। मण्डः। वण्डश्छिन्नहस्तः। अण्डः। बाहुलकात्सत्वाभावः। षण्डः सङ्घातः। तालव्यादिरित्यपरे। शण्डः। गण्डः। चण्डः। पण्डः क्लीबः। पण्डा बुद्धिः।

---

वा देशविशेषः। 'वृद्धेत्कोसल' इति सूत्रे तु दन्त्यपाठ एव साम्प्रदायिकः। 'सम्ब सम्बन्धे, शम्ब च'। सम्बलम्। 'शम्बलोऽस्त्री सम्बलवत् कुलपाथेयमत्सरे' इति मेदिनी। 'कदि आह्वाने'। नलोपः। गौरादित्वान्ङीष्। 'मदान्दोलितकर्पूरकदलीदलसंज्ञया। विश्रमाय श्रमापन्नानाह्वयन्तमिवाध्वगान्' इति काशीखण्डम्। अजादेराकृतिगणत्वाट्टाबपि। 'कदलाकदलौ पृश्न्यां कदलीकदलौ पुनः। रम्भावृक्षेऽथ कदली पताकामृगभेदयोः॥ कदला डिम्बिकायाञ्च' इति मेदिनी। 'पिजि हिंसायाम्'। न्यङ्क्वादित्वात्कुत्वम्। 'पिङ्गलो नागभिद्रुद्रचण्डांशुपारिपार्श्वके। निधिभेदे कवावग्नौ पुंसि स्यात्कपिलेऽन्यवत्॥ स्त्रियां वेश्याविशेषे च करिण्याङ्कुमुदस्य च' इति मेदिनी। कुश इति सौत्रो धातुः। 'कुशलः शिक्षिते त्रिषु। क्षेमे च सुकृते चापि पर्याप्तौ च नपुंसकम्' इति मेदिनी। 'कमु कान्तौ'। 'कमलं सलिलं ताम्रे जलजे व्योम्नि भेषजे। मृगभेदे तु कमलः कमला श्रीवरस्त्रियोः' इति विश्वमेदिन्यौ। 'मडि भूषायाम्'। 'मण्डलं परिधौ कोठे देशे द्वादशराजके। क्लीबेऽथ निवहे बिम्बे त्रिषु पुंसि तु कुक्कुरे' इति मेदिनी। 'कोठो मण्डलकम्' इत्यमरः। 'बिम्बोऽस्त्री मण्डलं त्रिषु' इति च। 'कुडि दाहे', 'पट गतौ', 'छो छेदने'। 'कुण्डलङ्कर्णभूषायां पाशेऽपि वलयेऽपि च। अथ पटलं पिटके च परिच्छदे। छदिर्दृग्रोगतिलके क्लीबं बृन्दे पुनर्न ना। छलं स्खलितशाठ्ययोः' इति मेदिनी। **मृजेष्टिलोपश्च**॥ 'मलोऽस्त्री पापविट्किट्टे कृपणे त्वभिधेयवत्' इति मेदिनी। **चुपेः**॥ 'चपलः पारदे मीने चिबुके प्रस्तरान्तरे। चपला कमला विद्युत् पुंश्चलीपिप्पलीषु च। नपुंसकं तु शीघ्रे स्याद्वाच्यवत्तरलं चले' इति मेदिनी। **शकिशम्योः**॥ शकलं खण्डे रोहितादीनान्त्वचि च। तद्योगाच्छकली मत्स्यः। 'मत्स्यान् शकलान्' इति भाष्यम्। 'शकलन्त्वचि खण्डे स्यात् रागवस्तुनि वल्कले' इति मेदिनी। 'शमलं शकृदेनसोः' इति नानार्थरत्नमाला। **छो गुग्**॥ 'छगलं नीलवस्त्रे ना च्छागे स्त्री वृद्धदारके' इति मेदिनी। 'छगलश्छागे च्छगली वृद्धदारकभेषजे' इति हेमचन्द्रः। **अमन्ताड्डः**॥ अमिति प्रत्याहारः। त्रिभ्य एव कणमा इति वृत्तिकारोक्तिस्तु अष्टाध्यायीस्थमात्रविषया। **दण्ड इति**॥ बाहुलकात्, 'चुटू' इति नेत्संज्ञा। 'दण्डोऽस्त्री लगुडेऽपि स्यात्' इत्यमरः। 'दण्डौ सैन्यार्कपार्श्वगौ' इति त्रिकाण्डशेषः। 'रण्डा मूषिकपर्ण्याञ्च विधवायाञ्च योषिति। खण्डोऽस्त्री शकले

११२ । **कादिभ्यः कित्** । कवर्गादिभ्यो डः कित्स्यात् । कुण्डम् । काण्डम् । गुङ् गुडः । 'घुण भ्रमणे' घुण्डो भ्रमरः ।

११३ । **स्थाचतिमृजेरालज्वालञालीयचः** । तिष्ठतेरालच् । स्थालम्–स्थाली । चतेर्वालञ् । चात्वालः । मृजेरालीयच् । मार्जालीयो बिडालः ।

११४ । **पतिचण्डिभ्यामालञ्** । पातालम् । चण्डालः । प्रज्ञादित्वादणि चाण्डालोऽपीत्येके ।

११५ । **तमिविशिबिडिमृणिकुलिकपिपलिपञ्चिभ्यः कालन्** । तमालः । विशालः । बिडालः । मृणालम् । कुलालः । कपालम् । पलालम् । पञ्चालाः ।

---

नेक्षुविकारमणिभेदयोः । मण्डः पञ्चाङ्गुले शाकभेदे क्लीबन्तु मस्तुनि । चण्डा तु पांसुलायां स्त्री त्रिषु हस्तादिवर्जिते । अण्डं मुष्कं च पेश्यां स्यात् । षण्डं पद्मादिसङ्घाते न स्त्री स्यात् गोपतौ पुमान् । गण्डः स्यात्पुंसि खड्गिनि । ग्रहयोगप्रभेदे च वीथ्यङ्गे पिटकेऽपि च । चिह्नवीर-कपोलेषु हयभूषणबुद्बुदे । चण्डोला तिन्त्रिणीवृक्षे यमकिङ्करदैत्ययोः । चण्डी कात्यायनीदेव्यां हिंस्राकोपनयोषितोः । चण्डा धनहरो शङ्खपुष्पी त्रिष्वतिकोपने । तीव्रेऽपि । पण्डः शठे धियि स्त्री स्यात्' इति मेदिनी । 'फण गतौ' । फण्डः । प्रज्ञादित्वादण् । फाण्डं सुन्दरम् । **कादिभ्यः कित्** ॥ **कुण्डमिति** ॥ कुण शब्दोपकरणयोः । कित्त्वान्न गुणः । 'कुण्डमग्न्यालये मानभेदे देवजलाशये । कुण्डी कमण्डलौ जारात्पतिवत्नीसुते पुमान् । पिठरे तु न ना' इति मेदिनी । **काण्डमिति** ॥ कमु कान्तौ । 'अनुनासिकस्य क्वि' इति दीर्घः । 'काण्डोऽस्त्री दण्डबाणार्ववर्गावसरवारिषु' इत्यमरः । अर्वा कुत्सितः । अत एव 'काण्डं स्तम्बे तरुस्कन्धे बाणे वरदनीरयोः । कुत्सिते वृक्षभिन्नाडीबृन्दे रहसि न स्त्रियाम्' इति मेदिनी । 'गुडो गोलेक्षुपाकयोः' इत्यमरः । गुडा स्नुही, तद्वत्केशाः अस्य गुडाकेशः, शिवः । जटाधारित्वात् । 'गुडः स्याद्गोलके हस्तिसन्नाहेक्षुविकारयोः । गुडा स्नुह्यां च कथिता गुडिकायां च योषिति' इति मेदिनी । **स्थाचति** ॥ लचा सिद्धे आलचः आकारश्चिन्त्यप्रयोजनः । चित्स्वरं बाधित्वा पक्षे आद्युदात्तार्थ इत्येके । 'स्थालं भाजनभेदेऽपि स्थाली स्यात् पाटलोखयोः' इति मेदिनी । 'चात्वालो यज्ञकुण्डे स्याद्दर्भे च' इति विश्वः । 'मार्जालीयः स्मृतः शूद्रे बिडाले कायशोधने' इति मेदिनी । **पातालमिति** ॥ उपधावृद्धिः । 'पातालं नागलोके स्याद्विवरे बडबानले' इति मेदिनी । 'चडि कोपे' इत्यस्य तु इदित्त्वान्नुमि अदुपधत्वाभावान्न वृद्धिः । यत्तु माधवग्रन्थे 'पतिचण्डिभ्यामालन्' इति पठित्वा पातालशब्दे बाहुलकाद्वृद्धिमुक्त्वा आलञिति वृद्ध्यर्थं ञितङ्केचित्पठन्ति इत्युपन्यस्य चण्डालशब्देऽपि वृद्धिः स्यादिति दूषितम् । तदतिरभसात् । एके इत्यपरितोषोद्भावनम् । तद्बीजन्तु 'कुलालवरुडकर्मारनिषादचण्डालमित्रामित्रेभ्यश्छन्दसि' इति चण्डालात्स्वार्थेऽणं विदधता वार्तिकेन तद्भाष्येण च सह विरोध इति बोध्यम् । **तमिविशि** ॥ 'तमु काङ्क्षायाम्, विश प्रवेशने, बिड आक्रोशे, मृण हिंसायाम्, कुल संस्त्याने, कपि चलने, निर्देशान्नलोपः । 'पल गतौ, पचि विस्तारे । 'तमालस्तिलके खड्गे तापिञ्छे वारुणद्रुमे ।

११६। पतेरङ्चपक्षिणि। पतङ्गः।

११७। तरत्यादिभ्यश्च। तरङ्गः। लवङ्गम्।

११८। बिडादिभ्यः कित्। बिडङ्गः। मृदङ्गः। कुरङ्गः। बाहुलकादुत्वं च।

११९। सृवृञोर्वृद्धिश्च। सारङ्गः। वारङ्गः खड्गादिमुष्टिः।

१२०। गन्गम्यद्योः। गङ्गा। अद्गः पुरोडाशः।

१२१। छापूखडिभ्यः कित्। छागः। पूगः। खड्गः। बाहुलकात् 'षिड अनादरे' गन्सत्वाभावश्च। षिड्गस्तरलः। 'षिड्गैरगद्यत ससम्भ्रममेवमेका' इति माघः।

१२२। भृञः किन्नुट् च। भृञो गन्कित्स्यात्तस्य नुट् च। 'भृङ्गाः षिड्गालिधूम्याटाः'।

---

विशाला त्विन्द्रवारुण्यामुज्जयिन्यान्तु योषिति। नृपवृक्षभिदोः पुंसि पृथुलेऽप्यभिधेयवत्। बिडालो नेत्रपिण्डे स्यात् पृषदंशुकके पुमान्। मृणालं नलदे क्लीबं पुन्नपुंसकयोर्बिसे। कुलालः ककुभे कुम्भकारे स्त्री त्वञ्जनान्तरे। कपालोऽस्त्री शिरोऽस्थि स्याद्घटादेः शकले व्रजे। पाञ्चाली पुत्रिकारीत्योः स्त्रियां पुम्भूम्नि नीवृति' इति मेदिनी। बाहुलकात् श्यतेरपि। शाला। 'शल चलने' अस्माद्वञि 'छायाशालानिशानाम्' इति निपातनात् स्त्रीत्वमिति न्यासकारः। बोपदेवस्तु 'शालङ्कत्थने' इति पपाठ। 'शाला द्रुस्कन्धशाखायाङ्गृहे गेहैकदेशयोः। ना झषे' इति मेदिनी। **पतेः** ॥ पतेर्बाहुलकादर्थान्तरेऽपि। 'पतङ्गः शलभे शालिप्रभेदे पक्षिसूर्ययोः। क्लीबं सूते' इति मेदिनी। सूते पारदे इत्यर्थः। **तरत्यादिभ्यः** ॥ 'तरङ्गस्तुरगादीनामुत्फाले वस्त्रभङ्गयोः' इति विश्वः। **बिडङ्ग इति** ॥ 'बिड आक्रोशे'। 'बिलङ्गः क्रिमिसङ्घघ्ने बिडङ्गो नागरेऽन्यवत्' इति विश्वः। 'बिडङ्गस्त्रिष्वभिज्ञे स्यात् क्रिमिघ्ने पुंनपुंसकम्' इति मेदिनी। **मृदङ्ग इति** ॥ 'मृद क्षोदे। 'मृदङ्गः पटहे घोषे' इति मेदिनी। **कुरङ्ग इति** ॥ 'कृ विक्षेपे' बाहुलकादुत्वम्। कुर शब्दे इति वा अस्तु। 'सारङ्गः पुंसि हरिणे चातके च मतङ्गजे। शबले त्रिषु' इति मेदिनी। बाहुलकात् 'नॄ नये'। 'अथ नारङ्गः पिप्पलीरसः। यमजप्राणिनिकटे नागरङ्गद्रुमेऽपि च' इति मेदिनी। **गन् गम्यद्योः** ॥ बाहुलकादमेरपि। 'अङ्गं गात्र उपाये च प्रतीके चाप्रधानके। अङ्गो देशविशेषे स्यादङ्ग सम्बोधनेऽव्ययम्' इति विश्वः। 'अङ्गं गात्रे प्रतीकोपाययोः पुंभूम्नि नीवृति। क्लीबैकत्वे त्वप्रधाने त्रिष्वङ्गवति चान्तिके' इति मेदिनी। **छापू** ॥ छायते छिद्यते यज्ञार्थमिति छागः। पूयते मुखमनेन। 'पूगस्तु क्रमुके बृन्दे' इति मेदिनी। 'खड भेदने'। खड्गो गण्डकशृङ्गे स्यात् निस्त्रिंशे गण्डकेऽपि च' इति शब्दतरङ्गिणी। 'खड्गो गण्डकशृङ्गेऽसिबुद्धभेदेषु गण्डके' इति मेदिनी। **भृञः** ॥ किद्ग्रहणं स्पष्टार्थम्, अनुवृत्त्यैव लाभात्। 'भृङ्गो धूम्याटषिड्गयोः। मधुव्रते भृङ्गराजे पुंसि भृङ्गञ्जुडत्वचि' इति मेदिनी। 'शृङ्गं प्रभुत्वे शिखरे चिह्ने क्रीडाम्बुयन्त्रके। विषाणोत्कर्षयोश्चाथ शृङ्गः स्यात्कूर्चशीर्षके। स्त्री विषायां

१२३ । **शृणातेर्ह्रस्वश्च** । शृङ्गम् ।

१२४ । **गण्शकुनौ** । नुट् चेत्यनुवर्तते । शार्ङ्गः ।

१२५ । **मुदिग्रोर्गग्गौ** । मुद्गः । गर्गः ।

१२६ । **अण्डन्कृसृभृवृञः** । करण्डः । सरण्डः पक्षी । भरण्डः स्वामी । वरण्डो मुखरोगः ।

१२७ । **शृदृभसोऽदिः** । शरत् । 'दरद्धृदयकूलयोः' । भसज्जघनम् ।

१२८ । **दृणातेः षुग्घ्रस्वश्च** । दृषत् ।

१२९ । **त्यजितनियजिभ्यो डित्** । त्यद् । तद् । यद् । सर्वादयः ।

१३० । **एतेस्तुट् च** । एतद् ।

१३१ । **सर्तेरटिः** । 'सरट् स्याद्वातमेघयोः' । वेदभाष्ये तु 'याभिः कृशानुम्' इति मन्त्रे 'सरड्भ्यो मधुमक्षिकाभ्यः' इति व्याख्यातम् ।

१३२ । **लङ्घेर्नलोपश्च** । लघट् वायुः ।

१३३ । **पारयतेरजिः** । पारक् सुवर्णम् ।

१३४ । **प्रथः कित्सम्प्रसारणञ्च** । पृथक् । स्वरादिपाठादव्ययत्वम् ।

१३५ । **भियः षुग्घ्रस्वश्च** । भिषक् ।

१३६ । **युष्यसिभ्यां मदिक्** । 'युष्' सौत्रो धातुः । युष्मद् । अस्मद् । त्वम् । अहम् ।

१३७ । **अर्तिस्तुसुहुसृधृक्षिक्षुभायावापदियक्षिनीभ्यो मन्** । एभ्यश्चतुर्दशभ्यो मन् । अर्मश्चक्षूरोगः । स्तोमः सङ्घातः । सोमः । होमः । सर्मो

---

स्वर्णमीनभेदयो ऋषभौषधौ' इति मेदिनी । 'शृङ्गं विषाणमाख्यातं शैलाग्रे जलयन्त्रके । मीनौषधिसुवर्णानां भेदे शृङ्गी प्रयुज्यते ॥' इति उत्पलिनीकोशः । **अण्डन् कृसृ** ॥ 'करण्डी मधुकोशासिकारण्डेषु ललाटके' इति मेदिनी । 'वरण्डोऽप्यन्तरावेदौ समूहमुखरोगयोः' इति विश्वमेदिन्यौ । बाहुलकात् तरतेः । 'तरण्डो बडिशीसूत्रबद्धकाष्ठादिके प्लवे' इति मेदिनी । **शृदृ** ॥ 'शरत् स्त्री वत्सरेऽप्यृतौ । दरत् स्त्रियां प्रपाते च भयपर्वतयोरपि । भसत् स्त्री भास्वरे योनौ' इति च मेदिनी । "उवे अम्बसुलाभिके" इति मन्त्रस्य व्याख्यायां भसद्भग इति वेदभाष्यम् । "जाघन्या पत्नीः संयाजयन्ति भसद्वीर्या हि स्त्रियः" इत्यत्र भसज्जघनमिति व्याख्यातारः । **दृणातेः** ॥ 'दृषन्निष्पेषणशिलापदप्रस्तरयोः स्त्रियाम्' इति मेदिनी । **अर्तिस्तु** ॥ 'सोमस्तुहिनदीधितौ । वानरे च कुबेरे च पितृदेवे समीरणे । वसुप्रभेदे कर्पूरे नीरे सोमलतौषधौ' इति मेदिनी । 'धर्मोऽस्त्री पुण्य आचारे स्वभावोपमयोः

गमनम् । धर्मः । क्षेमं कुशलम् । क्षोमम् । प्रज्ञाघाणि क्षौमञ्च । भामः आदित्यः । यामः । 'वामः शोभनदुष्टयोः' । पद्मम् । यक्ष पूजायाम् । यक्ष्मो रोगराजः । नेमः ।

१३८ । **जहातेः सन्वदालोपश्च** । 'जिह्मः कुटिलमन्दयोः' ।

१३९ । **अवतेष्टिलोपश्च** । मन्प्रत्ययस्यायं टिलोपो न प्रकृतेः । अन्यथा डिदित्येव ब्रूयात् । 'ज्वरत्वर–' (सू २६५४) इति ऊठौ । तयोर्दीर्घे कृते गुणः । चादिपाठादव्ययत्वमित्युज्ज्वलदत्तस्तन्न । तेषामसत्त्वार्थत्वात् । वस्तुतस्तु स्वरादिपाठादव्ययत्वम् । अवतीति ओम् ।

१४० । **ग्रसेरा च** । ग्रामः ।

१४१ । **अविसिविसिशुषिभ्यः कित्** । ऊमं नगरम् । स्यूमो रश्मिः । सिमः सर्वः । 'शुष्ममग्निसमीरयोः' ।

१४२ । **इषियुधीन्धिदसिश्याधूसूभ्यो मक्** । 'इष्मः कामवसन्तयोः' ।

---

क्रतौ । अहिंसोपनिषन्न्याये ना धनुर्यमसोमपे' इति च । 'धर्मः पुण्ये यमे न्याये स्वभावाचारयोः क्रतौ' इति विश्वः । 'क्षौमं पट्टे दुकूलेऽस्त्री क्षौमं वल्कलजांशुके । शणजेऽतसिजे' इति मेदिनी । 'भामः क्रोधे रवौ दीप्तौ । यामस्तु पुंसि प्रहरे संयमेऽपि प्रकीर्तितः । वामं धने पुंसि हरे कामदेवे पयोधरे । वल्गुप्रतीपसव्येषु त्रिषु नार्यां स्त्रियामथ । वामी शृगालीबडबारासभीकरभीषु च । पद्मोऽस्त्री पद्मके व्यूहनिधिसंख्यान्तरेऽम्बुजे । ना नागे' इति च मेदिनी । **यक्ष पूजायामिति** ॥ यत्तूज्ज्वलदत्तेन 'जक्ष भक्ष हसनयोः' इत्युपन्यस्तम्, तन्न, तस्य चवर्गतृतीयादित्वात् । न च लक्ष्यमपि तथैवेति भ्रमितव्यम् । "अक्षिभ्यान्ते नासिकाभ्याम्" इति मन्त्रे यक्ष्मशब्दस्यान्तःस्थादित्वनिर्णयात् । न च तदुपन्यस्तधातुरप्यन्तःस्थादिरिति भ्रमितव्यम् । 'जक्षत् क्रीडन् रममाणः' इत्यादिप्रयोगेण तथा कविकल्पद्रुमादिभिः सह विरोधादिति दिक् । मनिन्प्रत्यये तु नान्तः । 'राजयक्ष्मेव रोगाणाम्' इति माघः । 'यक्ष्मणापि परिहाणिराययौ' इति रघुः । दशपादीवृत्तौ तु इह सूत्रे पक्षीति पवर्गीयादिं पठित्वा सौत्रो धातुः बाहुळकान्नकारस्य नेत्संज्ञा इत्युक्त्वा अक्षिपक्ष्मेत्युदाहृतम् । तन्न । 'पक्ष परिग्रहे' इत्यस्मान्मनिना गतार्थत्वात् । 'नेमः क्लीबेऽवधौ गर्ते प्राकारे कैतवेऽपि च' इति मेदिनी । 'नेमस्त्वर्धे प्राकारगर्तयोः । अवधौ कैतवे च' इति हेमचन्द्रः । **जहातेः** ॥ 'जिह्मस्तु कुटिले मन्दे क्लीबन्तगरपादपे' इति मेदिनी । **अवतेः** ॥ 'ओं प्रश्नेऽङ्गीकृतौ रोषे' इति विश्वः । **ग्रसेरा च** ॥ 'ग्रसु अदने' । अतो मन् । धातोराकारश्च । 'ग्रामः स्वरे संवसथे बृन्दे शब्दादिपूर्वके' इति विश्वः । शब्दादिपूर्वको ग्रामशब्दो बृन्दे । शब्दग्रामो गुणग्राम इति यथा । संपूर्वोऽयं युद्धे । तदुक्तम् । 'संपूर्वः संयुगे स्मृतः' इति । **ऊमं नगरमिति** ॥ 'त्वे क्रतुम्' इति मन्त्रे 'ऊमास्तर्पका यजमानाः' इति वेदभाष्यम् । **स्यूमो रश्मिरिति** ॥ सूत्रतन्तुरित्यन्ये । 'शुष्मं तेजसि सूर्ये ना' इति मेदिनी । 'शुष्मं बलम्' इति वेदभाष्ये । **इषियुधि** ॥

ईषीति पाठे दीर्घादिः । युध्मः शरो योद्धा च । इध्मः समित् । दस्मो यजमानः । श्यामः । धूमः । सूमोऽन्तरिक्षम् । बाहुलकादीर्मं व्रणः ।

१४३ । युजिरुचितिजां कुश्च । युग्मम् । रुक्मम् । तिग्मम् ।

१४४ । हन्तेर्हि च । हिमम् ।

१४५ । भियः षुग्वा । भीमः । भीष्मः ।

१४६ । घर्मः । घृधातोर्मग्गुणश्च निपात्यते ।

१४७ । ग्रीष्मः । ग्रसतेर्निपातोऽयम् ।

१४८ । प्रथेः षिवन्सम्प्रसारणं च । पृथिवी षवन्नित्येके । पृथवी । 'पृथवी पृथिवी पृथ्वी' इति शब्दार्णवः ।

१४९ । अशूप्रुषिलटिकणिखटिविशिभ्यः क्वन् । अश्वः । 'प्रुष स्नेहनादौ' । प्रुष्वः स्यादृतुसूर्ययोः' । प्रुष्वा जलकणिका । लट्वा पक्षिभेदः फलं च । कण्वं पापम् । बाहुलकादित्त्वे किण्वमपि । खट्वा । विश्वम् ।

१५० । इण्शीभ्यां वन् । एवो गन्ता । 'ये च एवा मरुतः' । असत्त्वे निपातोऽयम् । शेवं लाञ्छनं पुंसाम् । 'शेवं मित्राय वरुणाय' ।

१५१ । सर्वनिघृष्वरिष्वलष्वशिवपद्वप्रह्वेष्वा अस्वतन्त्रे । अकर्तर्येते निपात्यन्ते । सृतमनेन विश्वमिति सर्वम् । निपूर्वाद्घृषेर्गुणाभावोऽपि । निघृष्यते

---

**युध्म इति** ॥ 'युध्मो धनुषि संयुगे' इति मेदिनी । 'दस्मस्तु यजमाने स्यादपि चौरे हुताशने' इति च । 'न पूषणम्' इति मन्त्रस्य भाष्ये तु दस्मो दर्शनीय इति व्याख्यातम् । 'त्रिषु श्यामौ हरित्कृष्णौ श्यामा स्याच्छारिका निशा' इत्यमरः । 'श्यामो वटे प्रयागस्य वारिदे वृद्धदारके । पिके च कृष्णहरितोः पुंसि स्यात्तद्वति त्रिषु । मरीचे सिन्धुलवणे क्लीबं स्त्री शारिकौषधौ । अप्रसूताङ्गनायाञ्च प्रियङ्गावपि गुग्गलौ । यमुनायां त्रियामायां कृष्णत्रिवृतिकौषधौ । नीलिकायाम्' इति मेदिनी । **ईर्ममिति** ॥ 'ईर गतौ' । 'व्रणोऽस्त्रियामीर्ममरुः क्लीबे' इत्यमरः । 'जन जनने' । जन्मम् । मनिनन्तस्तु नान्तः । 'जनुर्जननजन्मानि' इत्यमर उभयसाधारणः । **युजिरुचि** ॥ 'रुक्मन्तु काञ्चने लोहे' इति विश्वमेदिन्यौ । **हन्तेर्हि च** ॥ 'हिमं तुषारमलयोद्भवयोः स्यान्नपुंसकम् । शीतले वाच्यलिङ्गः' इति मेदिनी । 'भीष्मो गाङ्गेयघोरयोः । भीमोऽम्लवेतसे घोरे शम्भौ मध्यमपाण्डवे । घर्मः स्यादातपे ग्रीष्मेऽप्युष्णस्वेदाम्भसोरपि । ग्रीष्म ऊष्मर्तुभेदयोः' इति च मेदिनी । **अशूप्रुषि** ॥ 'अश्वः पुंभेदवाजिनोः' इति विश्वः । 'लट्वा करञ्जभेदे स्यात् फले मद्ये खगान्तरे' इति विश्वमेदिन्यौ । 'कण्वं पापे मुनौ पुंसि कण्वं बीजाद्यशीधुषु । विश्वात्वतिविषायां स्त्री जगति स्यान्नपुंसकम् ॥ न ना शुण्ठ्यां पुंसि देवप्रभेदेऽप्यखिले त्रिषु' इति मेदिनी । **इण्शीभ्याम्** ॥ शेवं सुखमिति वेदभाष्यम् ।

अनेन निघृष्वः खुरः । रिष्वो हिंस्रः । लष्वो नर्तकः । लिष्व इत्यन्ये । तत्रोपधाया इत्वमपि । शेतेऽस्मिन् सर्वमिति शिवः शम्भुः । शीङो ह्रस्वत्वम् । पह्वो रथो भूलोकश्च । प्रहूयते इति प्रह्वः । ह्वेञ आकारवकारलोपः । जहातेराल्लोपो वा । ईषेर्वन् । ईष्वः आचार्यः । इष्व इत्यन्ये । 'अस्वतन्त्रे' किम् । सर्तो सारकः । बाहुलकाद्ध्रसतेः । ह्रस्वः ।

१५२ । **शेवयह्वजिह्वाग्रीवाप्वमीवाः** । शेव इत्यन्तोदात्तार्थम् । यान्त्यनेन यह्वः । ह्रस्वो हुगागमश्च । लिहन्त्यनया जिह्वा । लकारस्य जः गुणाभावश्च । गिरन्त्यनया ग्रीवा । ईडागमश्च । आप्नोतीत्याप्वो वायुः । मीवा उदरक्रमिः । वायुरित्यन्ये ।

१५३ । **कृगृशृदृभ्यो वः** । कर्वः कामः आखुश्च । गर्वः । शर्वः । दर्वो राक्षसः ।

१५४ । **कनिन्युवृषितक्षिराजिधन्विद्युप्रतिदिवः** । यौतीति युवा । वृषा इन्द्रः । तक्षा । राजा । धन्वा मरुः । धन्व शरासनम् । द्युवा सूर्यः । प्रतिदीव्यन्त्यस्मिन्प्रतिदिवा दिवसः ।

१५५ । **सप्यशूभ्यां तुट् च** । सप्त । अष्ट ।

१५६ । **नञि जहातेः** । अहः ।

१५७ । **श्वन्नुक्षन्पूषन्प्लीहन्क्लेदन्स्नेहन्मूर्धन्मज्जन्नर्यमन्विश्वप्सन्परिज्मन्मातरिश्वन्मघवन्निति** । एते त्रयोदश कनिप्रत्ययान्ता निपात्यन्ते । श्वयतीति

---

**ह्रस्व इति** ॥ 'ह्रस शब्दे' । 'ह्रस्वो न्यक्खर्वयोस्त्रिषु' इति मेदिनी । **शेवयह्व** ॥ दशपादीवृत्तिरीत्याह । **यान्त्यनेनेति** ॥ अन्ये तु यजतेर्जकारस्य हकारो निपात्यत इत्याहुः । यह्वशब्दो वदिकनिघण्टौ महन्नामसु पठितः । प्रवो यह्वं पुरूणाम् । 'यह्वं महान्तम्' इति वेदभाष्यम् । **मीवेति** ॥ वेदभाष्ये तु अमीव इति छित्वा 'अम रोगे' इत्यस्माद्वः ईट् चेत्युक्तम् । 'अमीवहा वास्तोष्पते' इत्यादिमन्त्रास्तत्रानुकूलाः । **कनिन्यु** ॥ 'युवा स्यात्तरुणे श्रेष्ठे निसर्गबलशालिनि । वृषा कर्णे महेन्द्रे ना' इति मेदिनी । 'तक्षा तु वर्धकिस्त्वष्टा रथकारस्तु काष्ठतट्' इत्यमरः । 'राजा प्रभौ च नृपतौ क्षत्रिये रजनीपतौ । यक्षे शक्रे च पुंसि स्यात्' इति मेदिनी । 'समानौ मरुधन्वानौ' इत्यमरः । 'अथास्त्रियाम् । धनुश्चापौ धन्वशरासनकोदण्डकार्मुकम्' इति च । धन्वा तु मरुदेशे ना क्लीबे चापे स्थलेऽपि च' इति मेदिनी । धन्विर्गत्यर्थः सौत्रो धातुः । 'द्यु अभिगमे' द्युवा सूर्यः । **प्रतिदिवेति** ॥ 'प्रतिदीव्ने इन्धत आकृतान्' इति मन्त्रे तु प्रतिदिवा कितव इति व्याख्यातम् । **श्वन्नुक्षन्** ॥ **कनिप्रत्ययान्ता**

श्वा । उक्षा । पूषा । 'प्लिह गतौ' । इकारस्य दीर्घत्वम् । प्लेहतीति प्लीहा कुक्षिव्याधिः । 'क्लिदू आर्द्रीभावे' । क्लिद्यति क्लेदा चन्द्रः । स्निह्यतेर्गुणः । स्निह्यतीति स्नेहा सुहृच्चन्द्रश्च । मुह्यन्त्यस्मिन्नाहते मूर्धा । मुहेरुपधाया दीर्घो धोऽन्तादेशो रमागमश्च । मज्जत्यस्थिषु मज्जा अस्थिसारः । अर्यपूर्वो माङ् । अर्यमा । विश्वं प्साति विश्वप्सा अग्निः । परिजायते परिज्मा चन्द्रोऽग्निश्च । जनेरुपधालोपो मश्चान्तादेशः । मातर्यन्तरिक्षे श्वयतीति मातरिश्वा । धातोरिकारलोपः । 'मह पूजायाम्' । हस्य घो वुगागमश्च । मघवा इन्द्रः ।

॥ इत्युणादिषु प्रथमःपादः ॥

## ॥ अथ उणादिषु द्वितीयः पादः ॥

१५८ । **कृहृभ्यामेणुः** । करेणुः । हरेणुः गन्धद्रव्यम् ।

१५९ । **हनिकुषिनीरमिकाशिभ्यः क्थन्** । हथो विषण्णः । कुष्ठः । नीथो नेता । रथः काष्ठम् ।

---

**इति** ॥ नायं निदिति भावः । एतच्च हलन्तशब्दप्रकरणे मघवन्शब्दे व्युत्पादितम् । केचित्तु नित्त्वं स्वीकृत्योक्षन्नादीनां सौत्रमन्तोदात्तनिपातनमाहुः । तद्गौरवादुपेक्षितम् । **श्वेति** ॥ इकारलोपो निपात्यते । **पूषेति** ॥ 'पूष वृद्धौ' 'क्लेदौषधिशशाङ्कयोः' इति यादवः । **मूर्धेति** ॥ 'मूर्धा ना मस्तकोऽस्त्रियाम्' इत्यमरः । **मज्जेति** ॥ टाबन्तोऽप्ययम् । 'ऊष्मया सार्द्धमूष्मापि मज्जोक्तो मज्जया सह' इति द्विरूपकोशात् । 'अर्यमा तु पुमान् सूर्ये पितृदेवान्तरेऽपि च' इति मेदिनी । **परिजायते इत्यादि** ॥ एतच्च दशपादीवृत्त्यनुरोधेनोक्तम् । 'परिज्मानं सुखं रथम्' इति मन्त्रस्य वेदभाष्ये तु परिज्मा परितो गन्ता । अजेः परिपूर्वस्य 'श्वन्नुक्षन्' इत्यादिना मन्प्रत्ययः । अकारलोपः । आद्युदात्तत्वञ्च निपात्यते इत्युक्तम् । उज्ज्वलदत्तस्तु परिज्वेति पठित्वा जु इति सौत्रो धातुः परिपूर्वः, यणादेशः, परिज्वा चन्द्र इत्याह । तल्लक्ष्यविरोधादुपेक्ष्यम् । **मातरिश्वेति** ॥ सप्तम्या अलुक् उदात्तत्वञ्च निपात्यते । इह भत्वविषये सम्प्रसारणन्न भवति । श्वयुवेति सूत्रेऽभिव्यक्ततरत्वेन कुक्कुरवाचकस्यैव श्वशब्दस्य ग्रहणम् । इह सूत्रान्त इति शब्द आद्यर्थः । तेनान्येभ्योऽपि यथादर्शनङ्कनिः । दशपाद्यान्तु इतिशब्दो न पठ्यते ॥

॥ इत्युणादिषु प्रथमः पादः ॥

**कृहृभ्याम्** ॥ 'करेणुरिभ्यां स्त्री नेभे' इत्यमरः । 'करेणुर्गजयोषायां स्त्रियां पुंसि मतङ्गजे' इति मेदिनी । **गन्धेति** ॥ कलापश्चेति बोध्यम् । 'कलापस्तु सतीनकः । हरेणुः खण्डके चास्मिन्' इति वैश्यवर्गे अमरः । 'हरेणुर्ना सतीने स्त्री रेणुकाकुलयोषितोः' इति मेदिनीविश्वप्रकाशौ । 'कुष्ठं रोगे सुगन्धे च' इति विश्वः । 'नीथे नीथे मघवानं सुतासः' इति

१६० । **अवे भृञः** । अवभृथः ।

१६१ । **उषिकुषिगार्तिभ्यस्थन्** । ओष्ठः । कोष्ठम् । गाथा । अर्थः । बाहुलकाच्छोथः ।

१६२ । **सर्तेर्णित्** । सार्थः समूहः ।

१६३ । **जॄवृञ्भ्यामूथन्** । जरूथं मांसम् । 'वरूथो रथगुप्तौ ना' ।

१६४ । **पातॄतुदिवचिरिचिसिचिभ्यस्थक्** । पीथो रविः घृतं पीथम् । 'तीर्थं शास्त्राध्वरक्षेत्रोपायोपाध्यायमन्त्रिषु । अवतारर्षिजुष्टाम्भःस्त्रीरजःसु च विश्रुतम्' इति विश्वः । तुत्थोऽग्निः । उक्थं सामभेदः । रिक्थम् । बाहुलकादृचेरपि । 'रिक्थमृक्थं धनं वसु' । सिक्थम् ।

१६५ । **अर्तेर्निरि** । निर्ऋथं साम ।

१६६ । **निशीथगोपीथावगथाः** । निशीथोऽर्धरात्रो रात्रिमात्रं च । गोपीथं तीर्थम् । अवगथः प्रातःस्नातः ।

१६७ । **गश्चोदि** । उद्गीथः साम्नो भागविशेषः ।

१६८ । **समीणः** । समिथो वह्निः, संग्रामश्च ।

---

मन्त्रे नीथशब्दस्यान्तोदात्तत्वं बाहुलकात् । 'नीथे नीथे स्तोत्रे स्तोत्रे च' इति वेदभाष्यम् । 'रथः पुमानवयवे स्यन्दने वेतसेऽपि च' इति मेदिनी । 'रथः स्यात्स्यन्दने काये चरणे वेतसेऽपि च' इति विश्वः । 'काष्ठा दारुहरिद्रायाङ्कालमानप्रकर्षयोः । स्थानमात्रे दिशि च स्त्री दारुणि स्यान्नपुंसकम्' इति मेदिनी । **उषिकुषि** ॥ 'कोष्ठः कुसूले चात्मीये मध्ये कुक्षेर्गृहस्य च । गाथा श्लोके संस्कृतान्यभाषायां शेषवृत्तयोः' इति मेदिनी । 'अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु' इत्यमरः । 'अर्थो विषयार्थनयोर्द्धर्मकारणवस्तुषु । अभिधेये च शब्दानां निवृत्तौ च प्रयोजने' इति मेदिनी । शोथः श्वयथुः । शु गतौ । **सर्तेर्णित्** ॥ 'सार्थो वणिक्समूहे स्यादपि सङ्घातमात्रके' इति मेदिनीविश्वप्रकाशौ । **जॄवृञ्** ॥ 'जरूथोऽसुरविशेषः' इति वेदभाष्यम् । 'वरूथं स्यात्तनुत्राणे रथगोपनवेश्मनोः' इति हेमचन्द्रः । 'वरूथो रथगुप्तौ स्याद्वरूथं रथवेश्मनोः' इति विश्वः । **पातॄ** ॥ 'तुत्थो ग्रावाञ्जने तु स्यान्नीलीसूक्ष्मैलयोरपि' इति विश्वः । 'तुत्थमञ्जनभेदे स्यात् नीलीसूक्ष्मैलयोः स्त्रियाम् । सिक्थो भक्तपुलाके ना' इति मेदिनी । **अर्तेः** ॥ 'ऋ गतौ' 'द्रोघवाचस्ते निर्ऋथं सचन्ताम्' इति मन्त्रे 'निर्ऋथो हिंसा' इति वेदभाष्यम् । 'निशीथस्तु पुमानर्धरात्रे स्याद्रात्रिमात्रके' इति मेदिनी । 'प्रतित्यञ्चारुमध्वरम्' इति मन्त्रे गोपीथः सोमपानमिति वेदभाष्यम् । यास्कोऽप्येवम् । तीर्थमिति तु वृत्तिकारः । **अवगथ इति** ॥ गाङो ह्रस्वत्वं निपातनात् । **समीणः** ॥ 'समिथशब्दः सङ्ग्रामपर्यायेषु वैदिकनिघण्टौ पठितः । 'श्रिये जात' इति मन्त्रे समिथा युद्धानि' इति वेदभाष्यम् । युक्तञ्चैतत् । सम्यगेति

**१६९ । तिथपृष्ठगूथयूथप्रोथाः ।** तिजेर्जलोपः । तिथोऽनलः कामश्च । पृष्ठम् । गूथं विष्ठा । यूथं समूहः । 'प्रोथमस्त्री तुरङ्गास्ये प्रोथः प्रस्थित उच्यते'।

**१७० । स्फायितञ्चिवञ्चिशकिक्षिपिक्षुदिसृपितृपिदृपिवन्द्युन्दिश्वितिवृत्यजिनीपदिमदिमुदिखिदिछिदिभिदिमन्दिचन्दिदहिदसिदम्भिवसिवाशिशीङ्हसिसिधिशुभिभ्यो रक् ।** द्वात्रिंशतो रक्स्यात् । वलि यलोपः । स्फारम् । न्यङ्क्वादित्वात्कुत्वम् । तक्रम् । वक्रम । शक्रः । क्षिप्रम् । क्षुद्रः । सृप्रश्चन्द्रः । तृप्रः पुरोडाशः । दृप्रो बलवान् । वन्द्रः पूजकः । उन्दी । उन्द्रो जलचरः । श्वित्रं कुष्ठम् । 'वृत्रो रिपौ ध्वनौ ध्वान्ते शैले चक्रे च दानवे'। अजेर्वी । वीरः । नीरम् । पद्रो ग्रामः । मद्रो हर्षो देशभेदश्च । 'मुद्रा प्रत्ययकारिणी' । 'खिद्रो रोगो दरिद्रश्च' । छिद्रम् । भिद्रं वज्रम् । मन्द्रः । चन्द्रः । पचाद्यचि चन्दोऽपि । 'हिमांशुश्चन्द्रमाश्चन्द्रः शशी चन्दो हिमद्युतिः'। दह्रोऽग्निः । दस्रः स्वर्वैद्यः । 'दभ्रः समुद्रः स्वल्पं च' । वसेः सम्प्रसारणे ।

**३१६८ । न रपरसृपिसृजिस्पृशिस्पृहिसवनादीनाम् । (८-३-११०)**

---

जयार्थमस्त्रेति व्युत्पत्तेः । सम्पूर्वस्य इणः क्विन्नाद्यन्तस्य लोकेऽपि युद्धार्थत्वदर्शनाच्च । उक्तं ह्यमरेण 'समित्याजिसमिद्युधः' । तिथं पृष्ठम् । 'पृषु सेचने' 'पृष्ठन्तु चरमन्तनोः' इत्यमरः । 'पृष्ठश्चरममात्रेऽपि देहस्यावयवान्तरे' इति मेदिनी । स्तोत्रविशेषोऽपि पृष्ठम् । चित्राधिकरणे पृष्ठैः स्तुवत इत्यादौ तथा निर्णयात् । **गूथमिति** ॥ 'गु पुरीषोत्सर्गे' निपातनाद्दीर्घः । एवं यूथेऽपि । 'यूथन्तिर्यक्समूहे स्त्री पुष्पभेदे च योषिति' इति मेदिनी । 'यूथी पुष्पप्रभेदे स्यात् मागध्याञ्च करेणुके । यूथन्तिर्यक्समूहेऽपि वृन्दमात्रेऽपि भाषितम्' इति विश्वः । 'प्रुङ् गतौ' निपातनाद्गुणः । 'प्रोथोऽस्त्री हयघोणायां ना कट्यामध्वगे त्रिषु' इति मेदिनी । **स्फायितञ्चि** ॥ **द्वात्रिंशत इति** ॥ दशपाद्यान्तु त्रयस्त्रिंशदुक्ताः । दम्भिवहिवसीति पठित्वा 'वह प्रापणे' उह्रोऽनड्वानित्युदाहरणात् । माधवोऽप्येवम् । **स्फारमिति** ॥ 'नेड्वशि' इति नेट् । वलि यलोपः । 'स्फारः स्यात्पुंसि विकटे करकादेश्च बुद्बुदे' इति मेदिनी । **तक्रमिति** ॥ 'तञ्चू सङ्कोचे' । 'वक्रः स्याज्जटिले क्रूरे पुटभेदे शनैश्चरे' इति विश्वः । 'वक्रः शनैश्चरे पुंसि पुटभेदे नपुंसकम् । शक्रः पुमान् देवराजे कुटजार्जुनभूरुहोः' इति मेदिनी । **क्षुद्र इति** ॥ क्षुदिर् सम्पेषणे । 'क्षुद्रः स्यादधमक्रूरकृपणाल्पेषु वाच्यवत् । क्षुद्रा व्यङ्गानटी-कण्टकारिकासरघासु च । चाङ्गेरीवेश्ययोर्हिंस्रामक्षिकामात्रयोरपि' इति मेदिनी । **तृप्रः पुरोडाश इति** ॥ 'न तृप्रा उरुव्यंसः' इति मन्त्रे वेदभाष्यकारैः प्रकृतसूत्रे उज्ज्वलदत्तादिभिश्चेत्थं व्याख्यातम् । दशपादीवृत्तौ तु तृप्रमाज्यङ्काष्ठश्चेत्युक्तम् । तृप्रन्दुःखमिति सुब्धातुवृत्तौ माधवः । हिमांशुरित्यादि शब्दार्णवः । दस्यति रोगान् क्षिपति दस्रः । 'दस्रः खरेऽश्विनीसुते'

रेफपरस्य सकारस्य सृप्यादीनां च मूर्धन्यो न स्यात् । 'पूर्वपदात्' (सू ३६४३) इति प्राप्तः प्रतिषिध्यत इति वृत्तिर्भूयोऽभिप्राया । तेन 'शासिवसि–' (सू २४१०) इति प्राप्तमपि न । उस्रो रश्मिः । उस्रा गौः । वाश्रो दिवसः । वाश्रं मन्दिरम् । शीरोऽजगरः । हस्रो मूर्खः । सिध्रः साधुः । शुभ्रम् । बाहुलकात् मुसे रक् । मुस्रम् उदश्रु ।

१७१ । **चकिरम्योरुच्चोपधायाः** । चुक्रमम्लद्रव्यम् । रुम्रोऽरुणः ।

१७२ । **वौ कसेः** । विकुस्रश्चन्द्रः ।

१७३ । **अमितम्योर्दीर्घश्च** । आम्रम् । ताम्रम् ।

१७४ । **निन्देर्नलोपश्च** । निद्रा ।

१७५ । **अर्देर्दीर्घश्च** । आर्द्रम् ।

१७६ । **शुचेर्दश्च** । शूद्रः ।

१७७ । **दुरीणो लोपश्च** । दुःखेनेयते प्राप्यत इति दूरम् ।

१७८ । **कृतेश्छः क्रू च** । कृच्छ्रं क्रूरः ।

१७९ । **रोदेर्णिलुक् च** । रोदयतीति रुद्रः ।

१८० । **बहुलमन्यत्रापि संज्ञाछन्दसोः** । णिलुगित्येव । 'वान्ति पर्णशुषो वातास्ततः पर्णमुचोऽपरे' ।

---

इति मेदिनी । 'दस्रः खरे चाश्विनयोः' इति विश्वः । **भूयोऽभिप्रायेति** ॥ माधवस्तु वृत्तिस्वरसमनुरुध्य 'अविन्द उस्रिया' इति मन्त्रे बाहुलकात् षत्वं नेति व्याचष्टे । 'उस्रो वृषे च किरणेऽप्युस्रार्जुन्युपचित्रयोः' इति मेदिनी । 'उस्रा गव्युपचित्रायामुस्रन्तु किरणे स्मृतः' इति विश्वः । 'वाश्रो ना दिवसे क्लीबं मन्दिरे च चतुष्पथे' इति मेदिनी । 'वाश्रो रासभपक्षिणोः' इत्येके । माधवस्तु 'वाश्रेव विद्युन्मिमाति' इति मन्त्रे शब्दयुक्ता प्रस्नुतस्तना धेनुर्वाश्रेति व्याख्यत् । 'शुभ्रं स्यादभ्रके क्लीबमुद्दीप्रशुक्लयोस्त्रिषु' इति मेदिनी । **चुक्रमिति** ॥ 'चक तृप्तौ' । 'चुक्रस्त्वम्लेऽम्लवेतसे । चुक्री चाङ्गेरिकायां स्यात् वृक्षाम्ले चुक्रमिष्यते' इति विश्वः । 'चुक्रं वृक्षाम्ले चाङ्गेर्यां स्त्री पुंस्यम्लेऽम्लवेतसे' इति मेदिनी । **अर्देर्दीर्घश्च** ॥ 'आर्द्रा नक्षत्रभेदे स्यात् स्त्रियां क्लिन्नेऽभिधेयवत्' इति मेदिनी । **शुचेर्दश्च** ॥ शूद्रो वृषलः । 'अहहारे त्वा शूद्रा' इति श्रुतौ तु रूढेर्बाधाद्योग एव पुरस्कृतः । तथा चोत्तरतन्त्रे भगवता व्यासेन सूत्रितम् । 'शुगस्य तदनादरश्रवणात्' इति । **कृतेः** ॥ अन्त्यस्य च्छः । क्रू तु सर्वस्य । अनेकाल्त्वात् । 'कृच्छ्रमाख्यानमाभीले पापसान्तपनादिनोः' इति विश्वमेदिन्यौ । 'क्रूरस्तु कठिने घोरे नृशंसे चाभिधेयवत्' इति च । **बहुलमन्यत्रापि संज्ञा** ॥ बृंहयति वर्धयति प्रजाः ब्रह्मा । शं सुखं भावयति शम्भुः । शोषयति शुष्मेत्यादि । छन्दसि, 'वर्धन्तु

१८१ । **जोरी च** । जीरोऽणुः । ज्यश्चेत्येके ।

१८२ । **सुसूधागृधिभ्यः क्रन्** । सुरः । सूरः । धीरः । गृध्रः ।

१८३ । **शुसिचिमीनां दीर्घश्च** । शुः सौवः शूरः । सीरम् । चीरम् । मीरः समुद्रः ।

१८४ । **वाविन्धेः** । वीध्रं विमलम् ।

१८५ । **वृधिवपिभ्यां रन्** । वर्ध्रं चर्म । वप्रः प्राकारः ।

१८६ । **ऋज्रेन्द्राग्रवज्रविप्रकुब्रचुब्रक्षुरखुरभद्रोग्रभेरभेलशुक्रशुक्लगौरवन्रेरामालाः** । रन्नन्ता एकोनविंशतिः । निपातनाद्गुणाभावः । ऋज्रो नायकः । इदि इन्द्रः । अङ्केर्नलोपः । अग्रम् । 'वज्रोऽस्त्री हीरके पवौ' । डु वप्, उपधाया इत्त्वम् । विप्रः । कुम्बिचुम्ब्योर्नलोपः । कुब्रमरण्यम् । चुब्रं मुखम् । 'क्षुर विलेखने' रेफलोपः । अगुणः । क्षुरः । 'खुर छेदने' रलोपो गुणाभावश्च । खुरः । भन्देर्नलोपः भद्रम् । 'उच समवाये' चस्य गः उग्रः । 'ञि भी

त्वा सुष्टुतयः । य इमं जजान ।' बाहुलकादसंज्ञाछन्दसोरपि क्वचिदित्याशयेनोदाहरति । **वान्तीत्यादि** ॥ **जोरी च** ॥ 'जीरः खड्गे वणिग्द्रव्ये' इति विश्वः । 'जीरस्तु जरणे खड्गे' इति मेदिनी । **ज्यश्चेति** ॥ तथा च, 'न धातुलोपे' इति सूत्रे 'जीवेरदानुः' इत्यस्य प्रत्याख्यानार्थं नैतज्जीवे रूपं किन्तु रकि ज्यः सम्प्रसारणमिति भाष्ये उक्तम् । **सुसू** ॥ 'सुरा चषकमद्ययोः । पुल्लिङ्गस्त्रिदिवेशे स्यात्' इति मेदिनी । 'सुरो देवे सुरा मद्ये चषकेऽपि सुरा क्वचित्' इति विश्वः । सुवति प्रेरयति कर्मणि लोकमिति सूरः । सूर्यः । 'धीरो धैर्यान्विते स्वैरे बुधे क्लीबन्तु कुङ्कुमे । स्त्रियां श्रवणतुल्यायाम्' इति मेदिनी । 'गृध्रः खगान्तरे पुंसि वाच्यलिङ्गोऽर्थलुब्धके' इति च । शुरिति तालव्यादिर्गत्यर्थः । 'शूरः स्यात् यादवे भटे' इति मेदिनी । 'शूरश्चारुभटे सूर्ये' इति विश्वहेमचन्द्रौ । 'शूरः सूरश्च तरणौ' इति द्विरूपेषु विश्वः । 'सीरोऽर्कहलयोः पुंसि । चीरी झिल्ल्यां नपुंसकम् । गोस्तने वस्त्रभेदे च रेखालेखनभेदयोः' इति मेदिनी । 'चीरन्तु गोस्तने वस्त्रे चूडायां सीसकेऽपि च । चिरी कृच्छ्रादिकाझिल्ल्योः' इति विश्वः । **वाविन्धेः** ॥ 'वीध्रन्तु विमलार्थकम्' इति विशेष्यनिघ्नेष्वमरः । 'वप्रः पितरि केदारे वप्रः प्राकाररोधसोः' इति धरणिरन्तिदेवौ । 'वप्रस्ताते पुमानस्त्री वेणुक्षेत्रचये तटे' इति मेदिनी । **ऋज्रेन्द्र** ॥ 'ऋज गत्यादिषु' । 'ऋज्राश्वः प्रष्टिभिरम्बरीष' इति मन्त्रे ऋज्रा गतिमन्तोऽश्वा यस्य स ऋज्राश्व इति वेदभाष्यम् । 'इन्द्रः शचीपतावन्तरात्मन्यादित्ययोगयोः' इति विश्वः । 'अग्रं पुरस्तादुपरि परिमाणे पलस्य च । आलम्बने समूहे च प्रान्ते च स्यान्नपुंसकम् । अधिके च प्रधाने च प्रथमे चाभिधेयवत्' इति मेदिनी । 'क्षुरः स्याच्छेदनद्रव्ये कोकिलाक्षे च गोक्षुरे' इति विश्वमेदिन्यौ । 'खुरः कोलदले शफे । भद्रः शिवे खञ्जरीटवृषभेरुकदम्बके । करिजातिविशेषे ना क्लीबं मङ्गलमुस्तयोः । काञ्चने च स्त्रियां रास्नाकृष्णाव्योमनदीषु च । तिथिभेदे

भेरी । पक्षे लः । भेलो जलतरणद्रव्यम् । शुचेश्चस्य कः, शुक्रः । पक्षे लः । शुक्लः । गुङ् वृद्धिः । 'गौरोऽरुणे सिते पीते' 'वन सम्भक्तौ' । वन्नो विभागी । इणो गुणाभावः । 'इरा मद्ये च वारिणि' । 'मा माने' माला ।

१८७ । **समि कस उकन्** । 'कस गतौ' । सम्यक् कसन्ति पलायन्ते जनाः अस्मादिति सङ्कसुकः दुर्जनः, अस्थिरश्च ।

१८८ । **पचिनशोर्णुकन्कनुमौ च** । पचेः कः । पाकुकः सूपकारः । नशेर्नुम् । नंशुकः ।

१८९ । **भियः क्रुकन्** । भीरुकः ।

१९० । **क्वुन्शिल्पिसंज्ञयोरपूर्वस्यापि** । रजकः । इक्षुकुट्टकः । चरकः । 'चष भक्षणे' । चषकः । शुनकः । भषकः ।

१९१ । **रमे रश्च लो वा** । रमको विलासी । लमकः ।

१९२ । **जहातेर्द्वे च** । जहकस्त्यागी कालश्च ।

१९३ । **ध्मो धम च** । धमकः कर्मकारः ।

---

प्रसारिण्याङ्कटफलानन्तयोरपि । त्रिषु श्रेष्ठे च साधौ च न पुंसि करणान्तरे । उग्रः शूद्रासुते क्षत्राद्रुद्रे पुंसि त्रिषूत्कटे । स्त्री वचाक्षुद्रयोः' इति मेदिनी । 'भेदः प्लवे भीरुके च निर्बुद्धिमुनिभेदयोः' इति विश्वः । 'भेलः प्लवे मणौ पुंसि भीराव्रे च वाच्यवत् । शुक्रः स्यात् भार्गवे ज्येष्ठे मासे वैश्वानरे पुमान् । रेतोऽक्षिरुग्भिदोः क्लीबं शुक्लो योगान्तरे सिते । नपुंसकन्तु रजते । गौरः पीतेऽरुणे श्वेते विशुद्धेऽप्यभिधेयवत् । ना श्वेतसर्षपे चन्द्रे न द्वयोः पद्मकेसरे । गौरी त्वसञ्जातरजःकन्याशङ्करभार्ययोः । 'रोचना रजनीपिङ्गाप्रियङ्गुवसुधासु च । आपगाया विशेषेऽपि यादसां पतियोषिति' इति मेदिनी । 'नदीभेदे च गौरी स्याद्वरुणस्य च योषिति' इति विश्वः । 'अष्टवर्षा तु या दत्ता श्रुतशीलसमन्विते । सा गौरी तत्सुतो यस्तु स गौरः परिकीर्तितः' इति ब्रह्माण्डवचनं श्राद्धकाण्डे हेमाद्रिणा उदाहृतम् । एतेन 'गौरः शुच्याचारः' इति भाष्यं व्याख्यातम् । 'इरा भूवाक्सुराप्सु च' इति मेदिनी । 'मालं क्षेत्रे जने मालो माला पुष्पादिदामनि' इति मेदिनी । 'मालमुन्नतभूतलम्' इत्युत्पलः । 'क्षेत्रमारुह्य मालम्' इति मेघदूतः । मणिपूर्वोऽयमर्थान्तरेऽपि रूढः । 'मणिमाला स्मृता हारे स्त्रीणान्दन्तक्षतान्तरे' इति विश्वः । बाहुलकात् 'तिज निशाने' रन् दीर्घत्वं जस्य वः । 'तीव्रा तु कटुरोहिण्यां राजिकागण्डदूर्वयोः । त्रिष्वत्युष्णे नितान्ते च कटौ' इति मेदिनी । **समि कसः** ॥ 'सङ्कसुकोऽस्थिरः' इति विशेष्यनिघ्ने अमरः । **क्वुन्** ॥ अपूर्वस्य निरुपपदस्य अपिशब्दात्सोपपदस्य । अर्थद्वारकसम्बन्धे षष्ठी, प्रकृतिप्रत्ययार्थयोः क्रियाकारकभावात् । 'रजको धावके शुके' इति विश्वः । 'रजकौ धावकशुकौ' इति हेमचन्द्रः । **इक्षुकुट्टक इति** ॥ 'कुट्ट छेदने' । इक्षून् कुट्टयति इक्षुकुट्टको गौडिकः ।

१९४ । **हनो वध च** । वधकः ।

१९५ । **बहुलमन्यत्रापि** । 'कुह विस्मापने' । कुहकः । **कृतकम्** ।

१९६ । **कृषेर्वृद्धिश्चोदीचाम्** । कार्षकः—कृषकः ।

१९७ । **उदकं च** । प्रपञ्चार्थम् ।

१९८ । **वृश्चिकृषोः किकन्** । वृश्चिकः । कृषिकः ।

१९९ । **प्राङि पणिकषः** । प्रापणिकः पण्यविक्रयी । प्राकषिकः परदारोपजीवी ।

२०० । **मुषेर्दीर्घश्च** । मूषिकः आखुः ।

२०१ । **स्यमः सम्प्रसारणं च** । चाद्दीर्घः । सीमिकः वृक्षभेदः ।

२०२ । **क्रिय इकन्** । क्रयिकः क्रेता ।

२०३ । **आङि पणिपनिपतिखनिभ्यः** । आपणिकः । आपनिकः इन्द्रनीलः किरातश्च । आपतिकः श्येनो दैवायत्तश्च । आखनिको मूषिको वराहश्च ।

२०४ । **श्यास्त्याहृञविभ्य इनच्** । श्येनः । स्त्येनः । हरिणः । अविनोऽध्वर्युः ।

२०५ । **वृजेः किच्च** । वृजिनम् ।

२०६ । **अजेरज च** । वीभाववाधनार्थम् । अजिनम् ।

---

'चषकोऽस्त्री सुरापात्रे मद्यमाद्यप्रभेदयोः' इति मेदिनी । लमकः ऋषिविशेषः । **कृषेः** ॥ कार्षकः कृषीवलः । कृषकः स एव । 'कृषकः पुंसि फाले स्यात् कार्षके त्वभिधेयवत्' इति मेदिनी । 'स्त्री कुशी कुशिकः फालः' इति रत्नकोशः । **उदकं च** ॥ उन्दी क्लेदने । ननु 'क्वुन् शिल्पि इत्यादिना गतार्थमिदम् । अत आह । **प्रपञ्चेति** ॥ **प्राङि** ॥ सङ्घात उपपदम् । **आङि** ॥ नन्वनेनैव सिद्धे प्राङीत्यत्र पणिग्रहणं व्यर्थमिति चेन्न । उपसर्गान्तरनिवृत्त्यर्थत्वात् । **आपणिक इति** ॥ वणिक् । नित्स्वरेणाद्युदात्तः । आपणेन व्यवहरतीत्यर्थे ठकि तु 'कितः' इत्यन्तोदात्तः । **श्यास्त्या** ॥ 'श्येनः पत्रिणि पाण्डुरे' इति मेदिनी । स्त्येनश्चोरः । 'स्तेन चौर्ये' इति चौरादिकात्पचाद्यचि तु निर्यकारोऽपि । केचित्तु 'स्तायूनां पतये' इत्यादिप्रयोगोपष्टम्भेन निर्यकारस्यापि ष्टैधातोर्भ्वादिषु माधवादिभिः स्वीकृतत्वात् प्रकृतसूत्रेऽपि तमेव पठन्तः स्तेनशब्दो निर्यकार एवेत्याहुः । 'हरिणः पुंसि सारङ्गे विशदे त्वभिधेयवत् । हरिणी हरितायाञ्च नारीभिद्वृत्तभेदयोः । सुवर्णप्रतिमायाञ्च' इति मेदिनी । **वृजेः किच्च** ॥ 'वृजिनं कल्मषे क्लीबं केशे ना कुटिलेऽन्यवत्' इति मेदिनी । **अजिनमिति** ॥ 'अजिनञ्चर्म कृत्तिः स्त्री' इत्यमरः ।

२०७। **बहुलमन्यत्रापि**। कठिनम्। नलिनम्। मलिनम्। कुण्डिनम्। द्यतेः 'यत्परुषि दिनम्' दिवसोऽपि दिनम्।

२०८। **द्रुदक्षिभ्यामिनन्**। द्रविणम्। दक्षिणः। दक्षिणा।

२०९। **अर्तेः किदिच्च**। इरिणं शून्यम्।

२१०। **वेपितुह्योर्ह्रस्वश्च**। विपिनम्। तुहिनम्।

२११। **तलिपुलिभ्यां च**। 'तलिनं विरले स्तोके स्वच्छेऽपि तलिनं त्रिषु'। पुलिनम्।

२१२। **गर्वेरत उच्च**। गौरादित्वान्ङीष्। गुर्विणी गर्भिणी।

२१३। **रुहेश्च**। रोहिणः।

२१४। **महेरिनण्च**। चादिनन्। माहिनम्—महिनम् राज्यम्।

२१५। **क्विब्वचिप्रच्छिश्रिस्रुद्रुप्रुज्वां दीर्घोऽसम्प्रसारणं च**। वाक्। प्राट्। श्रीः। स्रवत्यतो घृतादिकमिति स्रूः, यज्ञोपकरणम्। द्रूर्हिरण्यम्। कटप्रूः कामरूपी कीटश्च। 'जूराकाशे सरस्वत्यां पिशाच्यां जवने स्त्रियाम्'।

२१६। **आप्नोतेर्ह्रस्वश्च**। आपः। अपः। अद्भिः। अद्भ्यः।

२१७। **परौ व्रजेः षः पदान्ते**। व्रजेः क्विब्दीर्घौ स्तः, पदान्ते तु षश्च। परिव्राट्। परिव्राजौ।

---

**कठिनमिति**॥ कठ कृच्छ्रजीवने। 'कठिनमपि निष्ठुरे स्यात् स्तब्धे तु नपुंसके स्थाल्याम्। कठिनी खटिकायामपि कठिना गुडशर्करायाञ्च' इति मेदिनी। **मलिनमिति**॥ 'मल मल्ल धारणे'। 'मलिनन्दूषिते कृष्णे ऋतुमत्यान्तु योषिति' इति मेदिनी। **कुण्डिनमिति**॥ 'नगरङ्कुण्डिनमण्डजो ययौ' इति श्रीहर्षः। कुण्डिनः ऋषिः। तस्यापत्यङ्कौण्डिन्यः। **दिनमिति**॥ परुषि पर्वणि दिनं खण्डितमिति तैत्तिरीयश्रुत्यर्थः। **द्रुदक्षिभ्यामिनन्**॥ 'द्रु गतौ'। 'दक्ष वृद्धौ'। 'द्रविणं न द्वयोर्वित्ते काञ्चने च पराक्रमे। दक्षिणा दक्षिणोद्भूतसरलच्छन्दवर्तिषु। अवामे त्रिषु यज्ञादिविधिदाने दिशि स्त्रियाम्' इति मेदिनी। 'दाक्षिणः सरलोदारपरच्छन्दानुवर्त्तिषु। वाच्यवद्दक्षिणावाची यज्ञदानप्रतिष्ठयोः' इति विश्वः। **अर्तेः**॥ 'इरिणं शून्यमूषरम्' इत्यमरः। 'इरिणन्तु खरे शून्येऽपि' इति मेदिनी। **तुहिनमिति**॥ तुहिर् अर्दने। लघूपधगुणे कृते ह्रस्वः। **तलिपुलिभ्याञ्च**॥ तल प्रतिष्ठायाम्। पुल महत्त्वे। 'तलिनं विरले स्तोके स्वच्छेऽपि वाच्यलिङ्गकम्' इति मेदिनी। **महेः**॥ 'कुतस्त्वमिन्द्र माहिनस्सन्' इति मन्त्रे माहिनो महनीयः पूजनीय इति वेदभाष्यम्। **क्विब्वचि**॥ पृच्छतीति प्राट्। 'छ्वोः शूठ्' इति शः। प्राशौ प्राशः। **श्रीरिति**॥ 'कृदिकारात्' इति ङीष् तु न। कृत्प्रत्ययो य इकार इति व्याख्यानात्। कृदन्तं यदिकारान्तमिति

२१८ । **हुवः श्लुवच्च** । जुहूः ।

२१९ । **स्रुवः कः** । स्रुवः ।

२२० । **चिक्च** । इकार उच्चारणार्थः । क इन्, कुत्वम् । स्रुक् । 'स्रुवं च स्रुचश्च सम्मृड्ढि' ।

२२१ । **तनोतेरनश्च वः** । तनोतेश्चिक्प्रत्ययः, अनो वशब्दादेशश्च । त्वक् ।

२२२ । **ग्लानुदिभ्यां डौः** । ग्लौः । नौः ।

२२३ । **च्विरव्ययम्** । डौरित्येव । ग्लौ करोति । 'कृन्मेजन्तः' (सू ४४९) । इति सिद्धे नियमार्थमिदम् । उणादिप्रत्ययान्तश्च्व्यन्त एवेति ।

२२४ । **रातेर्डैः** । राः । रायौ । रायः ।

२२५ । **गमेर्डोः** । 'गौर्नादित्ये बलीवर्दे किरणक्रतुभेदयोः । स्त्री तु स्यादिशि भारत्यां भूमौ च सुरभावपि । नृस्त्रियोः स्वर्गवज्राम्बुरश्मिदृग्बाणलोमसु' बाहुलकाद्द्युतेरपि डोः । 'द्यौः स्त्री स्वर्गान्तरिक्षयोः' इति कोशः।

२२६ । **भ्रमेश्च डूः** । भ्रूः । चाद्गमेः । अग्रेगूः ।

२२७ । **दमेर्डोसिः** । दोः । दोषौ ।

२२८ । **पणेरिज्यादेश्च वः** । वणिक् । स्वार्थेऽण् । 'नैगमो वाणिजो वणिक्' ।

२२९ । **वशेः कित्** । 'उशिगग्नौ घृतेऽपि च' ।

२३० । **भृञ ऊच्च** । भूरिक् भूमिः ।

२३१ । **जसिसहोरुरिन्** । जसुरिर्वज्रम । सहुरिरादित्यः पृथिवी च ।

पक्षेऽपि कारग्रहणं तत्सामर्थ्यादेव केवलग्रहणात् । दुर्घटस्तु ङीपि श्रीमित्यपि रक्षित इच्छतीत्याह । 'श्रीर्वेषरचनाशोभाभारतीसरलद्रुमे । लक्ष्म्यान्त्रिवर्गसम्पत्तिविधोपकरणेषु च । विभूतौ च मतौ च स्त्री' इति मेदिनी । जूराकाशे इत्यादि मूलोदाहृतञ्च । **हुवः** ॥ चात् क्विब्दीर्घौ । **स्रुवः कः** ॥ 'स्रु गतौ' । स्रुवो यज्ञपात्रविशेषः । 'अयं स्रुवोऽभिजिहर्ति' 'स्रुवेण पार्वणौ जुहोति' इत्यादौ प्रसिद्धः । **चिक्च** ॥ स्रुव इत्येव । योगविभाग उत्तरार्थः । **तनोतेः** ॥ व इति सङ्घातग्रहणम् । तदाह । **वशब्देति** ॥ 'त्रियान्तु त्वगसृग्धरा' इत्यमरः । केशवोक्तमाह । **गौर्नेत्यादि** ॥ 'गौः स्वर्गे च बलीवर्दे रश्मौ च कुलिशे पुमान् । स्त्री सौरभेयदिग्बाणदिग्वाग्भूष्वप्सु भूम्नि च' इति मेदिनी । **द्यौरिति** ॥ कर्तर्यधिकरणे वा प्रत्ययः । **दोरिति** ॥ त्रिलिङ्गोऽयमिति प्रागेवोक्तम् । **जसिसहोरुरिन्** ॥ 'जसुरये स्तर्यं पिप्यथुर्गाम्' इति मन्त्रे जसुरये श्रान्तायेति 'नीचायमानं जसुरिं न श्येनम्' इत्यत्र जसुरिं क्षुधितम् । श्येनन्न श्येनपक्षिणमिवेति । 'उतस्य वाजी सहुरिर्ऋतौ वा' इति मन्त्रे सहुरिः सहनशीलः इति च वेदभाष्यम् ।

२३२ । **सुयुरुवृञो युच्** । सवनश्चन्द्रमाः । यवनः । रवणः कोकिलः । वरणः ।

२३३ । **अशे रश च** । अश्नोतेर्युच्स्यात् रशादेशश्च । रशना काञ्ची । जिह्वावाची तु दन्त्यसकारवान् ।

२३४ । **उन्देर्नलोपश्च** । ओदनः ।

२३५ । **गमेर्गश्च** । गमेर्युच्स्याद्गश्चादेशः । गगनम् ।

२३६ । **बहुलमन्यत्रापि** । युच्स्यात् । स्यन्दनः । रोचना ।

२३७ । **रञ्जेः क्युन्** । रजनम् ।

२३८ । **भूसूधूभ्रस्जिभ्यश्छन्दसि** । भुवनम् । सुवनः आदित्यः । धुवनो वह्निः । निधुवनं सुरतम् । भृज्जनमम्बरीषम् ।

२३९ । **कृपृवृजिमन्दिनिधाञः क्युः** । किरणः । पुरणः समुद्रः । वृजनमन्तरिक्षम् । मन्दनं स्तोत्रम् । निधनम् ।

---

**सुयु** ॥ 'सवनन्त्वध्वरे स्नाने सोमनिर्दलनेऽपि च' इति मेदिनी । 'रवणः शब्दने खरे' इति च । 'वरणस्तिक्तशाकेऽपि प्राकारे वरणं वृतौ' इति विश्वः । 'वरुणे वरणः सेतुस्तिक्तशाकः कुमारकः' इत्यमरः । **अशे रश च** ॥ **जिह्वेति** ॥ 'रस आस्वादने' चौरादिकः । ततो नन्द्यादित्वाल्ल्युः । 'ण्यासश्रन्थः' इति युज्वा । 'अथ रसनं स्वादने ध्वनौ । जिह्वायान्तु न पुंसि स्यात् रास्नायां रसना स्त्रियाम्' इति मेदिनी । एषा दन्त्यतालव्यवतोर्द्वयोरर्थव्यवस्था भूरिप्रयोगाभिप्रायेणोक्ता । वस्तुतस्तु द्वावप्यर्थद्वये साधू । तथा हि । 'तालव्या अपि दन्त्याश्च शम्बशम्बलशूकराः । रशनापि च जिह्वायाम्' इति विश्वकोशाज्जिह्वायामुभयम् । 'रसनं निस्वने स्वादे रसना काञ्चिजिह्वयोः' इत्यजयधरणिकोशाभ्यां काञ्च्यामुभयं साधु । 'रसनं स्वदने वाथ रसना काञ्चिजिह्वयोः । रसनञ्चापि रास्नायाम्' इति विश्वप्रकाशाच्चेति दिक् । एवञ्चेह सूत्रे अशू व्याप्तौ 'अश भोजने' इति धातुद्वयमपि ग्राह्यम् । 'रस आस्वादने' 'रस शब्दे' इति धातुभ्यां 'बहुलमन्यत्रापि' इत्यनुपदं वक्ष्यमाणो युच् । तेन सर्वत्रावयवार्थानुगमोऽपि सूपपाद इत्यवधेयम् । **उन्देः** ॥ 'ओदनं न स्त्रियां भक्ते बलायामोदनी स्त्रियाम्' इति मेदिनी । **बहुलम्** ॥ 'स्यन्दनन्तु स्रुतौ नीरे तिनिशे ना रथेऽस्त्रियाम्' इति मेदिनी । 'रोचना रक्तकल्हारे गोपित्तवरयोषितोः । रोचनः कूटशाल्मल्यां पुंसि स्याद्रोचके त्रिषु' इति च । 'चदि आह्लादने' । 'चन्दनं मलयोद्भवे । चन्दनः कपिभेदे स्यान्नदीभेदे तु चन्दनी' इति विश्वः । 'चन्दनी तु नदीभेदे । चन्दनोऽस्त्री मलयजे भद्रकाल्यां नपुंसकम्' इति मेदिनी । भद्रकाली ओषधिविशेषः । 'भद्रकाली तु गन्धोल्यां कात्यायन्यामपि स्त्रियाम्' इति मेदिनी । 'असु क्षेपणे' । 'असनं क्षेपणे क्लीबं पुंसि स्याज्जीवकद्रुमे' इति मेदिनी । 'अत सातत्यगमने' । राजपूर्वः । 'राजातनः क्षीरिकायां प्रियाले किंशुकेऽपि च' इति विश्वमेदिन्यौ । एवमन्येऽपि द्रष्टव्याः । **रञ्जेः क्युन्** ॥ बाहुलकात्कृपेरपि । लत्वाभावश्च । कृपणः । **भूसू** ॥ बहुलवचनाद्भाषायामपि । 'भुवनं विष्टपेऽपि स्यात्सलिले गगने जने' इति मेदिनी । **कृपृ** ॥ 'निधनं स्यात्कुले नाशे' इति

२४० । **धृषेर्धिष् च संज्ञायाम्** । धिषणो गुरुः । धिषणा धीः ।

२४१ । **वर्तमाने पृषद्बृहन्महज्जगच्छतृवत्** । अतिप्रत्ययान्ताः । 'पृषु सेचने' गुणाभावः । पृषन्ति । बृहत् । महान् । गमेर्जगादेशः । जगत् ।

२४२ । **संश्चत्तृपद्वेहत्** । एते निपात्यन्ते । पृथक्करणं शतृवद्भावनिवृत्त्यर्थम् । सश्चिनोतेः सुट् । इकारलोपः । संश्चत् कुहकः । तृपत् छत्रम् । विपूर्वात् हन्तेष्टिलोपः इत ए च । 'वेहद्गर्भोपघातिनी' ।

२४३ । **छन्दस्यसानच्शुजृभ्याम्** । शवसानः पन्थाः । जरसानः पुरुषः ।

२४४ । **ऋञ्जिवृधिमन्दिसहिभ्यः कित्** । ऋञ्जसानो मेघः । वृधसानः पुरुषः । मन्दसानोऽग्निर्जीवश्च । सहसानो यज्ञो मयूरश्च ।

२४५ । **अर्तेर्गुणः शुट् च** । अर्शसानोऽग्निः ।

२४६ । **सम्यानच्स्तुवः** । संस्तवानो वाग्मी ।

---

मेदिनी । 'निधनङ्कुलनाशयोः' इति हेमचन्द्रः । **धृषेः** ॥ 'धिषणस्त्रिदशाचार्ये धिषणा धियि योषिति' इति मेदिनी । **वर्तमाने** ॥ 'पृषन्मृगे पुमान् बिन्दौ न द्वयोः पृषतोऽपि ना । अनयोश्च त्रिषु श्वेतबिन्दुयुक्तेऽप्युभाविमौ' इति मेदिनी । 'बृहती क्षुद्रवार्ताक्यां कण्टकार्याञ्च वाचि च । वारिधान्यां महत्याञ्च छन्दोवसनभेदयोः' इति विश्वः । शतृवद्भावात् 'उगिदचाम्' इति नुम् । बृहत् विपुलम् । 'महती वल्लकीभेदे राज्ये तु स्यान्नपुंसकम् । तत्त्वभेदे पुमान् श्रेष्ठे वाच्यवत्' इति मेदिनी । महती नारदीया वीणा । 'अवेक्षमाणं महतीं मुहुर्मुहुः' इति माघः । 'जगत्स्याद्विष्टपे क्लीबं वायौ ना जङ्गमे त्रिषु । जगती भुवने क्ष्मायां छन्दोभेदे जनेऽपि च' इति मेदिनी । तत्र वायुवाचिनः पुँल्लिङ्गस्य नुमि जगन्–जगन्तौ–जगन्तः इत्यादि । 'द्युगमिजुहोतीनान्द्वे च' इति व्युत्पादितस्य तु नुमभावात् जगत्–जगतावित्यादि । **सश्चिनोतेरिति** ॥ सुभूतिचन्द्रस्तु सम्पूर्वाच्छ्यतेः संश्चदित्याह । **तृपत् छत्रमिति** ॥ चन्द्रमा इत्यन्ये । 'पिब मध्वस्तृपदिन्द्रा-वृषस्व' इति मन्त्रे तु तृपच्छब्दो यौगिकः । तृप्यन्नित्यर्थः । वेदभाष्ये तु तौदादिकात् तृपतेः शतृप्रत्यये आगमशास्त्रस्यानित्यत्वान्नुमभाव इत्युक्तम् । तत्प्रौढिवादमात्रम् । एतेन 'त्वमस्य ब्राह्मणादातृपत्पिब' इत्यादि मन्त्रान्तरं व्याख्यातम् । गौरित्यनुवृत्तौ 'वेहद्गर्भोपघातिनी' इत्यमरः । **छन्दस्य** ॥ 'शु गतौ, जॄष् वयोहानौ' । एतेन 'प्रमन्महे' इत्यादिमन्त्रद्वयेऽपि शवसानशब्दस्य गन्तृपरतया सौष्ठवे बाहुलकोपष्टम्भेन क्लिष्टव्याख्यानं नातीवादर्तव्यम् । **ऋञ्जिवृधि** ॥ ऋजि भर्जने । इदित्त्वान्नुम् । तत एव नलोपाभावः । एवञ्च अयं मन्दिसही च पूर्वसूत्रे एव पठितुं योग्याः । कित्त्वन्तु वृद्धावेवोपयुज्यते । उत्तरसूत्रेऽपि गुणग्रहणं सुत्यजम्, अर्तेः शुट् च वृधेःकिदित्युक्तौ सर्वसामञ्जस्यात् । **ऋञ्जसानो मेघ इति** ॥ 'ऋञ्जसानः पुरुवार उक्थैः । अस्मिन् मन्दसामा वृषञ्जे वसु' इत्यादिमन्त्राणां भाष्ये तु यौगिकार्थ एव पुरस्कृतः । **अर्तेः** ॥ धातोर्गुणः । प्रत्ययस्य शुडागमः । 'आसाविषदर्शसानाय शरुम्' इति मन्त्रस्य भाष्ये

२४७ । **युधिबुधिदृशिभ्यः किच्च** । युधानः । बुधानः । दृशानो लोकपालकः ।

२४८ । **हुर्छेः सनो लुक् छलोपश्च** । जुहुराणश्चन्द्रमाः ।

२४९ । **श्वितेर्दश्च** । शिश्विदानः पुण्यकर्मा ।

२५० । **तृन्तृचौ शंसिक्षदादिभ्यः संज्ञायां चानिटौ** । शंसेः क्षदादिभ्यश्च क्रमात्तृन्तृचौ स्तः । तौ चानिटौ । शंस्ता स्तोता । शंस्तरौ । शंस्तरः । क्षदिः सौत्रो धातुः शकलीकरणे भक्षणे च । अनुदात्तेत् । 'वृक्ये चक्षदानम्' इति मन्त्रात् । 'उक्षाणं वा वेहतं वा क्षदन्ते' इति ब्राह्मणाच्च । 'क्षत्ता स्यात्सारथौ द्वाःस्थे वैश्यायामपि शूद्रजे' ।

२५१ । **बहुलमन्यत्रापि** । मन् मन्ता । हन् हन्ता । इत्यादि ।

२५२ । **नप्तृनेष्टृत्वष्टृहोतृपोतृभ्रातृजामातृमातृपितृदुहितृ** । न पतन्त्यनेन पितरो नरके इति नप्ता पौत्रो दौहित्रश्च । नयतेः षुग्गुणश्च । नेष्टा । त्विषेरितोऽत्त्वम् । त्वष्टा । होता । पोता ऋत्विग्भेदः । भ्राजतेर्जलोपः भ्राता । जायां माति

---

अशंसानाय शत्रूणां हिंसित्रे इति व्याख्यातम् । **युधिबुधि** ॥ बाहुलकात् कृपेरपि । कृपाणः खड्गः । 'कृपाणेन कथङ्कारं कृपणः सह गण्यते । परेषान्दानसमये यः स्वकोशं विमुञ्चति ।' **हुर्छेः** ॥ 'युयोध्यस्मज्जुहुराणमेनः' इति मन्त्रे जुहुराणङ्कौटिल्यकारि पापं, युयोधि पृथक् कुर्विति भाष्यम् । **श्वितेर्दश्च** ॥ श्विता वर्णे । अस्मात्सनन्तादानच्, सनो लुक्, तकारस्य दकारः । किदित्यनुवृत्तेर्न गुणः । **पुण्यकर्मेति** ॥ स हि उज्ज्वलो भवितुमिच्छति । 'शिश्विदानोऽकृष्णकर्मा' इति विशेष्यनिघ्ने अमरः । अकृष्णं शुक्लं शुद्धमित्यर्थः । इह क्षीरस्वामी प्रकृतसूत्रं विस्मृत्य, श्विदि श्वैत्ये, अस्माल्लिटः कानजिति व्याख्यत् । तत्तुच्छम् । कानचश्छान्दसत्वात् । इदित्त्वेन नलोपानुपपत्तेश्चेति दिक् । कृष्णकर्मेत्यमरे पाठान्तरम् । पापकर्मेत्यर्थः तत्रावयवार्थानुगमबलेन बोध्यः । शुद्धो भवितुमिच्छतीत्युक्तो हि इदानीमशुद्ध इति गम्यते । **तृन्तृचौ** ॥ 'अप्तृन्' इत्यतोऽत्र दीर्घो नेत्युदाहरति । **शंस्तरावित्यादि** ॥ नित्त्वादाद्युदात्तः । तथाच मन्त्रः । 'ग्रावग्राम उत शंस्तासु विप्रः' । आदिशब्दात् 'शासु अनुशिष्टौ' । शास्ति विनयति सत्त्वानि शास्ता बुद्धः, शास्तरौ–शास्तरः । 'शास्ता समन्तभद्रे ना शासके पुनरन्यवत्' इति मेदिनी । प्रपूर्वस्य तु 'अप्तृन्' इति दीर्घः । प्रशास्तारौ–प्रशास्तारः । 'क्षत्ता शूद्राच्च वैश्याजे प्रतीहारे च सारथौ । भुजिष्यातनयेऽपि स्यात् नियुक्तवेधसोः पुमान्' इति मेदिनी । कोशानुसारेणाह । **वैश्यायामिति** ॥ अमरस्तु 'क्षत्रियायाञ्च शूद्रजे' इत्याह । याज्ञवल्क्योऽपि । 'क्षत्त्रिया मागधं वैश्यात् शूद्रात् क्षत्तारमेव च' इति । इह बहुलमन्यत्रापीति प्रपञ्चार्थत्वात् उपेक्षितम् । **नप्तेति** ॥ नञः प्रकृतिभावः । 'पतॢ गतौ' इत्यस्मात् तृच् टिलोपः । 'त्वष्टा पुमान्

जामाता । 'मान पूजायाम्' नलोपः माता । पातेराकारस्येत्त्वम् । पिता । दुहेस्तृच्, इट् गुणाभावश्च । दुहिता ।

२५३ । सुञ्यसेर्ऋन् । स्वसा ।

२५४ । यतेर्वृद्धिश्च । याता । 'भार्यास्तु भ्रातृवर्गस्य यातरः स्युः परस्परम्' ।

२५५ । नञि च नन्देः । न नन्दति ननान्दा । इह वृद्धिर्नानुवर्तते इत्येके । 'ननान्दा तु स्वसा पत्युर्ननन्दा नन्दिनी च सा' इति शब्दार्णवः ।

२५६ । दिवेर्ऋः । देवा । देवरः । 'स्वामिनो देवृदेवरौ' ।

२५७ । नयतेर्डिच्च । ना । नरौ । नरः ।

२५८ । सव्ये स्थश्छन्दसि । 'अम्बाम्ब—' (सू २९१८) इत्यत्र 'स्थास्थिन्स्थृणामुपसंख्यानम्' (वा ४९६१) सव्येष्ठा सारथिः । सव्येष्ठरौ । सव्येष्ठरः ।

२५९ । अर्तिसृधृधम्यम्यश्यवितृभ्योऽनिः । अष्टभ्योऽनिप्रत्ययः स्यात् । अरणिरग्नेर्योनिः । सरणिः । धरणिः । धमनिः । अमनिर्गतिः । अशनिः । अवनिः । तरणिः । बाहुलकाद्रजनिः ।

२६० । आङि शुषेः सनश्छन्दसि । आशुशुक्षणिरग्निर्वातश्च ।

२६१ । कृषेरादेश्च चः । चर्षणिर्जनः ।

देवशिल्पितक्ष्णोरादित्यभित्यपि' इति मेदिनी । जायां मातीत्यन्तर्भावितण्यर्थः । **सुञ्यसेः** ॥ असु क्षेपणे । अस दीप्त्यादिषु । आभ्यां सुञि उपपदे ऋन् । **यतेः** ॥ यती प्रयत्ने । **नञि च नन्देः** ॥ 'उषाप्यूषा ननन्दा च ननान्दा च प्रकीर्तिता' इति द्विरूपेषु विश्वः । **देवेति** ॥ भ्रातर इत्यनुवृत्तौ 'स्वामिनो देवृदेवरौ' इत्यमरः । 'देवे धवे देवरि माधवे च' इति श्रीहर्षः । **नयतेः** ॥ 'स्युः पुमांसः पञ्चजनाः पुरुषाः पूरुषा नरः' इत्यमरः । **सव्ये** ॥ ऋडिच्चेत्यनुवर्तते । **सव्येष्ठेति** ॥ 'तत्पुरुषे कृति' इति सप्तम्या अलुक् । **अर्तिसृ** ॥ धमिः सौत्रः । 'अरणिर्वह्निमन्थे ना द्वयोर्निर्मन्थदारुणि' इति मेदिनी । 'सरणिः श्रेणिवर्त्मनोः' इति दन्त्यादौ रभसः । 'सरणिः पङ्क्तौ मार्गे च' इति मेदिनी । शॄ हिंसायाम् । ततः शरणिरित्येके । 'शरणिः पथि चाऽऽवलौ' इति तालव्यादावजयः । 'इमामग्ने शरणिम्' इति मन्त्रे शरणिं हिंसां व्रतलोपरूपां मीमृषः क्षमस्वेति वेदभाष्यम् । 'धमनी तु शिरा हट्टविलासिन्याश्च योषिति । अशनिः स्त्रीपुंसयोः स्याच्चञ्चलायां पवावपि । तरणिर्द्युमणौ पुंसि कुमारीनौकयोः स्त्रियाम् । रजनी नीलिनीरात्रिहरिद्राजतुकासु च' इति मेदिनी । कुमारी लताविशेषः । 'तरणी रामतरणी कर्णिका कारुकेसरा । सहा कुमारी गन्धाढ्या' इति धन्वन्तरिनिघण्टुः । रञ्जेर्नलोपोऽपि बाहुलकात् । **कृषेरादेश्च चः** ॥ **चर्षणिर्जन इति** ॥ वैदिकनिघण्टौ चर्षणिशब्दस्य मनुष्यनामसु

२६२ । **अदेर्मुट् च** । अद्मनिः अग्निः ।

२६३ । **वृतेश्च** । वर्तनिः । गोवर्धनस्तु चकारान्मुट् वर्त्मनिरित्याह ।

२६४ । **क्षिपेः किच्च** । क्षिपणिरायुधम् ।

२६५ । **अर्चिशुचिहुसृपिछादिछर्दिभ्य इसिः** । अर्चिर्ज्वाला । इदन्तोऽप्ययम् । 'अग्नेर्भ्राजन्ते अर्चयः' । शोचिर्दीप्तिः । हविः सर्पिः । 'इस्मन्–' (सू २९८५) इति ह्रस्वः । छदिः पटलम् । छर्दिर्वमनव्याधिः । इदन्तोऽपि । 'छर्द्यतीसारशूलवान्' ।

२६६ । **बृंहेर्नलोपश्च** । 'बर्हिर्ना कुशशुष्मणोः' ।

२६७ । **द्युतेरिसिन्नादेश्च जः** । ज्योतिः ।

२६८ । **वसौ रुचेः संज्ञायाम्** । वसुरोचिर्यज्ञः ।

२६९ । **भुवः कित्** । भुविः समुद्रः ।

२७० । **सहो धश्च** । सधिरनड्वान् ।

२७१ । **पिबतेस्थुक्** । 'पाथिश्चक्षुःसमुद्रयोः' ।

२७२ । **जनेरुसिः** । जनुर्जननम् ।

२७३ । **मनेर्धश्छन्दसि** । मधुः ।

२७४ । **अर्तिपृवपियजितनिधनितपिभ्यो नित्** । अरुः । परुर्ग्रन्थिः ।

---

पाठात् । 'ओमासश्चर्षणीधृतः । प्रचर्षणिभ्यः' इत्यादिमन्त्राणां भाष्ये तथैव व्याख्यानाच्च । उज्ज्वलदत्तस्तु आदेश्च ध इति पठित्वा धर्षणी बन्धकीति व्याख्यत् । तदयुक्तम्, तथा सति धृषेरित्येव सूत्रयेत्, प्रागल्भ्यरूपावयवार्थानुगमात् । आदेश्च ध इत्यंशस्य त्यागेन लाघवाच्च । **वर्तनिरिति** ॥ कृदिकारादिति पक्षे ङीष् । 'सरणिः पद्धतिः पद्या वर्तन्येकपदीति च' इत्यमरः । **क्षिपणिरायुधमिति** ॥ 'उतस्य वाजी क्षिपणिन्तुरण्यति' इति मन्त्रस्य वेदभाष्ये तु क्षिपणिं क्षेपणमनु तुरण्यति त्वरयति गन्तुमिति व्याख्यातम् । अर्चिरिति सान्तम् । 'तमर्चिषा स्फूर्जयन्' इति मन्त्रः । 'नयनमिव सनिद्रं घूर्णते नैशमर्चिः' इति माघः । 'ज्वालाभासोर्न पुंस्यर्चिः' इति नानार्थे सान्तेष्वमरः । **इदन्तोऽपीति** ॥ णिजन्तादच इरिति भावः । 'अर्चिर्हेतिः शिख स्त्रियाम्' इत्यमरः । 'रोचिः शोचिरुभे क्लीबे' इति च । छाद्यतेऽनया छदिः । छदिः स्त्रियामेवेति लिङ्गानुशासनसूत्रम् । एवञ्च 'पटलं छदिः' इत्यमरग्रन्थे पटलसाहचर्याच्छदिषः क्लीबतां वदन्त उपेक्ष्याः । **बृंहेः** ॥ 'बर्हिः पुंसि हुताशने । न स्त्री कुशे' इति मेदिनी । **द्युतेः** ॥ 'ज्योतिरग्नौ दिनकरे । पुमान्नपुंसके दृष्टौ स्यान्नक्षत्रप्रकाशयोः' इति मेदिनी । **वसौ रुचेः** ॥ बाहुलकात्केवलादपि । 'रोचिः शोचिरुभे क्लीबे' । **अर्तिपृ** ॥ 'व्रणोऽस्त्रियामीर्ममरुः क्लीबे'

77

वपुः। यजुः। तनुः—तनुषी—तनूंषि। धनुरस्त्रियाम्। 'धनुर्वंशविशुद्धोऽपि निर्गुणः किं करिष्यति'। सान्तस्योदन्तस्य वा रूपम्। 'तपुः सूर्याग्निशत्रुषु'।

२७५। **एतेर्णिच्च**। आयुः। आयुषी।

२७६। **चक्षेः शिच्च**। चक्षुः।

२७७। **मुहेः किच्च**। मुहुरव्ययम्।

२७८। **बहुलमन्यत्रापि**। आचक्षुः। परिचक्षुः।

२७९। **कृगृशॄवृञ्चतिभ्यः ष्वरच्**। 'कर्वरो व्याघ्ररक्षसोः'। गर्वरोऽहङ्कारी। शर्वरी रात्रिः। 'बर्बरः प्राकृतो जनः'। चत्वरम्।

२८०। **नौ सदेः**। 'निषद्वरस्तु जम्बालः'। निषद्वरी रात्रिः।

॥ इत्युणादिषु द्वितीयः पादः ॥

## ॥ अथ उणादिषु तृतीयः पादः ॥

२८१। **छित्वरछत्वरधीवरपीवरमीवरचीवरतीवरनीवरगह्वरकट्वरसंयद्वराः**। एकादश ष्वरच्प्रत्ययान्ता निपात्यन्ते। 'छिदिर्' 'छद्' अनयोस्तकारोऽन्तादेशः छिदेर्गुणाभावश्च। छित्वरो धूर्तः। 'छत्वरो गृहकुञ्जयोः'।

---

इत्यमरः। 'ग्रन्थिर्ना पर्वपरुषी' इति च। 'वपुः क्लीबन्तनुः शस्ताकृतावपि' इति मेदिनी। तनुः शरीरम्। 'तनुषे तनुंपऽनङ्गम्' इति सुबन्धुः। 'स्यात्तनुस्तनुषा सार्धं धनुषा च धनुं विदुः' इति द्विरूपेषु विश्वः। 'अथास्त्रियान्धनुश्चापौ' इत्यमरः। 'धनुः प्रियाले ना न स्त्री राशिभेदे शरासने। धनुर्धरे त्रिषु' इति सान्ते मेदिनी। **चक्षेः** ॥ शित्त्वात्सार्वधातुकत्वे ख्याञ् न। चक्षते रूपमनुभवन्त्यनेनेति चक्षुः। **मुहेः** ॥ 'मुहुः पुनःपुनः शश्वत् अभीक्ष्णमसकृत् समाः।' इत्यव्ययेष्वमरः। अस्मात्परं बहुलमन्यत्रापीति सुस्पष्टत्वात्त्यक्तम्। **कृगॄ** ॥ 'नैर्ऋतः कर्वरः क्रव्यात्कर्बुरो यातुरक्षसोः' इति शब्दार्णवः। 'शर्वरी यामिनीस्त्रियोः' इति मेदिनी। 'वर्वरः पामरे केशविन्यासे नीवृदन्तरे। वर्वरः फञ्जिकायान्तु वर्वरा शाखपुष्पयोः' इति विश्वः। 'वर्वरः पामरे केशवल्कले नीवृदन्तरे। फञ्जिकायां पुमान् शाकभेदपुष्पभिदोः स्त्रियाम्' इति मेदिनी। 'चत्वरं स्थण्डिलेऽङ्गणे' इति च। **नौ सदेः** ॥ ष्वरजनुवर्तते। 'सदिरप्रतेः' इति षत्वम्। 'निषद्वरः स्मरे पङ्के निशायान्तु निषद्वरा' इति मेदिनी ॥

॥ इत्युणादिषु द्वितीयः पादः ॥

**छित्वर** ॥ 'छित्वरं छेदनद्रव्ये धूर्ते वैरिणि च त्रिषु' इति मेदिनी। 'डु धाञ्'। अन्त्यस्य ईत्वम्। एवं 'पा पाने' इत्यादीनामित्येके। अन्ये तु 'पीव मीव तीव नीव स्थौल्ये'

धीवरः कैवर्तः। पीवरः स्थूलः। मीवरो हिंसकः। चिनोतेर्दीर्घश्च। चीवरं भिक्षुकप्रावरणम्। तीवरो जातिविशेषः। नीवरः परिव्राट्। गाहतेर्ह्रस्वत्वम्। गह्वरम्। कटे वर्षादौ, कट्वरं व्यञ्जनम्। यमेर्दकारः संयद्वरो नृपः। पदेः सम्पद्वर इत्येके।

२८२। **इण्सिञ्जिदीङुष्यविभ्यो नक्**। 'इनः सूर्ये नृपे पत्यौ' सिनः काणः। जिनः अर्हन्। दीनः। उष्णः। ऊनः।

२८३। **फेनमीनौ**। एतौ निपात्येते। स्फायतेः फेनः। मीनः।

२८४। **कृषेर्वर्णे**। कृष्णः।

२८५। **बन्धेर्ब्रधिबुधी च**। ब्रध्नः। बुध्नः।

२८६। **धापृवस्यज्यतिभ्यो नः**। 'धाना भृष्टयवे स्त्रियः'। पर्णं पत्रम्। पर्णः किंशुकः। 'वस्नो मूल्ये वेतने च'। अजेर्वी। वेनः। अत्नः आदित्यः। बाहुलकाच्छृणोतेः। श्रोणः पङ्गुः।

२८७। **लक्षेरट् च**। लक्षेश्चुरादिण्यन्तान्नः स्यात्तस्याडागमश्च। चान्मुडित्येके। 'लक्षणं लक्ष्मणं नाम्नि चिह्ने च'। लक्षणो लक्ष्मणश्च रामभ्राता। 'लक्षणा हंसयोषायां सारसस्य च लक्ष्मणा'।

---

एभ्यः प्रत्यये 'लोपो व्योः' इति वलोपमाहुः। 'पीवरः कच्छपे स्थूले' इति मेदिनी। 'तीवरो नाम्बुधौ व्याधे' इति च। 'स्यान्नीवरो वणिजके वास्तवेऽपि च दृश्यते' इति मेदिनीविश्वप्रकाशौ। 'कट्वरं कुत्सिते वाच्यलिङ्गं तक्रे नपुंसकम्' इति मेदिनी। बाहुलकादुपपूर्वाज्जुहोतेरुकारलोपः। 'उपह्वरे समीपे स्यादेकान्तेऽपि नपुंसकम्' इति मेदिनी। उपह्वरो रथः इति केचित्। 'तदुप्रयक्षतम्' इति मन्त्रे तु उपह्वरे उपगन्तव्ये समीपे देशे। 'ह्वृ कौटिल्ये'। गतिविशेषवाचिना धातुना गतिमात्रमिह लक्ष्यते। ततोऽधिकरणे घः। कृदुत्तरपदप्रकृतिस्वरत्वमिति भाष्ये व्याख्यातम्। **इण्सिञ्** ॥ 'इनः पत्यौ नृपार्कयोः। जिनोऽर्हति च बुद्धे च पुंसि स्यात् त्रिषु जित्वरे' इति मेदिनी। 'दीना मूषिकयोषायां दुर्गते कातरेऽन्यवत्' इति विश्वः। 'उष्णो ग्रीष्मे पुमान् दक्षाशीतयोरन्यलिङ्गके' इति मेदिनी। **फेनमीनौ** ॥ 'डिण्डीरोऽब्धिकफः फेनः' इत्यमरः। 'मीनो राश्यन्तरे मत्स्ये' इति विश्वः। **कृषेः** ॥ 'कृष्णः सत्यवतीपुत्रः केशवे वायसेऽर्जुने। कृष्णा स्यात् द्रौपदीनीलीकणाद्राक्षासु योषिति। मेचके वाच्यलिङ्गः स्यात् क्लीबे मरिचलोहयोः' इति मेदिनी। ब्रध्नः सूर्यः। 'बुध्नः शिफायां रुद्रे च' इति विश्वः। 'बुध्नो ना मूलरुद्रयोः' इति मेदिनी। **धापृ** ॥ 'धाना भृष्टयवे प्रोक्ता धान्यकेऽभिनवोद्भिदि' इति विश्वः। 'पर्णं पत्रे किंशुके ना' इति मेदिनी। 'वस्नस्त्ववक्रये पुंसि वेतने स्यान्नपुंसकम्' इति च। **वेन इति** ॥ लुण्टाकः प्रजापतिश्च। 'सपूर्व्यो महोनाम्' इति मन्त्रे मनोः पुत्रेऽपि प्रसिद्धः। **लक्षणमित्यादि** ॥ लक्षणलक्ष्मणशब्दौ द्वावपि नाम-

२८८ । **वनेरिच्चोपधायाः** । वेन्ना नदी ।

२८९ । **सिवेष्टेर्यू च** । दीर्घोच्चारणसामर्थ्यान्न गुणः । स्यून आदित्यः । बाहुलकात्केवलो नः । ऊठ् । अन्तरङ्गत्वाद्यण् । गुणः । स्योनः ।

२९० । **कृवृजृसिद्रुपन्यनिस्वपिभ्यो नित्** । कर्णः । वर्णः । 'जर्णश्चन्द्रे च वृक्षे च' । सेना । द्रोणः । पन्नो नीचैर्गतिः । अन्नमोदनः । स्वप्नो निद्रा ।

२९१ । **धेट इच्च** । 'धेनः सिन्धुर्नदी धेना' ।

२९२ । **तृषिशुषिरसिभ्यः कित्** । तृष्णा । शुष्णः सूर्यो वह्निश्च । रस्नं द्रव्यम् ।

२९३ । **सुञो दीर्घश्च** । सूना वधस्थानम् ।

२९४ । **रमेस्त च** । रमयतीति रत्नम् ।

२९५ । **रास्नासास्नास्थूणावीणाः** । रास्ना गन्धद्रव्यम् । सास्ना गोगलकम्बलः । स्थूणा गृहस्तम्भः । वीणा वल्लकी ।

२९६ । **गादाभ्यामिष्णुच्** । गेष्णुर्गायनः । देष्णुर्दाता ।

---

चिह्नयोः क्लीबौ । रामभ्रातरि पुल्लिङ्गो हसयोषायां लक्ष्णा सारसयोषायां लक्ष्मणा इति व्यवस्थेत्यर्थः । 'लक्षणं नाम्नि चिह्ने च सारस्यां लक्ष्मणा क्वचित् । लक्ष्मणा त्वौषधीभेदे सारस्यामपि योषिति । रामभ्रातरि पुंसि स्यात् सश्रीके चाभिधेयवत्' इति मेदिनी । कोशे तु सारस्यामपि निर्मकारः स्वीकृतः । **वेन्नेति** ॥ लघूपधगुणः । **बाहुलकादिति** ॥ एतच्च 'च्छ्वोः शूठ्' इति सूत्रे वृत्तौ 'येन विधिः' इति सूत्रे कैयटग्रन्थे च स्पष्टम् । 'स्योनः किरणसूर्ययोः' इति मेदिनी । **कृवॄ** ॥ 'कर्णः पृथाज्येष्ठसुते सुवर्णाद्रौ श्रुतावपि' इति विश्वमेदिन्यौ । 'वृञ् वरणे' दीर्घपाठे तु 'वॄ वरणे' । 'वर्णो द्विजादिशुक्लादियशोगुणकथासु च । स्तुतौ ना न स्त्रियां भेदे रूपाक्षरविलेखने' इति मेदिनी । विश्वमेदिनीस्थमाह । **जर्ण इति** ॥ 'जर्णो जीर्णद्रुमेन्दुषु' इति हेमचन्द्रः । 'द्रोणोऽस्त्रियामाढके स्यात् आढकादिचतुष्टये । पुमान् कृपीपतौ कृष्णकाके स्त्री नीवृदन्तरे । स्त्रियाङ्काष्ठाम्बुवाहिन्याङ्गवादीनामपीष्यते । अन्नं भक्तं च भुक्ते स्यात् । स्वप्नः स्वापे प्रसुप्तस्य विज्ञाने दर्शने पुमान्' इति मेदिनी । **धेट इच्च** ॥ 'धेना नद्यां नदे पुमान्' इति मेदिनी । 'धेनः समुद्रे नद्याञ्च धेना' इति विश्वः । श्लोको धारेत्यादिषु सप्तपञ्चाशत्संख्याकेषु वाङ्नामसु धेनेति वैदिकनिघण्टौ पठितम् । अत एव 'धेनां जिगाति दाशुषे । इन्द्रं धेनाभिरिह मादयस्व' इत्यादिषु धेना वागिति व्याख्यातं भाष्ये । **तृषिशुषि** ॥ 'ञि तृषा पिपासायाम्' । 'तृष्णा लिप्सापिपासयोः' इति विश्वः । **सुञः** ॥ सूनाऽधोजिह्विकापि च' इति नान्ते अमरः । 'सूनं प्रसवपुष्पयोः । सूना पुत्र्यां वधस्थानगलकाण्डिकयोः स्त्रियाम्' इति मेदिनी । **रमेस्त च** ॥ 'रत्नं स्वजातिभेदेऽपि मणावपि नपुंसकम्' इति मेदिनी ।

२९७ । **कृत्यशूभ्यां क्स्नः** । कृत्स्नम् । अक्ष्णमखण्डम् ।

२९८ । **तिजेर्दीर्घश्च** । तीक्ष्णम् ।

२९९ । **श्लिषेरच्चोपधायाः** । श्लक्ष्णम् ।

३०० । **यजिमनिशुन्धिदसिजनिभ्यो युच्** । यज्युरध्वर्युः । 'मन्युर्दैन्ये क्रतौ क्रुधि' । शुन्ध्युरग्निः । दस्युस्तस्करः । जन्युः शरीरी ।

३०१ । **भुजिमृङ्भ्यां युक्त्युकौ** । भुज्युर्भोजनम् । मृत्युः ।

३०२ । **सर्तेरयुः** । सरयुर्नदी । अयूरिति पाठान्तरम् । सरयूः ।

३०३ । **पानीविषिभ्यः पः** । पाति रक्षत्यस्मादात्मानमिति पापम् । तद्योगात्पापः । नेपः पुरोहितः । बाहुलकाद्गुणाभावे नीपो वृक्षविशेषः । वेष्पः पानीयम् ।

३०४ । **च्युवः किच्च** । च्युपो वक्त्रम् ।

३०५ । **स्तुवो दीर्घश्च** । स्तूपः समुछ्रायः ।

३०६ । **सुशृभ्यां निच्च** । चात्कित् । सूपः । बाहुलकादुत्त्वम् । शूर्पम् ।

३०७ । **कुयुभ्यां च** । कुवन्ति मण्डूका अस्मिन्कूपः । युवन्ति बध्नन्त्यस्मिन्पशुमिति यूपो यज्ञस्तम्भः ।

३०८ । **खष्पशिल्पशष्पबाष्परूपपर्पतल्पाः** । सप्तैते पप्रत्ययान्ता निपात्यन्ते । खनतेर्नकारस्य षत्वम् । 'खष्पौ क्रोधबलात्कारौ' । शीलतेर्ह्रस्वश्च । शिल्पं कौशलम् । 'शसु हिंसायाम्' । निपातनात्षत्वम् । शष्पं बालतृणं प्रतिभाक्षयश्च । बाधतेः षः । 'बाष्पो नेत्रजलोष्मणोः' । बाष्पश्च । रौतेर्दीर्घः । 'रूपं स्वभावे सौन्दर्ये' । पृ । पर्पं गृहं बालतृणं पङ्गुपीठञ्च । 'तल प्रतिष्ठाकरणे' चुरादिणिचो लुक् । 'तल्पं शय्याट्टदारेषु' ।

---

**च्युवः** ॥ 'च्युङ् गतौ' । अनेकार्थत्वादिह भाषणे । च्यवन्ते भाषन्तेऽनेनेति विग्रहः । दशपाद्यान्तु 'चुपः किच्च' इति पठ्यते । 'चुप मन्दायाङ्गतौ' । चोपतीति चुप्पो मन्दगमनकर्ता । **सुशृ** ॥ 'सूपो व्यञ्जनसूदयोः' इति मेदिनी । **शूर्पमिति** ॥ बाहुलकादुत्वं रपरत्वं 'हलि च' इति दीर्घः । 'प्रस्फोटनं शूर्पमस्त्री' इत्यमरः । दशपाद्यान्तु कुसुयुभ्यश्च । 'सुशृभ्यामूङ् च' इति पठित्वा सूपं शूर्पञ्च व्युत्पादितम् । द्विरूपकोशेऽप्युभयन्दर्शितम् । **कुयुभ्याञ्च** ॥ 'कु शब्दे, यु मिश्रणे' आभ्यां पः स च नित्धातोर्दीर्घत्वञ्च । 'कूपकूपकमृन्मानगर्तास्तु गुणवृक्षके' इति मेदिनी । 'शष्पः क्रोधे बलात्कृतौ' इति विश्वः । 'शष्पे बालतृणेऽपि च । पुंसि स्यात्प्रतिभाहानौ' इति मेदिनी । विश्वोक्तिमाह । **बाष्प इति** ॥ 'बाष्पमूष्मणि चाश्रुणि' इति कोशान्तरमभिप्रेत्याह । **बाष्पश्चेति** ॥ 'रूपं स्वभावे सौन्दर्ये नालके पशुशब्दयोः । ग्रन्थवृत्तौ नाटकादौ आकरश्लोकयोरपि' इति विश्वमेदिन्यौ । 'तल्पमट्टे कलत्रे च शयनीये च न द्वयोः' इति मेदिनी ।

३०९ । **स्तनिहृषिपुषिगदिमदिभ्यो णेरित्नुच्** । 'अयामन्त–' (सू २३११) इति णेरयादेशः । स्तनयित्नुः । हर्षयित्नुः । पोषयित्नुः । गदयित्नुः वावदूकः । मदयित्नुः मदिरा ।

३१० । **कृहनिभ्यां क्त्नुः** । कृत्नुः शिल्पी । हत्नुर्व्याधिः शस्त्रञ्च ।

३११ । **गमेः सन्वच्च** । जिगत्नुः ।

३१२ । **दाभाभ्यां नुः** । दानुर्दाता भानुः ।

३१३ । **वचेर्गश्च** । वग्नुः ।

३१४ । **धेट इच्च** । धयति तामिति धेनुः ।

३१५ । **सुवः कित्** । 'सूनुः पुत्रेऽनुजे रवौ' ।

३१६ । **जहातेर्द्वेऽन्तलोपश्च** । जह्नुः ।

३१७ । **स्थो णुः** । 'स्थाणुः कीले स्थिरे हरे' ।

३१८ । **अजिवृरीरिभ्यो निच्च** । अजेर्वी वेणुः । वर्णुर्नददेशभेदयोः । 'रेणुर्द्वयोः स्त्रियां धूलिः' ।

---

अमरोक्तमाह । **तल्पमिति** ॥ **स्तनिहृषि** ॥ स्तनगदी देवशब्दे । चुरादिण्यन्तौ । 'हृष तुष्टौ, पुष पुष्टौ, मदी हर्षग्लेपनयोः ।' घटादिः । 'स्तनयित्नुः पुमान् वारिधरेऽपि स्तनितेऽपि च' इति मेदिनी । 'हर्षयित्नुः सुते हेम्नि पोषयित्नुः पिके द्विजे । स्तनयित्नुः पयोवाहे तद्ध्वनौ मृगरोगयोः' इति विश्वः । 'गदयित्नुः पुमान् कामे जल्पाके कार्मुकेऽपि च' इति विश्वमेदिन्यौ । 'मदयित्नुः कामदेवे पुमान् मद्ये नपुंसकम्' इति मेदिनी । **कृहनिभ्यां त्नुः** ॥ **कृत्नुरिति** ॥ कर्तेत्यर्थः । कित्त्वान्न गुणः । **हत्नुरिति** ॥ अनुदात्तत्यादिना अनुनासिकलोपः । एवमुत्तरत्र गमेरपि । **शस्त्रञ्चेति** ॥ चाद्धन्ता । दशपादीवृत्तौ तु क्नुरिति तकाररहितं पठित्वा कृणुः कर्ता हनुर्वक्त्रैकदेशः । बाहुलकान्नलोपः । गमेस्तु जिगन्नुरित्युदाहृतम् । तत्सर्वं प्रामादिकम् । लक्ष्य-विसंवादात् । तथा च श्रूयते । 'सुरूपकृत्नुमूतये । ज्येष्ठराजं भरेकृत्नुम् अयक्ष्कृत्नुरगृभीतः । मा नो वधाय हत्नवे । मृगं न भीममुपहत्नुमुग्रम् । यो नः सनुत्यः उत वा जिगत्नुः' इत्यादि । अत एव हन्तिधातुं विवृण्वता माधवेन उपहत्नुरित्युदाहृत्य क्त्नोः कित्त्वादनुनासिकलोप इत्युक्तम् । यत्तु तेनैव 'सुरूपकृत्नुम्' इति मन्त्रे विवृण्वता तकारोपजनश्छान्दस इत्युक्तम् । तद्दशपादीवृत्तिमनुसृत्य, न तु वस्तुस्थितिमनुरुध्येति सहृदयैराकलनीयम् । **दाभाभ्यां नुः** ॥ 'दानुर्दातरि वक्रान्ते' इति मेदिनी । 'भानू रश्मिदिवाकरौ' इत्यमरः । **वचेः** ॥ वग्नुर्वक्ता । **धेटः** ॥ 'धेनुस्स्यान्नवसूतिका' इत्यमरः । विश्वोक्तिमाह । **सूनुरिति** ॥ **जहातेः** ॥ 'जह्नुः स्यात्पुंसि राजर्षिभेदे च मधुसूदने' इति मेदिनी । विश्वोक्तिमाह । **स्थाणुरिति** ॥ 'स्थाणुः कीले हरे पुमान् । अस्त्री ध्रुवे' इति मेदिनी । **अजिवृ** ॥ 'वेणुर्नृपान्तरे वंशे' इति विश्वः ।

३१९। **विषेः किच्च**। विष्णुः।

३२०। **कृदाधारार्चिकलिभ्यः कः**। बाहुलकान्न कस्येत्संज्ञा। 'कर्को धवलघोटकः'। दाको दाता। धाकोऽनड्वानाधारश्च। राका पौर्णमासी। अर्कः। कल्कः पापाशये पापे दम्भे विट्किट्टयोरपि'।

३२१। **सृवृभूशुषिमुषिभ्यः कक्**। 'सृक उत्पलवातयोः'। 'वृकः श्वापदकाकयोः'। भूकं छिद्रम्। शुष्कः। मुष्कोऽण्डम्।

३२२। **शुकवल्कोल्काः**। शुभेरन्त्यलोपः। शुकः। 'वल्कं वल्कलमस्त्रियाम्'। 'उष दाहे'। षस्य लः। उल्का।

३२३। **इण्भीकापाशल्यतिमर्चिभ्यः कन्**। 'एके मुख्यान्यकेवलाः'। 'भेको मण्डूकमेषयोः' इति विश्वमेदिन्यौ। काकः। पाकः शिशुः। शल्कं शकलम्। अत्कः पथिकः शरीरावयवश्च। मर्कः शरीरवायुः।

---

'रेणुः स्त्रीपुंसयोर्धूलौ पुंलिङ्गः पर्पटे तु ना' इति मेदिनी। **विषेः किच्च**॥ चकारान्नित्। आद्युदात्तः। 'विष्णुरित्थाप्रविष्णवे शूषम्'। **कृदा**॥ 'कर्कः कर्के तले वह्नौ शुक्लाश्वे दर्पणे घटे' इति विश्वमेदिन्यौ। 'राका नद्यन्तरे कच्छ्वां नवजातरजःस्त्रियाम्। संपूर्णेन्दुतिथावपि' इति मेदिनी। 'राका तु सरिदन्तरे। राका नवरजःकन्या पूर्णेन्दुः पूर्णिमाऽपि च' इति विश्वः। इह दाधारा एषां 'केणः' इति ह्रस्वोऽपि बाहुलकान्नेति बोध्यम्। 'अर्कोऽर्कपर्णे स्फटिके रवौ ताम्रे दिवस्पतौ' इति विश्वमेदिन्यौ। 'कल्कोऽस्त्री घृततैलादिशेषे दम्भे विभीतके। विट्किट्टयोश्च पापे च त्रिषु पापाशये पुनः' इति मेदिनी। बाहुलकात् रमेरपि कः। 'रङ्कः कृपणमन्दयोः' इति मेदिनी। कपिलकादित्वाल्लत्वं टाप्। 'लङ्का रक्षःपुरी शाखाशाकिनीकुलटासु च' इति विश्वमेदिन्यौ। **सृवृ**॥ 'सृका बाणोत्पलवाता' इति हेमचन्द्रः। 'सृकं संशाय पविमिन्द्र तिग्मम्' इति मन्त्रस्य वेदभाष्ये तु सृकं सरणशीलम्। पविं वज्रं संशाय सम्यक्तीक्ष्णीकृत्येति व्याख्यातम्। भूकं छिद्रे च काले च' इति मेदिनी। 'शुको व्याससुते कीरे रावणस्य च मन्त्रिणि। शिरीषपादपे पुंसि ग्रन्थिपर्णे नपुंसकम्। वल्कं वल्कलशल्कयोः' इति च। उल्का ज्वाला विभावसोः' इति भूतिचन्द्रः। **इण्भी**॥ 'एकं सङ्ख्यान्तरे श्रेष्ठे केवलेतरयोस्त्रिषु' इति मेदिनी। 'काकः स्याद्वायसे वृक्षप्रभेदे पीठसर्पिणि। शिरोवक्षालने मानप्रभेदे द्वीपभेदयोः। काका स्यात्काकनासायाङ्काकोलीकाकजङ्घयोः। रक्तिकायां मलव्याश्च काकमाच्यां च योषिति। काकं सुरतबन्धे स्यात् काकानामपि संहतौ' इति विश्वमेदिन्यौ। पाकः परिणतौ शिशौ। केशस्य जरसा शौक्ल्ये स्थाल्यादौ पाचनेऽपि च। शल्कन्तु शकले कल्के' इति मेदिनी। 'शल्कैरग्निमिन्धानः' इति मन्त्रे काष्ठखण्डैरिति व्याख्यातारः। **मर्क इति**॥ मर्चिः सौत्रो धातुरिति बहवः। 'मर्च शब्दे' चौरादिक इति मिदचोन्त्यात्सूत्रे कैयटः। मर्तो मर्तं मर्चयति द्वयेन' इति मन्त्रे मर्चयति विधेयीकरोति भर्त्सयतीति वेदभाष्यम्। न चैवं णिलोपस्य स्थानिवद्भावात्कत्वं न स्यात् इति वाच्यम्। पूर्वत्रासिद्धे

३२४ । **नौ हः** । जहातेः कन्स्यान्नौ । निहाका गोधिका ।

३२५ । **नौ सदेर्डिच्च** । 'निष्कोऽस्त्री हेम्नि तत्पले' ।

३२६ । **स्यमेरीट् च** । स्यमीको वल्मीकः वृक्षभेदश्च । इट् ह्रस्व इति केचित् । स्यमिकः ।

३२७ । **अजियुधिनीभ्यो दीर्घश्च** । 'वीकः स्याद्वातपक्षिणोः' । यूका । धूको वायुः । नीको वृक्षविशेषः ।

३२८ । **ह्रियो रश्च लो वा** । 'ह्रीका ह्लीका त्रपा मता' ।

३२९ । **शकेरुनोन्तोन्त्युनयः** । 'उन' 'उन्त' 'उन्ति' 'उनि' एते चत्वारः स्युः । शकुनः । शकुन्तः । शकुन्तिः । शकुनिः ।

३३० । **भुवो झिच्** । भवन्तिर्वर्तमानकालः । बाहुलकाद्वेश्च । अवन्तिः । वदेर्वदन्तिः । 'किंवदन्ती जनश्रुतिः' ।

३३१ । **कन्युच्क्षिपेश्च** । चाद्भुवः । 'क्षिपण्युर्वसन्तः' इत्युज्ज्वलदत्तः । 'भुवन्युः स्वामिसूर्ययोः' ।

३३२ । **अनुङ् नदेश्च** । चात्क्षिपेः । नदनुर्मेघः । क्षिपणुर्वातः ।

३३३ । **कृवृदारिभ्य उनन्** । 'करुणो वृक्षभेदः स्यात्करुणा च कृपा मता' । वरुणः । दारुणम् ।

---

तदभावात् । बाहुलकात् श्यतेः कन् । 'शाको द्वीपान्तरेऽपि च । शक्तौ द्रुमविशेषे च पुमान् हारीतके स्त्रियाम्' इति मेदिनी । **नौ हः** ॥ 'निहाका गोधिका समे' इत्यमरः । 'शाकं नस्य-निहाकयोः' इति श्रुतिः । 'निष्कमस्त्री साष्टहेमशते दीनारकर्षयोः । वक्षोऽलङ्करणे हेमपात्रे हेमपलेऽपि च' इति मेदिनी । **स्यमेः** ॥ 'स्यमु शब्दे' । 'स्यमीका नीलिकायां स्त्री स्यमीको नाकुवृक्षयोः' इति मेदिनी । **अजियु** ॥ एभ्यः कन् । एषान्दीर्घश्च । तत्सामर्थ्यात् गुणाभावः । **शकेः** ॥ 'शकुन्तिपक्षिशकुनिशकुन्तशकुनद्विजाः' इत्यमरः । 'शकुनस्तु पुमान् पक्षिमात्रे पक्षिविशेषयोः । शुभशंसिनिमित्ते च शकुनं स्यान्नपुंसकम्' इति मेदिनी । 'शकुन्तः कीटभेदे स्याद्भासपक्षिविहङ्गयोः' इति । शकुनिः पुंसि विहगे सौबले करणान्तरे' इति च । बाहुलकात्कमेरपि प्रत्ययादिलोपे कुशब्दादेशः । कुन्तिः । 'इतो मनुष्यजातेः' इति ङीष् । 'कुन्ती पाण्डुप्रियायाञ्च सल्लक्याङ्गुग्गुलुद्रुमे' इति मेदिनी । **कन्युच** ॥ 'क्षिपण्युस्तु पुमान् देहे सुरभौ वाच्यलिङ्गके' इति मेदिनी । 'भुवन्युः स्यात् पुमान् भानौ ज्वलने शशलाञ्छने' इति विश्व-मेदिन्यौ । **कृवृ** ॥ 'करुणस्तु रसे वृक्षे कृपायाङ्करुणा मता' इति विश्वमेदिन्यौ । 'वरुणस्तरुभेदे-ऽप्सु प्रतीचीपतिसूर्ययोः' इति विश्वः । 'दारुणो रसभेदे ना त्रिषु तु स्याद्भयावहे' इति मेदिनी ।

३३४। **त्रो रश्च लो वा**। 'तरुणस्तलुनो युवा'।

३३५। **क्षुधिपिशिमिथिभ्यः कित्**। क्षुधुनो म्लेच्छजातिः। पिशुनः। मिथुनम्।

३३६। **फलेर्गुक्च**। फल्गुनः पार्थः। प्रज्ञाद्यण्। फाल्गुनः।

३३७। **अशेर्लशश्च**। लशुनम्।

३३८। **अर्जेर्णिलुक्च**। अर्जुनः।

३३९। **तृणाख्यायां चित्**। चित्त्वादन्तोदात्तः। अर्जुनं तृणम्।

३४०। **अर्तेश्च**। अरुणः।

३४१। **अजियमिशीङ्भ्यश्च**। 'वयुनं देवमन्दिरम्'। यमुना। शयुनः अजगरः।

३४२। **वृतॄवदिहनिकमिकषिभ्यः सः**। वर्सं तर्सम्। 'तर्सः प्लवसमुद्रयोः' वत्सः। वत्सं वक्षः। हंसः। 'कंसोऽस्त्री पानभाजनम्'। कक्षम् अरण्यम्।

---

**त्रो रश्च** ॥ 'तरुणं कुब्जपुष्पे ना रुचके यूनि च त्रिषु' इति मेदिनी। 'तरुणी तलुनीति च' इति द्विरूपेषु विश्वः। **क्षुधिपिशि** ॥ 'पिशुनङ्कुङ्कुमे स्मृतम्। कपिचक्के च काके ना सूचक-क्रूरयोस्त्रिषु। पृक्कायां पिशुना स्त्री स्यात्' इति मेदिनी। मिथुनं तु द्वयो राशिभेदे स्त्रीपुंसयुग्मके' इति च। **फलेः** ॥ 'फल्गुनस्तु गुडाकेशे नदीजार्जुनभूरुहे। तपस्यसंज्ञमासे तत्पूर्णिमायाञ्च फाल्गुनी' इति मेदिनी। **अणिति** ॥ प्रज्ञादित्वात्पक्षेऽणित्यर्थः। 'फल्गुनः फाल्गुनोऽर्जुने' इति द्विरूपकोशः। **अशेर्लशश्च** ॥ 'अश भोजने'। अस्मादुनन् धातोर्लशादेशश्च। लशुनं महाकन्दः। 'उशना लशुनं वेश्म कश्मलं विश्वमश्ववत्' इति मध्यतालव्येषु विश्वः। लस् चेति पाठस्तु प्रामादिकः। **अर्जेर्णिलुक् च** ॥ अत्र 'णेरनिटि' इति लोपेन सिद्धे णिलुक् चेत्युक्तेः फलश्चिन्त्यम्। 'अर्जुनः ककुभे पार्थे कार्तवीर्यमयूरयोः। मातुरेकसुतेऽपि स्याद्धवले पुनरन्यवत्। नपुंसकन्तृणं नेत्ररोगे चाप्यर्जुना गवि। उषायां बाहुदानद्याङ्कुट्टिन्यामपि च क्वचित्' इति विश्वमेदिन्यौ। **अर्तेश्च** ॥ 'अरुणोऽव्यक्तरागेऽर्के सन्ध्यारागेऽर्कसारथौ। निःशब्दे कपिले कुष्ठभेदे ना गुणिनि त्रिषु। अरुणाऽतिविषा श्यामा मञ्जिष्ठा त्रिवृतासु च' इति मेदिनी। **अजियमि** ॥ 'विश्वानि देव वयुनानि विद्वान्' इति मन्त्रे वयुनानि प्रजनानीति वेदभाष्यम्। वैदिकनिघण्टौ प्रज्ञापर्याये प्रशस्यपर्याये च वयुनशब्दः पठितः। **वृतॄ** ॥ **वर्सन्तर्समिति** ॥ 'ति-तुत्र' इति नेट्। षत्वन्तु न भवति। बाहुलकेन षत्वे कर्तव्ये प्रत्ययसंज्ञाया अप्रवृत्तेः। कक्षशब्दे तु षत्वं भवत्येव। एतच्च सर्वम् 'आदेशप्रत्यययोः' इति सूत्रे भाष्यकैयटपदमञ्जरीषु स्पष्टमेव। उणादिवृत्ति-कृतस्तु सर्वेऽपीह षत्वमुदाजह्रुः। तेषामयमाशयः। अस्तु भाष्यप्रामाण्याद्वर्सन्तर्समिति दन्त्योऽपि साधुः। बाहुलकबललभ्यषत्वाभावस्य पाक्षिकत्वेऽपि बाधकाभावात् पक्षे षत्वमस्तु। वृषितृषि-भ्याङ्घञि ण्यन्तादेरचि घञर्थे कप्रत्यये वा वर्षतर्षशब्दयोर्दुर्वारत्वात्। अज्विधौ भियादीनामुप-सङ्ख्यानं नपुंसके क्तादिनिवृत्त्यर्थम्' इत्यत्र वर्षमित्याकरे उदाहृतत्वाच्चेति। तस्मादिह द्विरूपता

३४३ । प्लुषेरच्चोपधायाः । प्लक्षः ।

३४४ । मनेर्दीर्घश्च । मांसम् ।

३४५ । अशेर्देवने । अक्षः ।

३४६ । स्नुव्रश्चिकृत्यृषिभ्यः कित् । स्नुषा । वृक्षः। कृत्समुदकम् । ऋक्षं नक्षत्रम् ।

३४७ । ऋषेर्जातौ । 'ऋक्षोऽद्रिभेदे भल्लूके शोणके कृतवेधने । ऋक्षमुक्तश्च नक्षत्रे' इति विश्वः ।

३४८ । उन्दिगुधिकुषिभ्यश्च । उत्सः प्रस्रवणम् । गुत्सः स्तबकः । कुक्षो जठरम् ।

३४९ । गृधिपण्योर्दकौ च । गृत्सः कामदेवः । पक्षः ।

३५० । अशेः सरः । अक्षरम् ।

३५१ । वसेश्च । वत्सरः ।

---

फलिता । 'वर्षोऽस्त्री भारतादौ स्याज्जम्बूद्वीपाब्दवृष्टिषु । प्रावृट्काले स्त्रियां भूम्नि' इति मेदिनी । 'तर्षो लिप्सोदन्ययोः' इति च । 'पुत्रादौ तर्णके वर्षे वत्सः क्लीबन्तु वक्षसि' इति त्रिकाण्डशेषः । 'हंसः स्यान्मानसौकसि । निर्लोभनृपविष्ण्वर्कपरमात्मसु मत्सरे । योगभेदे मन्त्रभेदे शरीरमरुदन्तरे । तुरङ्गमप्रभेदे च' इति मेदिनी । 'कंसोऽस्त्री तैजसे द्रव्ये कांस्ये मानेऽसुरे तु ना' इति च । 'कसो दैत्यान्तरे स्मृतः । कांस्ये च कांस्यपात्रे च मानभेदे च कीर्तितः' इति विश्वः । 'कक्षा स्यादन्तरीयस्य पश्चादञ्चलपल्लवे । स्पर्द्धायां ना तु दोर्मूलकच्छवीरुत्तृणेषु च' इति मेदिनी । **प्लुषेः** ॥ 'प्लक्षो जटी गर्दभाण्डद्विपभित्कुञ्जराशने' इति मेदिनी । 'प्लक्षो द्वीपविशेषे स्यात्पर्कटीगर्दभाण्डयोः । पिप्पले द्वारपार्श्वे च गृहस्य परिकीर्तितः' इति विश्वः । **मनेर्दीर्घश्च** ॥ मांसं स्यादामिषे क्लीबं कक्कोलीजटयोः स्त्रियाम्' इति मेदिनी । **अशेः** ॥ 'अथाक्षमिन्द्रिये । ना द्यूताङ्गे कर्षचक्रे व्यवहारे कलिद्रुमे' इत्यमरः । 'अक्षो ज्ञानात्मशकटव्यवहारेषु पाशके । रुद्राक्षेन्द्राक्षयोः सर्पे विभीतकतरावपि । चक्रे कर्षे पुमान् क्लीबन्तुत्थसौवर्चलेन्द्रिये' इति मेदिनी । **स्नुव्रश्चि** ॥ 'ऋक्षः पर्वतभेदे स्याद्भल्लूके शोणके पुमान् । कृतवेधनेऽन्यलिङ्गं नक्षत्रे च नपुंसकम्' इति मेदिनी । **ऋषेर्जातौ** ॥ नियमार्थमिदं सूत्रं ऋषेर्जातावेवेति । तेनान्येभ्यः केवलयौगिकत्वेऽपि प्रत्ययः । **उन्दिगुधि** ॥ 'गुत्सः स्यात्स्तबके स्तम्बे हारभिद्ग्रन्थिपर्णयोः' इति मेदिनी । गुच्छश्च । 'गुत्सो गुच्छो गुलुच्छवत्' इति द्विरूपकोशात् । 'स्याद्गुच्छः स्तबके स्तम्बे हारभेदकलापयोः' इति च वर्गद्वितीयान्तमेदिनीकोशाच्च । गृधेश्चर्त्वेन सिद्धे भष्भावनिवृत्तये दकारविधिः । 'पक्षो मासार्द्धके पार्श्वे ग्रहे साध्यविरोधयोः । केशादेः परतो वृन्दे बले सखिसहाययोः । चुल्लीरन्ध्रे पतत्रे च राजकुञ्जरपार्श्वयोः' इति विश्वमेदिन्यौ । **अशेस्सरः** ॥ **अक्षरमिति** ॥ 'अक्षरं स्यादपवर्गे परमब्रह्मपर्णयोः' इति

३५२ । **सपूर्वाच्चित्** । संवत्सरः ।

३५३ । **कृधूमदिभ्यः कित्** । बाहुलकान्न षत्वम् । 'कृसरः स्यात्तिलौदनम्' । धूसरः । मत्सरः । 'मत्सरा मक्षिका ज्ञेया भम्भराली च सा मता' ।

३५४ । **पते रश्च लः** । पत्सलः पन्थाः ।

३५५ । **तन्यृषिभ्यां क्सरन्** । तसरः सूत्रवेष्टनम् । ऋक्षरः । ऋत्विक् ।

३५६ । **पीयुकणिभ्यां कालन्ह्रस्वः सम्प्रसारणञ्च** । पीयुः सौत्रः । पियालो वृक्षभेदः । कुणालो देशभेदः ।

३५७ । **कठिकुषिभ्यां काकुः** । कठाकुः पक्षी । कुषाकुरग्निः सूर्यश्च ।

३५८ । **सर्तेर्दुक्च** । 'सृदाकुर्वातसरितोः' ।

३५९ । **वृतेर्वृद्धिश्च** । वार्ताकुः । बाहुलकादुकारस्य अत्त्वम् । वार्ताकम् ।

---

हेमचन्द्रः । उज्ज्वलदत्तादयस्तु अशेः सरन्निति पेठुः । तन्न । नित्स्वरापत्तेः । इष्यते तु प्रत्ययस्वरेणाक्षरशब्दस्य मध्योदात्तत्वम् । 'ऋचो अक्षरे परमे व्योमन् ।' 'अक्षेरण निमाति सप्तवाणी' इत्याद्यृङ्मन्त्रेषु 'त्रीणि च शतानि षष्टिश्चाक्षराणि' इति यजुषि च तथैव पाठात् । अत एव द्वितीयाह्निकान्ते । 'अश्नोतेर्वा सरोऽक्षरम्' इति भाष्यकृतोक्तम् । **सपूर्वाच्चित्** ॥ पूर्वेण सहितः सपूर्वः । 'इद्वत्सराय परिवत्सराय संवत्सराय । सम्पूर्वादिति पाठस्तु लक्ष्यविरोधादुपेक्ष्यः । **कृधू** ॥ कृसर इत्यादि हारावलीस्थम् । 'धूसरी किन्नरीभेदे नागरे त्रिषु पाण्डुरे' इति मेदिनी । 'मत्सरा मक्षिकायां स्यान्मात्सर्यक्रोधयोः पुमान् । असह्यपरसम्पत्तौ कृपाणे चाभिधेयवत्' इति । मत्सरोऽन्यशुभद्वेषे तद्वत्कृपणयोः त्रिषु' इति अमरः । 'असह्यपरसम्पत्तौ मात्सर्ये कृपणे क्रुधि' इति विश्वः । वेदे तु योगं पुरस्कृत्य प्रयुज्यते । 'इन्दुमिन्द्राय मत्सरम् । तं सिन्धवो मत्सरमिन्द्रपानम्' इत्यादि । मत्सरं हर्षहेतुमिति तद्भाष्यम् । अमरोक्तिमाह । **तसर इति** ॥ 'अनुदात्तोपदेश' इत्यादिना अनुनासिकलोपः । **ऋक्षरः, ऋत्विगिति** ॥ 'ऋक्षरन्तोयधारायामृक्षरस्त्वृत्विजि स्मृतः' इति मेदिनी । 'अनृक्षरा ऋजवः सन्तु पन्थाः' इति मन्त्रस्य वेदभाष्ये तु ऋक्षरः कण्टक इति व्याख्यातम् । **पीयुकणिभ्याम्** ॥ 'राजादनं प्रियालुः स्यात्' इत्यमरः । 'प्रियालुः स्यात्प्रियालवत्' इति हि द्विरूपकोशः । बाहुलकाद्भञ्जेरपि कालन् । नलोपः । न्यङ्क्वादित्वात्कुत्वम् । भगालं नरमस्तकम् । मत्वर्थे इनिः । 'चण्डीकान्तो भगाली च लेलिहानो वृषध्वजः' इति राजशेखरः । **कठिकुषिभ्याम्** ॥ 'कठ कृच्छ्रजीवने, कुष निष्कर्षे ।' 'कठाकुः कपिवद्धयर्के ना परोत्तापिनि त्रिषु' इति मेदिनी । उज्ज्वलदत्तस्तु कटिकाषिभ्यामिति पठित्वा 'कषशिष' इति दण्डकधातुमुपन्यस्य कषाकुरित्युदाजहार । तत्कोशविरुद्धम् । मेदिनीकोशे उकारप्रक्रमे पाठात् । **सर्तेः** ॥ 'सृदाकुर्नानिले चक्रे ज्वलने प्रतिसूर्यके' इति मेदिनी । **वृतेः** ॥ वार्ताकुरपि वार्ताके वृन्ताकोऽपि च दृश्यते' इति द्विरूपे विश्वः । 'वार्ताकी हिङ्गुली

३६० । **पर्देर्नित्सम्प्रसारणमल्लोपश्च** । 'पृदाकुर्वृश्चिके व्याघ्रे चित्रके च सरीसृपे' ।

३६१ । **सृयुवचिभ्योऽन्युजागूजक्नुचः** । अन्युच्, आगूच्, अक्नुच्, एते क्रमात्स्युः । 'सरण्युर्मेघवातयोः' । यवागूः । 'वचक्नुर्विप्रवाग्मिनोः' ।

३६२ । **आनकः शीङ्भियः** । शयानकोऽजगरः । भयानकः ।

३६३ । **आणको लूधूशिङ्घिधाञ्भ्यः** । लवाणकं दात्रम् । धवाणको वातः । शिङ्घाणकः श्लेष्मा । पृषोदरादित्वात्पक्षे कलोपः । 'शिङ्घाणं नासिकामले' । 'धाणको दीनारभागः' ।

३६४ । **उल्मुकदर्विहोमिनः** । उष दाहे । षस्य लः मुकप्रत्ययश्च । उल्मुकं ज्वलदङ्गारम् । दृणातेर्विः । दर्विः । 'जुहोतेर्मिनिः' । होमी ।

३६५ । **ह्रियः कुग्रश्च लो वा** । ह्लीकुः ह्रीकुः लज्जावान् ।

३६६ । **हसिमृग्रिण्वामिदमिलूपूधुर्विभ्यस्तन्** । दशभ्यस्तन्स्यात् । 'तितुत्र—' (सू ३१६३) इति नेट् । हस्तः । मर्तः । गर्तः । एतः कर्बुरः । वातः । अन्तः । दन्तः । 'लोतः स्यादश्रुचिह्नयोः' । 'पोतो बालवहित्रयोः' । धूर्तः । बाहुलकात्तुसेर्दीर्घश्च । तूस्तं पापं धूलिर्जटा च ।

---

सिंही भण्टाकी दुष्प्रधर्षिणी' इत्यमरः । 'वार्ताकं पित्तलङ्किञ्चिदङ्गारपरिपाचितम्' इति वैद्यकशास्त्रम् । **पर्देः** । **पृदाकुरित्यादि** ॥ 'पृदाकुर्वृश्चिके व्याघ्रे सर्पचित्रकयोः पुमान्' इति मेदिनी । **सृयु** ॥ 'सरण्युस्तु पुमान् वारिवाहे स्यान्मातरिश्वनि' इति मेदिनी । 'सरण्युरस्यसूनुरश्वः' इति मन्त्रस्य भाष्ये तु सरण्युः शीघ्रगामीति व्याख्यातम् । 'यवागूरुष्णिका श्राणा विलेपी तरला च सा' इत्यमरः । 'वचक्नुस्तु पुमान् विप्रे वावदूकेऽभिधेयवत्' इति मेदिनी । ऋषिविशेषेऽप्ययम् । यस्य कन्या वाचक्नवीति प्रसिद्धा । **आनकः** ॥ 'भयानकः स्मृतो व्याघ्रे रसे राहौ भयङ्करे' इति मेदिनी । **शिङ्घाणक इति** ॥ 'शिघि आघ्राणे' । 'शिङ्घाणङ्काचपात्रे स्यात् लोहनासिकयोर्मले' इति विश्वः । 'शिङ्घाणः फेनडिण्डीरो नक्रेरतश्च पिच्छले' इति विक्रमादित्यकोशः । हारावलीस्थमाह । **शिङ्घाणमिति** ॥ **उल्मुकमिति च** ॥ 'दर्विः कम्बिः खजा काच' इत्यमरः । **ह्रियः** ॥ कुक्प्रत्ययेऽयङ्ककारो गुणनिषेधार्थः । **हसिमृ** ॥ 'हस्तः करे करिकरे सप्रकोष्ठे करेऽपि च । ऋक्षे केशात्परो व्राते' इति मेदिनी । मर्तो भूलोकः, तत्र भवो मर्त्यः । दिगादेराकृतिगणत्वाद्यत् । 'गर्तस्त्रिगर्तभेदे स्यादवटे च कुकुन्दरे । एतः कर्बुर आगते । अन्तः स्वरूपे नाशे वा न स्त्री शेषेऽन्तिके त्रिषु । दन्तोऽद्रिकटके कुञ्जे दशने चौषधौ स्त्रियाम्' इति मेदिनी । 'लोतमश्रुणि चोरिते' इति विश्वः । 'ककवत्' इति सूत्रे लोतो मेष इति कैयटः । 'पोतः शिशौ वहित्रे च' इति विश्वमेदिन्यौ ।

३६७। **नञ्याप इट् च**। नापितः।

३६८। **तनिमृङ्भ्यां किच्च**। ततम्। मृतम्।

३६९। **अञ्जिघृसिभ्यः क्तः**। अक्तम्। घृतम्। सितम्।

३७०। **दुतनिभ्यां दीर्घश्च**। दूतः। तातः।

३७१। **जेर्मूट् चोदात्तः**। जीमूतः।

३७२। **लोष्टपलितौ**। लुनातेः क्तः तस्य सुट् धातोर्गुणः। लोष्टम्। पलितम्।

---

**धूर्त इति**॥ 'धुर्वी हिंसायाम्'। 'लोपो व्योः' इति वलोपः। क्ङितीत्यनुवृत्तिपक्षे तु 'राल्लोपः' इति लोपः। 'हलि च' इति दीर्घः। 'धूर्तन्तु खण्डलवणे धुत्तूरे ना शठे त्रिषु' इति मेदिनी। **तनिमृङ्भ्याम्**॥ 'ततं वीणादिकं वाद्यम्' इत्यमरः। 'अथ ततं व्याप्ते विस्तृते च त्रिलिङ्गकम्। क्लीबं वीणादिवाद्ये स्यात् पुल्लिङ्गस्तु समीरणे। मृतन्तु याचिते मृत्यौ क्लीबं मृत्युमति त्रिषु' इति मेदिनी। **अञ्जिघृ**॥ अक्तं परिच्छिन्नम्। 'अक्तपरिमाणस्य वाचकः' इति भाष्यस्य कैयटेन तथा व्याख्यातत्वात्। अत्र 'व्यस्तं प्राप्ते च सङ्कुले' इति विश्वप्रकाशे लिपिभ्रमात् 'अक्तं व्याप्ते च सङ्कुले' इत्युदाहरन्नुज्ज्वलदत्तो भ्रान्तत्वादुपेक्ष्यः। तथा च मेदिन्यां वकारादिप्रक्रमे 'व्यस्तन्तु व्याकुले व्याप्ते' इत्युक्तम्। 'घृतमाज्ये जले क्लीबं प्रदीप्ते त्वभिधेयवत्। सितमवसिते च बद्धे धवले त्रिषु शर्करायां स्त्री' इति मेदिनी। 'ऋ गतौ'। बाहुलकात् क्तः। 'ऋतमुञ्छे शिले जले। सत्ये दीप्ते पूजिते स्यात्' इति मेदिनी। **दुतनिभ्याम्**॥ दूतः प्रेष्यः। गौरादित्वात् ङीष्। दूती। अथ कथं, तेन दूतिविदितं निषेदुषा' इति रघुः। 'दूङ् परितापे' अस्मात् क्तिच्। 'दूत्यान्दूतिरपि स्मृता' इति द्विरूपकोशः। 'तातोऽनुकम्प्ये जनके' इति विश्वमेदिन्यौ। बाहुलकात् शीङोऽपि। शीता लाङ्गलपद्धतिः। रामपत्नी च। 'शीता नभःसरिति लाङ्गलपद्धतौ च शीता दशाननरिपोः सहधर्मिणी च। शीतं स्मृतं हिमगुणे च तदन्विते च शीतोऽलसे च बहुवारतरौ च दृष्टः' इति तालव्यादौ धरणिः। सीता दन्त्यादिरपि। 'सीता लाङ्गलपद्धतिः। वैदेहीस्वर्गगङ्गासु' इति दन्त्यादौ मेदिनीकोशात्। 'सीता लाङ्गलरेखा स्यात् व्योमगङ्गा च जानकी' इति दन्त्यादौ रभसकोशाच्च। अत्र त्यक्तं सूत्रम्। **जेर्मूट् चोदात्तः**॥ 'जि जये'। अतः क्तः, तस्य मूडागमः, स चोदात्तः धातोर्दीर्घश्च। 'जीमूतस्येव भवति'। 'जीमूतोऽद्रौ भूतिकरे देवताडे पयोधरे' इति मेदिनी। 'वेणी गरागरीदेवताळो जीमूत इत्यपि' इत्यमरः। 'जीमूतः स्यात् वृत्तिकरे शक्रेऽद्रौ घोषके घने' इति विश्वः। इदं सूत्रमनार्षमिति पुरुषोत्तमः। अत एव आकरे पृषोदरादिषु जीमूतशब्दः उदाहृतः। **लोष्ट**॥ 'लोष्टानि लोष्टवः पुंसि' इत्यमरः। अत्र पुंसीत्युभयान्वयि। तेन पुंनपुंसकलिङ्गोऽयम्। तथा च स्थानेऽन्तरतमसूत्रे भाष्यम्। लोष्टः क्षिप्तो बाहुवेगङ्गत्वा इत्यादि। अत एव 'लोष्टः पिण्डेऽपि लोष्टुः स्यात्' इति पुंस्काण्डे गोपालितः। 'पलितं

३७३ । **हृश्याभ्यामित-** । हरितश्येतौ वर्णभेदौ ।

३७४ । **रुहे रश्च लो वा** । 'रोहितो मृगमत्स्ययोः' । लोहितं रक्तम् ।

३७५ । **पिशेः किच्च** । पिशितं मांसम् ।

३७६ । **श्रुदक्षिस्पृहिगृहिभ्य आय्यः** । श्रवाय्यो यज्ञपशुः । दक्षाय्यो गरुडो गृध्रश्च । स्पृहयाय्यः । गृहयाय्यो गृहस्वामी ।

३७७ । **दिधिषाय्यः** । दधातेर्द्वित्वमित्वं पुक्च । 'मित्र इव यो दिधिषाय्यः ।'

३७८ । **वृञ एण्यः** । वरेण्यः ।

३७९ । **स्तुवः क्सेय्यश्छन्दसि** । 'स्तुषेय्यं पुरुवर्चसम्' ।

३८० । **राजेरन्यः** । राजन्यो वह्निः ।

३८१ । **शृरम्योश्च** । शरण्यम् । रमण्यम् ।

३८२ । **अर्तेर्निच्च** । अरण्यम् ।

३८३ । **पर्जन्यः** । 'पृषु सेचने' षस्य जः 'पर्जन्यः शक्रमेघयोः' ।

३८४ । **वदेरान्यः** । 'वदान्यस्त्यागिवाग्मिनोः' ।

---

शैलजे तापे केशपाशे च कर्दमे' इति मेदिनी । **हृश्या** ॥ 'हरिता स्त्री च दूर्वायां हरिद्वर्णयुतेऽन्यवत्' इति मेदिनी । **रुहेः** ॥ रोहितं कुङ्कुमे रक्ते ऋजुशक्रशरासने । पुंसि स्यान्मीनमृगयोर्भेदे रोहितकद्रुमे । रोहितं रक्तगोशीर्षकुङ्कुमाजिकुचन्दने । पुमाग्नदान्तरे भौमे वर्णे च त्रिषु तद्वति' इति मेदिनी । **पिशेः** ॥ 'पिशितं मांसं मांस्यां स्त्री' इति मेदिनी । मांस्याजटामांस्याम् । तथा च 'जटा च पिशिता पेशी' इति धन्वन्तरिः । **श्रुदक्षि** ॥ 'उग्रतस्तुचे भवसि श्रवाय्यः' इति मन्त्रे श्रवाय्यो मन्त्रैः श्रवणीयः इति वेदभाष्यम् । 'दक्षाय्यो यो दम आस नित्यः ।' 'विश्वरूपस्य स्पृहयाय्यस्य राजन् ।' **दिधिषाय्य इति** ॥ 'मित्र इव यो दिधिषाय्यः' इत्यादिष्वपि यौगिकार्थ एव भाष्ये पुरस्कृतः । उज्ज्वलदत्तस्तु दधिषाय्य इति सूत्रं पठित्वा दधिपूर्वात्स्यतेराय्यः षत्वञ्च, दधिषाय्यो घृतमिति व्याख्यत् । दशपादीवृत्तिकारस्तु धिषशब्दे अस्य द्वित्वं गुणाभावः अत्वञ्चाभ्यासस्य निपात्यते इत्याह । प्रसादकारादयोऽप्येवमेव प्रतिपन्नाः । तदेतत्सर्वं लक्ष्यविरोधाद्वेदभाष्यविरोधाच्चोपेक्ष्यम् । **स्तुवः** ॥ स्तुषेय्यं स्तोतव्यम् । बहुरूपमिति वेदभाष्यम् । यत्तूज्ज्वलदत्तेन 'स्तुवः केय्यः' इति पठित्वा कित्त्वाद्गुणाभावे उवङादेशे स्तुवेय्यः पुरन्दरः इत्युक्तम् । तन्न । वेदतद्भाष्यादिविरोधात् । तस्मादिह क्सेय्यप्रत्ययं पठन् दशपादीवृत्तिकृदेव ज्यायान् । **पर्जन्यः** ॥ 'पर्जन्यो मेघशब्देऽपि ध्वनदम्बुदशक्रयोः' इति मेदिनी । **वदेः** ॥ अजयकोशस्थमाह । **वदान्य इत्यादि** ॥

३८५ । **आमिनक्षियजिवधिपतिभ्योऽत्रन्** । अमत्रं भाजनम् । नक्षत्रम् । यजत्रः । वधत्रमायुधम् । पतत्रं तनूरुहम् ।

३८६ । **गडेरादेश्च कः** । कडत्रम् । डलयोरेकत्वस्मरणात्कलत्रम् ।

३८७ । **वृञश्चित्** । वरत्रा चर्ममयी रज्जुः ।

३८८ । **सुविदेः कत्रः** । 'सुविदत्रं कुटुम्बकम्' ।

३८९ । **कृतेर्नुम्च** । कृन्तत्रं लाङ्गलम् ।

३९० । **भृमृदृशियजिपर्विपच्यमितमिनमिहर्येभ्योऽतच्** । दशभ्योऽतच्स्यात् । भरतः । मरतो मृत्युः । 'दर्शतः सोमसूर्ययोः' । यजतः ऋत्विक् । पर्वतः । पचतोऽग्निः । अमतो रोगः । तमतस्तृष्णापरः । नमतः प्रह्वः । हर्यतोऽश्वः ।

३९१ । **पृषिरञ्जिभ्यां कित्** । पृषतो मृगो बिन्दुश्च । रजतम् ।

३९२ । **खलतिः** । स्खलतेः सलोपः । अतच्प्रत्ययान्तस्येत्वञ्च । खलतिर्निष्केशशिराः ।

---

**अमि** ॥ 'नक्ष गतौ' । वधिः प्रकृत्यन्तरम् । **नक्षत्रमिति** ॥ 'नभ्राण्नपात्' इति सूत्रे नञः प्रकृतिभाव उक्तः । क्षदेः सौत्रे त्रनि नञ्समासे व्युत्पत्त्यन्तरं तदिति बोध्यम् । यजत्रं अग्निहोत्रमिति प्राञ्चः । वस्तुतस्तु यजत्रो यष्टव्यदेवता । 'सन्तो वायुर्वातेन गच्छतां संयजत्रैरङ्गानि' इति मन्त्रे तथा दर्शनात् । **गडेः** ॥ 'गड सेचने' 'कळत्रं श्रोणिभार्ययोः' इत्यमरः । **वृञ** ॥ चित्त्वादन्तोदात्तः । 'वरत्रायान्दार्वा नह्यमानः ।' **सुविदेः कत्रः** ॥ इह प्रायेण कत्रन्निति नितं पठन्ति । तत्प्रामादिकम् । 'बृहस्पतेः सुविदत्राणि राध्येत्यादौ नित्स्वरादर्शनात् । कृदुत्तरपदप्रकृतिस्वरेण प्रत्ययस्वरस्यैव दर्शनाच्च । 'धन्वचयत्कृन्तत्रञ्च' इति मन्त्रेऽपि तथैव । 'कृन्तत्रङ्कर्तनीयमरण्यम्' इति वेदभाष्यम् । **भृमृदृशियजिपर्विपच्य** ॥ 'भृञ् भरणे' 'मृङ् प्राणत्यागे' 'दृशिर् प्रेक्षणे' । दशपाद्यान्तु 'भृदृशीङ्' इति पठित्वा 'दृङ् आदरे' । ध्रियते दरतः शेते शयतः इत्युदाहृतम् । तन्न । रुशन्तमग्निन्दर्शतं बृहन्तम् । तरणिर्विश्वदर्शतः । दैव्यो दशतो रथः इत्यादिमन्त्रैस्तद्भाष्येण च विरोधात् । 'भरतो नाट्यशास्त्रे मुनौ नटे । रामानुजे च दौष्यन्तौ' इति मेदिनी । **यजतः ऋत्विगिति** ॥ उज्ज्वलदत्ताद्यनुरोधेनोक्तम् । 'त्रिर्नो अश्विना यजत । हिरण्यशम्यं यजतो बृहन्तम्' इत्यादिषु यजतशब्दो यष्टव्यपरतयैव वेदभाष्ये व्याख्यातः । 'पर्वतः पादपे पुंसि शाकमत्स्यप्रभेदयोः । देवमुन्यन्तरे शैले' इति मेदिनी । **हर्यतोऽश्व इति** ॥ एतदपि 'हर्य कान्तौ गतौ च' इति धात्वर्थे वृत्तिकारोक्तिश्चानुसृत्योक्तम् । 'परित्यं हर्यतं हरिम् । आहर्यताय धृष्णवे' इत्यादिमन्त्रेषु हर्यतः सर्वैः स्पृहणीय इति वेदभाष्यम् । **पृषिरञ्जि** ॥ 'पृषन्मृगे पुमान् बिन्दौ न द्वयोः पृषतोऽपि ना' । अनयोश्च त्रिषु श्वेतबिन्दुयुक्तेऽप्युभाविमौ ।

**३९३ । शीङ्शपिरुगमिवञ्चिजीविप्राणिभ्योऽथः ।** सप्तभ्योऽथः स्यात् । शयथोऽजगरः । शपथः । रवथः कोकिलः । गमथः पथिकः पन्थाश्च । वञ्चथो धूर्तः । वन्दीति पाठे कर्मणि कर्तरि वा प्रत्ययः वन्द्यते वन्दते वा वन्दथः स्तोता स्तुत्यश्च । जीवथः आयुष्मान् । प्राणथो बलवान् । बाहुलकाच्छमिदमिभ्याम् । 'शमथस्तु शमः शान्तिर्दान्तिस्तु दमथो दमः' ।

**३९४ । भृञश्चित् ।** भरथो लोकपालः ।

**३९५ । रुदिविदिभ्यां ङित् ।** रोदितीति रुदथः शिशुः । वेत्तीति विदथः ।

**३९६ । उपसर्गे वसेः ।** आवसथो गृहम् । संवसथो ग्रामः ।

**३९७ । अत्यविचमितमिनमिरभिलभिनभितपिपतिपनिपणिमहिभ्योऽसच् ।** त्रयोदशभ्योऽसच्स्यात् । अततीत्यतसो वायुरात्मा च । अवतीत्यवसो राजा भानुश्च । चमन्त्यस्मिंश्चमसः सोमपानपात्रम् । ताम्यत्यस्मिन्निति तमसोऽन्धकारः । नमसोऽनुकूलः । 'रभसो वेगहर्षयोः' । लभसो धनं याचकश्च । नभते नभ्यति वा नभस आकाशः । तपसः पक्षी चन्द्रश्च । पतसः पक्षी । 'पनसः कण्टकिफलः' । पणसः पण्यद्रव्यम् । महसं ज्ञानम् ।

**३९८ । वेञस्तुट् च ।** बाहुलकादात्वाभावः । वेतसः ।

---

रजतन्त्रिषु शुक्ले स्यात् क्लीबं हारे च दुर्व्रणे' इति मेदिनी । **शीङ्शपि ॥** उज्ज्वलदत्तेनात्र पञ्चमो वञ्चिः पठ्यते । अन्यैस्तु वन्दिः । वञ्चथवन्दथयोरन्यतरं वेदादुपलभ्य बहुश्रुतैः पाठो निर्णेयः । **बाहुलकादिति ॥** 'शमथः शान्तिमन्त्रिणोः' इति मेदिनी । 'दमथस्तु पुमान् दण्डे दमे च परिकीर्तितः' इति च । **रुदिविदि ॥** 'विदथो योगिकृतिनोः' इति मेदिनी । अत्रोज्ज्वलदत्तः 'रुविदिभ्याङ्कित्' इति पठित्वा रौतीति रुवथः श्वेत्युदाजहार । दशपादीवृत्तिकारस्तु 'रुदिविदिभ्याङ्कित्' इति पपाठ । किं चोपसर्गे वसेरित्येवंरूपमुत्तरसूत्रन्द्वावपि न पेठतुः । तथा हि । शीङ्शपीति सूत्रानन्तरं सोपसर्गाद्वसेः भृञश्चित् रुदिविदिभ्याङ्कित् । इत्युज्ज्वलदत्तस्य सूत्रपाठः । अन्यस्य तु शीङ्शपीति सूत्रानन्तरम् आङ्विसेः, भृञश्चित्, रुदिविदिभ्याङ्कित्, इति सूत्रपाठः । तदेतत्पाठद्वयं भाष्यादिविरोधादुपेक्षितम् । तथा हि । गाङ्कुटादिसूत्रे के पुनश्चङादयः चङ् अङ् नजिङ्अवङ्नङः इति भाष्यम् । 'रुदिविदिभ्याङ्कित्' इत्यनुवर्तमाने उपसर्गे वसेरित्यथप्रत्यय इति कैयटेन व्याख्यातम् । एवञ्च कुर्वतां भाष्यादिविरोधः स्पष्ट एवेत्यास्तान्तावत् । भाष्यकैयटमतेऽपि ङिदित्यस्यानुवृत्तेः फलञ्चिन्त्यम् । **अत्यविचमि ॥** गौरादित्वात् ङीष् । 'अतसी स्यादुमा क्षुमा' इत्यमरः । 'चमसो यज्ञपात्रस्य भेदेऽस्त्री पिष्टके स्त्रियाम् । पनसः कण्टकिफले कन्दके वानरान्तरे । स्त्रियां रोगप्रभेदे स्यात्' इति

३९९। **वहियुभ्यां णित्**। वाहसोऽजगरः। यावसस्तृणसङ्घातः।

४००। **वयश्च**। वय गतौ। वायसः काकः।

४०१। **दिवः कित्**। दिवसम्—दिवसः।

४०२। **कृशृशलिकलिगर्दिभ्योऽभच्**। करभः। शरभः। शलभः। कलभः। गर्दभः।

४०३। **ऋषिवृषिभ्यां कित्**। ऋषभः। वृषभः।

४०४। **रुषेर्नित्लुष्च**। 'रुष हिंसायाम्'। अस्मादभच् नित्कित्स्यात्, लुषादेशश्च। 'लुषभो मत्तदन्तिनि'।

४०५। **रासिवल्लिभ्याञ्च**। रासभः। वल्लभः।

४०६। **जृविशिभ्यां झच्**। जरन्तो महिषः। वेशन्तः पल्वलम्।

४०७। **रुहिनन्दिजीविप्राणिभ्यः षिदाशिषि**। रोहन्तो वृक्षभेदः। नन्दन्तः पुत्रः। जीवन्त औषधम्। प्राणन्तो वायुः। षित्त्वान्ङीष्। रोहन्ती।

४०८। **तृभूवहिवसिभासिसाधिगडिमण्डिजिनन्दिभ्यश्च**। दशभ्यो झच्स्यात्। स च षित्। तरन्तः समुद्रः। तरन्ती नौका। भवन्तः कालः। वहन्तो वायुः। वसन्तः ऋतुः। भासन्तः सूर्यः। साधन्तो भिक्षुः। गडेर्घटादित्वान्मित्त्वं ह्रस्वः। 'अयामन्त—' (सू २३११) इति णेरयः। गण्डयन्तो जलदः। मण्डयन्तो भूषणम्। जयन्तः शक्रपुत्रः। नन्दयन्तो नन्दकः।

४०९। **हन्तेर्मुट् हि च**। हेमन्तः।

---

मेदिनी। 'वेञस्तुट् च' इति पठित्वा 'वी गत्यादिषु' इति धातुरुदाहृतः। **वहियुभ्याम्** ॥ 'अजगरे शयुर्वाहस इत्युभौ' इत्यमरः। 'वा तु क्लीबे दिवसवासरौ' इति च। **कृशृ** ॥ 'करभो मणिबन्धादिकनिष्ठान्तोष्ट्रतत्सुते'। 'शरभस्तु पशौ' इति मेदिनी। 'समौ पतङ्गशलभौ' इत्यमरः। 'कलभः करिशावकः' इति च। 'गर्दभं श्वेतकुमुदे गर्दभो गन्धभिद्यपि। रासभे गर्दभी क्षुद्रजन्तुरोगप्रभेदयोः' इति मेदिनी। **ऋषिवृषिभ्यां कित्** ॥ 'ऋषभस्त्वौषधान्तरे। स्वरभिद्वृषयोः कर्णरन्ध्रगर्दभपुच्छयोः। उत्तरस्थः स्मृतः श्रेष्ठे स्त्री नराकारयोषिति। शूकशिम्ब्यां शिरालायां विधवायां क्वचिन्मता॥' इति मेदिनी। 'वृषभः श्रेष्ठवृषयोः' इति च। **रासिवल्लिभ्याञ्च** ॥ 'रासृ शब्दे' 'वल्ल संवरणे'। 'वल्लभो दयितेऽध्यक्षे सलक्षणतुरङ्गमे' इति च मेदिनी। **जृविशिभ्यां झच्** ॥ बाहुलकादर्हतेरपि झच्। 'अर्हन्तः क्षपणको जिनः' इति विक्रमादित्यकोशः। **तृभू** ॥ इह नन्दिर्ण्यन्तः। तदाह। **नन्दयन्त इति** ॥ उज्ज्वलदत्तस्तु नन्दन्त इत्युदाहृत्य पूर्वसूत्रेण गतार्थतामाशङ्क्य अनाशीरर्थं नन्दिग्रहणमित्याह। तन्न।

४१० । **भन्देर्नलोपश्च** । भदन्तः प्रव्रजितः ।

४११ । **ऋच्छेररः** । ऋच्छरा वेश्या । बाहुलकाज्जर्जरझर्झरादयः ।

४१२ । **अर्तिकमिभ्रमिचमिदेविवासिभ्यश्चित्** । षड्भ्योऽरश्चित्स्यात् । अररं कपाटम् । कमरः कामुकः । भ्रमरः । चमरः । देवरः । वासरः ।

४१३ । **कुवः क्ररन्** । कुररः पक्षिभेदः ।

४१४ । **अङ्गिमदिमन्दिभ्य आरन्** । अङ्गारः । मदारो वराहः । 'मन्दारः पारिजातकः' ।

४१५ । **गडेः कड च** । कडारः ।

४१६ । **शृङ्गारभृङ्गारौ** । शृभृञ्भ्यामारन्नुम्गुग्ह्रस्वश्च । शृङ्गारो रसः । 'भृङ्गारःकनकालुका' ।

४१७ । **कञ्जिमृजिभ्यां चित्** । कञ्जिः सौत्रः । कञ्जारो मयूरः । मार्जारः ।

४१८ । **कमेः किदुच्चोपधायाः** । चिदित्यनुवृत्तेरन्तोदात्तः । कुमारः ।

४१९ । **तुषारादयश्च** । तुषारः । कासारः । सहार आम्रभेदः ।

---

इहाप्याशिपीत्यस्य स्वयमेवानुवर्तितत्वात् । **बाहुलकादिति** ॥ 'जर्जरं शैवले शक्रध्वजे त्रिषु जरत्तरे । झर्झरः स्यात् कलियुगे वाद्यभेदे नदान्तरे' इति मेदिनी । **अर्तिकमि** ॥ 'अररं छदकपाटयोः । भ्रमरः कामुके भृङ्गे चमरश्चामरे स्त्री तु मञ्जरीमृगभेदयोः' इति च मेदिनी । **वासर इति** ॥ वसेर्ण्यन्तादरः । केचित्तु सूत्रे वाशिभ्य इति तालव्यं पठित्वा 'वाश्ट शब्दे' वाश्यते वाशरः, कोकिल इत्याहुः । **अङ्गिमदि** ॥ 'अङ्गार उल्मुके न स्त्री पुल्लिङ्गस्तु महीसुते' इति मेदिनी । 'मन्दारः स्यात् सुरद्रुमे । पारिभद्रेऽर्कपर्णे च मन्दारो हस्तिधूर्तयोः' इति च । 'मदि स्तुत्यादौ' इत्यस्मात् बाहुलकादारुरपि । पारिभद्रे तु मन्दारुर्मन्दारः पारिजातकः' इति शब्दार्णवः । **गडेः** ॥ 'कडारः कपिले दासे' इति मेदिनी । **शृङ्गारभृङ्गारौ** ॥ 'शृङ्गारः सुरते नाट्ये रसे च गजमण्डने । नपुंसकं लवङ्गेऽपि नागसम्भवचूर्णयोः' इति मेदिनी । 'भृङ्गारी झिल्लिकायां स्यात् कनकालौ पुनः पुमान्' इति च । **कञ्जिमृजिभ्यां** ॥ 'कञ्जारो जठरे सूर्ये विरिञ्चौ चारणे मुनौ' इति विश्वमेदिन्यौ । 'मार्जार आतौ खट्वाङ्गे' इति च । **कमेः** ॥ 'कुमारः स्याच्छुके स्कन्दे युवराजेऽश्ववारके । बालके वरुणद्रौ ना न द्वयोर्जात्यकाञ्चने । कुमारी शैलतनयावनकाल्योर्नदीभिदि । सहापराजिताकन्याजम्बूद्वीपेषु च स्त्रियाम्' इति मेदिनी । विश्वप्रकाशे तु 'कुमारी रामतरणी' इति पाठः । रामतरणी लताविशेषः सहेति प्रसिद्धः । 'तरणी रामतरणी कणिका चारुकेसरा । सहा कुमारी गन्धाढ्या' इति धन्वन्तरिनिघण्टुः । 'जम्बूद्वीपसहाकन्याकुमार्योऽथाश्ववारके । बालके कार्तिकेये च कुमारी भर्तृदारके' इति त्रिकाण्डशेषः । 'तुषारस्तुहिनं हिमम् । कासारः

४२० । **दीङो नुट् च** । दीनारः सुवर्णाभरणम् ।

४२१ । **सर्तेरपः षुक्च** । सर्षपः ।

४२२ । **उषिकुटिदलिकचिखजिभ्यः कपन्** । 'उषपो वह्निसूर्ययोः' । कुटपो मानभाण्डम् । दलपः प्रहरणम् । कचपं शाकपत्रम् । खजपं घृतम् ।

४२३ । **कणेः सम्प्रसारणञ्च** । कुणपम् ।

४२४ । **कपश्चाक्रवर्मणस्य** । स्वरे भेदः ।

४२५ । **विटपपिष्टपविशिपोलपाः** । चत्वारोऽमी कपन्प्रत्ययान्ताः । 'विट शब्दे' । 'विटपः' । विशतेरादेः पः । प्रत्ययस्य तुट् । षत्वम् । पिष्टपं भुवनम् । विशतेः प्रत्ययादेरित्वम् । विशिपं मन्दिरम् । वलतेः सम्प्रसारणम् । 'उलपं कोमलं तृणम्' ।

४२६ । **वृतेस्तिकन्** । वर्त्तिका ।

४२७ । **कृतिभिदिलतिभ्यः कित्** । कृत्तिका । भित्तिका भित्तिः । लत्तिका गोधा ।

४२८ । **इष्यशिभ्यां तकन्** । इष्टका । अष्टका ।

४२९ । **इणस्तशन्तशसुनौ** । एतशो ब्राह्मणः । स एव एतशाः ।

४३० । **वीपतिभ्यां तनन्** । 'वी गत्यादौ' । वेतनम् । पत्तनम् ।

४३१ । **दृदलिभ्यां भः** । दर्भः । 'दल्भः स्याद्दषिचक्रयोः' ।

४३२ । **अर्तिगृभ्यां भन्** । अर्भः । गर्भः ।

४३३ । **इणः कित्** । इभः ।

४३४ । **असिसञ्जिभ्यां क्थिन्** । अस्थि । सक्थि ।

४३५ । **प्लुषिकुषिशुषिभ्यः क्सिः** । प्लुक्षिर्वह्निः । कुक्षिः । शुक्षिर्वातः ।

---

सरसी सरः ।' **कणेः** ॥ 'कुणपः पूतिगन्धे शवेऽपि च' इति मेदिनी । **विटपपिष्टप** ॥ 'विटपो न स्त्रियां स्तम्बशाखाविस्तारपल्लवे । पीठाधिपे च' इति मेदिनी । **आदेः प इति** ॥ एतच्चोज्ज्वलदत्तरीत्योक्तम् । अन्ये तु सूत्रे 'विष्टप' इति दन्त्योष्ठ्यादिमेव पठन्ति । युक्तञ्चैतत् । 'यत्र ब्रध्नस्य विष्टपम्' इत्यादौ तथा दर्शनात् । 'उलपो न स्त्री गुल्मिन्यां ना तृणान्तरे' इति मेदिनी । **लत्तिकेति** ॥ लतिः सौत्रः । **इष्टकेति** ॥ 'इष्टकेषीकामालानाम्' इति निर्देशात् 'प्रत्ययस्थात्' इति नेत्त्वम् । **अर्तिगृ** ॥ 'गर्भो भ्रूणेऽर्भके कुक्षौ सन्धौ पनसकण्टके' इति मेदिनी । **इणः** ॥ 'इभः स्तम्बेरमः पद्मी' इत्यमरः ।

४३६ । **अशेर्नित्** । आक्षि ।

४३७ । **इषेः क्सुः** । इक्षुः ।

४३८ । **अवितॄस्तृतन्त्रिभ्य ईः** । 'अवीर्नारी रजस्वला' । तरीर्नौः । स्तरीर्धूमः । 'तन्त्रीर्वीणादेर्गुणः ।

४३९ । **यापोः किद्द्वे च** । ययीरश्वः । 'पपीः स्यात्सोमसूर्ययोः' ।

४४० । **लक्षेर्मुट् च** । लक्ष्मीः ।

॥ इत्युणादिषु तृतीयः पादः ॥

## ॥ अथ उणादिषु चतुर्थः पादः ॥

४४१ । **वातप्रमीः** । वातशब्द उपपदे माधातोरीप्रत्ययः । स च कित् । वातप्रमीः । अयं स्त्रीपुंसयोः ।

४४२ । **ऋतन्यञ्जिवन्यञ्ज्यर्पिमद्यत्यङ्गिकुयुकृशिभ्यः कत्निज्यतुजलिजिष्ठुजिष्णुजिसन्स्यनिथिनुल्यसासानुकः** । द्वादशभ्यः क्रमात्स्युः। अर्तेः कत्निच् । यण् । 'बद्धमुष्टिः करो रत्निः सोऽरत्निः प्रसृताङ्गुलिः' । तनोतेर्यतुच् । तन्यतुर्वायू रात्रिश्च । अञ्जेरलिच् । अञ्जलिः । वनेरिष्ठुच् । वनिष्ठुः स्थविरान्त्रम् ।

---

**लक्षेर्मुट् च** ॥ 'लक्ष दर्शनाङ्कनयोः।' चुरादिण्यन्तः। अस्मादीप्रत्ययः स्यात्। तस्य मुडागमश्च । णिलोपः । 'लक्ष्मीः सम्पत्तिशोभयोः । ऋद्ध्यौषधौ च पद्मायां वृद्धिनामौषधेऽपि च । फलिन्यां स्त्री' इति मेदिनी ॥

इत्युणादिषु तृतीयः पादः ।

**अयमिति** ॥ 'द्विचतुःषट्पदोरगाः' इत्यमरेणोभयलिङ्गोक्तेः, सुभूतिचन्द्रादिभिरपि वातप्रमीशब्दस्य द्विलिङ्गतोक्तेश्चेति भावः । तत्र 'कृदिकारात्' इति पाक्षिको ङीप् कैश्चिदिष्यते । न हि 'कारग्रहणे केवलग्रहणम्' इति मुनित्रयेण परिभाषितम् । अत एव 'वातप्रमीश्रीलक्ष्मीति पक्षे ङ्यन्ताः सुसाधवः' इति रक्षितः । एतच्च दुर्घटग्रन्थे स्पष्टम् । 'आशीराश्यहिदंष्ट्रायां लक्ष्मीर्लक्ष्मी हरिप्रियाम्' इति द्विरूपकोशः । अत एव 'आशीविषो विषधरः' इति सङ्गच्छते । 'आशीमिव कलामिन्दोः' इति राजशेखरः । 'आशीर्हिताशंसाहिदंष्ट्रयोः' इति सान्ते अमरात् सान्तोऽप्याशीःशब्द इत्यन्यदेतत् । **बद्धेति** ॥ 'मुष्ट्या तु बद्धया । सरत्निः स्यात्' इत्यमरः । सहस्त इत्यर्थः । प्रसङ्गादाह । **अरत्निरिति** ॥ न रत्निः अरत्निः इति नञ्समासः । दशपादीवृत्तौ तु इह सूत्रे अर्तेरत्निचमकितं विधाय अरत्निः साधितः । उज्ज्वलदत्तानुसारेणाह । **वायू रात्रिश्चेति** ॥ इह शब्दो मेघः, अशनिश्चेत्यपि बोध्यम् । 'आविष्कृणोमि तन्यतुर्न वृष्टिम्' इति मन्त्रे तन्यतुर्गर्जितमिति, 'सृजावृष्टिं न तन्यतुः' इति मन्त्रे तन्यतुर्मेघ इति, 'दिवश्चित्रं न तन्यतुः' इति मन्त्रे तन्यतुरशनिरिति वेदभाष्ये

अञ्जेरिष्ठच् । अञ्जिष्ठो भानुः । अर्पयतेरिसन् । अर्पिसोऽग्रमांसम् । मदेः स्यन्, मत्स्यः । अतेरिथिन्, अतिथिः । अङ्गेरुलिः, अङ्गुलिः । कौतेरसः, कवसः । अच इत्येके । कवचम् । यौतेरासः, यवासो दुरालभा । कृशेरानुक्, कृशानुः ।

४४३ । **शॄः करन्** । उत्तरसूत्रे किद्ग्रहणादिह ककारस्य नेत्त्वम् । शर्करा ।

४४४ । **पुषः कित्** । पुष्करम् ।

४४५ । **कलंश्च** । पुष्कलम् ।

४४६ । **गमेरिनिः** । गमिष्यतीति गमी ।

४४७ । **आङि णित्** । आगामी ।

४४८ । **भुवश्च** । भावी ।

४४९ । **प्रे: स्थः** । प्रस्थायी ।

४५० । **परमे कित्** । परमेष्ठी ।

४५१ । **मन्थः** । मन्थतेरिनिः कित्स्यात् । कित्त्वान्नकारलोपः । मन्थाः—मन्थानौ—मन्थानः ।

४५२ । **पतस्थ च** । पन्थाः—पन्थानौ ।

---

व्याख्यातत्वात् । 'अञ्जलिस्तु पुमान् हस्तसम्पुटे कुटवेऽपि च' इति मेदिनी । **स्थविरान्त्र-मिति** ॥ 'वनिष्ठोर्हृदयादधि' इति मन्त्रस्य भाष्ये तथोक्तत्वात् । **अञ्जिष्ठ इति** ॥ केचिद-ञ्जेरिष्णुचमिच्छन्ति । तेषामञ्जिष्णुरित्युदाहरणम् । **मदेरिति** ॥ 'मत्स्यो मीनेऽथ पुंभूम्नि देशे' इति मेदिनी । 'अतिथिः कुशपुत्रे स्यात् पुमानागन्तुके त्रिषु । अङ्गुलिः करशाखायां कर्णिकायाङ्गजस्य च' इति मेदिनी । कवसः सन्नाहः कङ्कटजातिश्च । **अच इति** ॥ 'कवचो दुर्गभाण्डे च सन्नाहे पर्पटेऽपि च' इति मेदिनी । **पुषः** ॥ पुष्यतेः करः स्यात् । स च कित् । 'पुष्करं खेऽम्बुपद्मयोः । तूर्यवक्त्रे खड्गफले हस्तिहस्ताग्रकाण्डयोः । कुष्ठौषधे द्वीपतीर्थ-भेदयोश्च नपुंसकम् । ना रागनागविहगनृपभेदेषु वारुणौ' इति मेदिनी । **कलंश्च** ॥ पुष्यतेः कलन् कित्स्यात् । पुष्कलस्तु पूर्णे श्रेष्ठे' इति हेमचन्द्रः । **मन्था इति** ॥ पथिमथीत्यात्त्वम् । इतोऽत्सर्वनामस्थाने । 'मन्था मन्थनदण्डे च व्रजे वातेऽपि च स्मृतः ।' **पन्था इति** ॥ पथे गतौ अस्मात्पचाद्यचि अकारान्तोऽप्यस्ति । 'वाटः पथश्च मार्गश्च' इति सुभूतिचन्द्रपुरु-षोत्तमौ । 'त्वचि त्वचः किरोऽपि स्यात् किरो प्रोक्तः पथः पथि' इति द्विरूपेषु विश्वः । इह ऋभवो देवाः क्षयन्त्यस्मिन्निति विग्रहे 'अन्येभ्योऽपि दृश्यते' इति डः । 'ऋभुक्षः स्वर्गवज्रयोः' इति विश्वः । ततो मत्वर्थीये इनिः । ऋभुक्षिन्निति नान्तं प्रातिपदिकम् । आत्त्वमत्वं च । ऋभुक्षा इन्द्रः । ऋभुक्षाणौ ऋभुक्षाणः इत्युज्ज्वलदत्तः । दशपाद्यान्तु 'अर्तेर्भुक्षिक्षिनक्' इति सूत्रमुपन्यस्तम् । 'ऋभुक्षणमिन्द्रमाहुव ऊतये' इति मन्त्रस्य वेदभाष्येऽपि तत्सूत्रमुदाहृतम् ।

४५३ । **खजेराकः** । खजाकः पक्षी ।

४५४ । **बलाकादयश्च** । बलाका । शलाका । पताका ।

४५५ । **पिनाकादयश्च** । पातेरित्त्वं नुम् च । 'क्लीबपुंसोः पिनाकः स्याच्छूलशङ्करधन्वनोः' । 'तड आघाते' । तडाकः ।

४५६ । **कषिदूषिभ्यामीकन्** । कषीका पक्षिजातिः । 'दूषीका नेत्रयोर्मलम्' ।

४५७ । **अनिहृषिभ्यां किच्च** । अनीकम् । हृषीकम् ।

४५८ । **चङ्कणः कङ्कणश्च** । 'कण शब्दे' अस्माद्यङ्लुगन्तादीकन् धातोः कङ्कणादेशश्च । 'घण्टिकायां कङ्कणीका सैव प्रतिसरापि च' ।

४५९ । **शॄपॄवॄणां द्वे रुक्चाभ्यासस्य** । शर्शरीको हिंस्रः । पर्परीको दिवाकरः । वर्वरीकः कुटिलकेशः ।

४६० । **पर्फरीकादयश्च** । 'स्फुर स्फुरणे' । अस्मादीकन् धातोः पर्फरादेशः । पर्फरीकं किसलयम् । दर्दरीकं वादित्रम् । झर्झरीकं शरीरम् ।

---

अत्रायं विवेकः । आद्यमन्तेऽन्तोदात्तत्वं न्याय्यम् । अवग्रहाभावो बाहुलकात् । द्वितीये तु अवग्रहाभावो न्याय्यः । अन्तोदात्तस्तु बाहुलकादिति । **खजाक इति** ॥ 'खज मन्थे' **बलाकादयश्च** ॥ 'बलाका बकपङ्क्तिः स्यात् बलाका विसकण्ठिका । बलाका कामुकी प्रोक्ता बलाकश्च बको मतः' इति विश्वशाश्वतौ । 'शलाका शल्यमदनशारिकासल्लकीषु च' इति मेदिनी। 'पताका वैजयन्त्याञ्च सौभाग्ये नाटकाङ्कयोः' इति च । 'पताका वैजयन्त्याञ्च सौभाग्येऽङ्के ध्वजेऽपि च' इति विश्वः । **पिनाकादयश्च** ॥ 'पिनाकोऽस्त्री रुद्रचापे पांसुवर्षत्रिशूलयोः' इति मेदिनी । अमरोक्तिमाह । **क्लीबेति** ॥ किञ्च 'पिष्लृ सञ्चूर्णने' । षकारस्य णत्वं धातोर्युगागमः । 'पिण्याकोऽस्त्री तिलकल्के हिङ्गुबाह्लीकसिल्हके' इति मेदिनी । अमरोक्तिमाह । **दूषीकेति** ॥ किञ्च दूषयतेः 'अच इः' इति इप्रत्यये दूषिः । 'कृदिकारात्' इति ङीष् । दूषी । उभाभ्यामपि स्वार्थे कनि दूषिका ह्रस्वमध्यैव, 'केऽणः' इति ङीषो ह्रस्वादेशात् । 'पिचण्डी दूषिका दूषिः पिचाठश्च दृशो मलम्' इति विक्रमादित्यकोशः । 'दूषिका तूलिकायाञ्च मले स्याल्लोचनस्य च' इति मेदिनी । **अनिहृषिभ्यां** ॥ 'अनीकोऽस्त्री गणे सैन्येऽपि" इति मेदिनी । 'हृषीकं विषयीन्द्रियम्' इत्यमरः । **पर्फरादेश इति** ॥ उज्ज्वलदत्तरीत्योक्तम् । वस्तुतस्तु धातोर्द्वित्वम् । उकारस्याकारः सलोपः । 'रुक् चाभ्यासस्य' इति दशपाद्युक्तमेव न्याय्यम् । चरेर्नुम् चेत्युत्तरग्रन्थानुरोधेन द्वे रुक्चेत्यादेरनुवृत्तेर्न्याय्यत्वात् । **किसलयमिति** ॥ 'नैतौशेव तुर्फरीपर्फरीका' इति मन्त्रस्य वेदभाष्ये तु 'ञि फला विशरणे, पॄ पालनपूरणयोः, पर्व पूरणे' एषामन्यतमस्य निपातनमिदमाश्रित्य शत्रूणां विदारयितारः स्तोतॄणां पालका

तिन्तिडीको वृक्षभेदः । 'चरेर्नुम् च' (गण १९९) । चञ्चरीको भ्रमरः । मर्मरीको हीनजनः । कर्करीका गलन्तिका । पुणतेः, पुण्डरीकं वादित्रम् । पुण्डरीको व्याघ्रोऽग्निर्दिग्गजश्च ।

४६१ । **ईषेः किद्ध्रस्वश्च** । इषीका शलाका ।

४६२ । **ऋजेश्च** । ऋजीक उपहतः ।

४६३ । **सर्तेर्नुम् च** । सृणीका लाला ।

४६४ । **मृडः कीककङ्कणौ** । मृडीको मृगः । मृडङ्कणः शिशुः ।

४६५ । **अलीकादयश्च** । कीकन्नन्ता निपात्यन्ते । 'अल भूषणादौ' । अलीकं मिथ्या । विपूर्वाद्व्यलीकं विप्रियं खेदश्च । 'वलीकं पटलप्रान्ते' इत्यादि ।

४६६ । **कॄतॄभ्यामीषन्** । करीषोऽस्त्री शुष्कगोमये । तरीषः तरिता ।

४६७ । **शॄपॄभ्यां किच्च** । शिरीषः । पुरीषम् ।

४६८ । **अर्जेऋज च** । ऋजीषं पिष्टपचनम् ।

---

विशिष्टार्थस्य पूरयितारो चेति व्याख्यातम् । **तिन्तिडीक इति** ॥ तिमेर्मकारस्य डकारः । अभ्यासस्य नुक् च । 'तिन्तिडी चिञ्चाम्लिका' इत्यमरे तु शब्दान्तरम् । तथा च 'तिन्तिडी त्वम्लिका चिञ्चा तिन्तिडीका कपिप्रिया' इति वाचस्पतिः । 'अम्लीका चाम्लिका चिञ्चा तित्तिडीका च तिन्तिडी' इति चन्द्रः । 'अम्लिका चुक्रिका चुक्रा साम्रा शुक्लाऽथ शुक्लिका । अम्लिका चिञ्चिका चिञ्चा तित्तिडीका च तित्तिडा' इति धन्वन्तरिनिघण्टुः । यत्तु उज्ज्वलदत्तेनोक्तम् 'उपदंशस्तृतीयायाम्' इति सूत्रे तित्तिडोपदंशं भुङ्क्ते इति भाष्यप्रयोगात्साधुतेति, तदुपेक्ष्यम् । 'उपदंशः' इति सूत्रस्य भाष्यकारैरस्पृष्टत्वात् । तदुदाहृतप्रयोगस्य भाष्ये कुत्राप्यभावाच्च । 'भ्रमरश्चञ्चरीकः स्याद्रोलम्बो मधुसूदनः । इन्दिन्दिरः पुष्पकीटो मधुद्रो मधुकेशटः' इति त्रिकाण्डशेषः । 'कर्कर्यालुर्गलन्तिका' इत्यमरः । 'पुण्डरीकं सिताम्भोजे सितच्छत्रे च भेषजे । पुंसि व्याघ्रे च दिङ्नागे कोशकारान्तरेऽपि च' इति मेदिनी । **ईषेः** ॥ 'ईषीका स्यादिशीकापि वानायुजवनायुजा' इति द्विरूपकोशः । **सर्तेः** ॥ 'सृणीका स्यन्दिनी लाला' इत्यमरः । **मृडः कीक** ॥ कित्त्वादन्तोदात्तः । कीकनित्युज्ज्वलदत्तादिपाठस्तु प्रामादिकः । 'मृलीकेऽस्य सुमतौ स्याम । मृलीकावप्रियव्रजान्' इत्यादिषु चित्स्वरस्यैव दर्शनात् । **अलीकादयश्च** ॥ 'अलीकमप्रियेऽपि स्यात् दिव्यसत्ये नपुंसकम्' इति मेदिनी । 'अलीकमप्रिये भाले वितथे' इति हेमचन्द्रः । तथा च प्रयुज्यते । "ते दृष्टिमात्रपतिता अपि कस्य नात्र क्षोभाय पक्ष्मलदृशामलकाः खलाश्च । नीचाः सदैव सविलासमलीकमग्ना ये कालतां कुटिलताश्च न संत्यजन्ति" इति । 'व्यलीकमप्रियाकार्यवैलक्ष्येष्वपि पीठके । ना नागरे' इति

४६९ । **अम्बरीषः** । अयं निपात्यते । 'अबि शब्दे' । 'अम्बरीषः पुमान्भ्राष्ट्रम्' । अमरस्तु 'क्लीबेऽम्बरीषं भ्राष्ट्रो ना' ।

४७० । **कॄशॄपॄकटिपटिशौटिभ्य ईरन्** । करीरो वंशाङ्कुरः । शरीरम् । परीरं फलम् । कटीरः कन्दरो जघनप्रदेशश्च । पटीरश्चन्दनः कण्टकः कामश्च । 'शौटीरस्त्यागिवीरयोः' । ब्राह्मणादित्वात् ष्यञ् । शौटीर्यम् ।

४७१ । **वशेः कित्** । उशीरम् ।

४७२ । **कशेर्मुट् च** । कश्मीरो देशः ।

४७३ । **कृञ उच्च** । कुरीरं मैथुनम् ।

४७४ । **घसेः किच्च** । क्षीरम् ।

४७५ । **गभीरगम्भीरौ** । गमेर्भः । पक्षे नुम् च ।

४७६ । **विषा विहा** । स्यतेर्जहातेश्च विपूर्वाभ्यामाप्रत्ययः । विषा बुद्धिः, विहा स्वर्गः, अव्यये इमे ।

४७७ । **पच एलिमच्** । 'पचेलिमो वह्निरव्योः' ।

४७८ । **शीङो धुक्लक्वलञ्वालनः** । चत्वारः प्रत्ययाः स्युः । शीधु मद्यम् ।

---

मेदिनी । 'वलीकनीध्रे पटलप्रान्ते' इत्यमरः । वलतेर्मुगागमे वल्मीकम् । 'वामलूरश्च नाकुश्च वल्मीकं पुंनपुंसकम्' इत्यमरः । वहतेर्वृद्धिश्च । वाहीको गौः, वाहश्च । सुप्रपूर्वादिणस्तुट् च । सुप्रतीकः । शाम्यतेः शमीकः ऋजीषम् । एतच्च ऋजीषिणं वृषणं संसतश्रिये । आसत्या यातु मघवान् ऋजीषीत्यादिमन्त्रभाष्ये स्पष्टम् । **अयमिति** ॥ ईषन् प्रत्ययः, अरुट् च तस्यागम इत्यर्थः । बोपालितोक्तिमाह । **अम्बरीष इत्यादि** ॥ 'अम्बरीषं रणे भ्राष्ट्रे क्लीबं पुंसि नृपान्तरे । नरकस्य प्रभेदे च किशोरे भास्करेऽपि च । आम्रातके तु तापे च' इति मेदिनी । **कॄशॄ** ॥ 'वंशाङ्कुरे करीरोऽस्त्री वृक्षभिद्घटयोः पुमान् । करीरा चीरिकायाञ्च दन्तमूले च दन्तिनाम्' इति मेदिनी । 'शरीरं वर्ष्म विग्रहः' इत्यमरः । अर्धर्चादित्वात् शरीरोऽपि । बाहुलकात् । 'हिडि गत्यनादरयोः ।' हिण्डते इतस्ततो गच्छतीति हिण्डीरः । 'हिण्डीरोऽब्धिकफः फेनः' इत्यमरः । 'डिण्डीरोऽपि च हिण्डीरः' इति द्विरूपकोशः । किर्मीरजम्बीरतूणीरादयोऽप्येवं बोध्याः । 'किर्मीरो नागरङ्गे च कर्बुरे राक्षसान्तरे' इति मेदिनी । 'जम्बीरः प्रस्थपुष्पे स्यात्तथा दन्तशठे द्रुमे' इति च । उशीरं वीरणमूलम् । उशीरोऽपि । 'मूलेऽस्योशीरमस्त्रियाम् । अभयं नलदं सेव्यम्' इत्यमरः । **कुरीरमिति** ॥ कपिलकादित्वाल्लत्वे कुलीरः कर्कटकः । **घसेः** ॥ **क्षीरमिति** ॥ उपधालोपः । कत्वं षत्वम् । 'क्षीरं दुग्धे च नीरे च' इति विश्वः । **गमेरिति** ॥ 'निम्नङ्गभीरङ्गम्भीरम्' इत्यमरः । पच एलिमच् । कर्तर्ययं कृत्यप्रत्ययेषु रिदुपसङ्ख्यातः । शेरतेऽनेन शीधुः । मद्यविशेषः । 'मैरेयमासवः शीधुः'

शीलं स्वभावः। शैवलः । शेवालम् । बाहुलकात् वस्य पोऽपि । 'शेवालं शैवलो न स्त्री शेपालो जलनीलिका' ।

४७९ । **मृकणिभ्यामूकोकणौ** । मरूको मृगः काणूकः काकः ।

४८० । **वलेरूकः** । वलूकः पक्षी उत्पलमूलं च ।

४८१ । **उलूकादयश्च** । वलेः संप्रसारणमूकश्च । उलूकाविन्द्रपेचकौ । वावदूको वक्ता । भल्लूकः । 'शमेर्बुक् च' (गण २००) । शम्बूको जलशुक्तिः ।

४८२ । **शलिमण्डिभ्यामूकण्** । शालूकं कन्दविशेषः । मण्डूकः ।

४८३ । **नियो मिः** । नेमिः ।

४८४ । **अर्तेरूच्च** । ऊर्मिः ।

४८५ । **भुवः कित्** । भूमिः ।

४८६ । **अश्नोते रश्च** । रश्मिः किरणो रज्जुश्च ।

४८७ । **दल्मिः** । दल विशरणे । दल्मिरिन्द्रायुधम् ।

---

इत्यमरः । अर्धर्चादिपाठात् क्लीबत्वञ्च । 'पुन्नपुंसकयोर्दारुजीवातुस्थाणुशीधवः' इति त्रिकाण्डशेषः । 'शीलं स्वभावे सद्वृत्ते' इति मेदिनी । 'जलनीली तु शेवालं शैवलः' इत्यमरः । शैवलं पद्मकाष्ठे स्यात् शैवले तु पुमानयम्' इति मेदिनी । शब्दार्णवोक्तिमाह । **शेवालमित्यादि** ॥ **उलूकादयश्च** ॥ 'उलूकः पुंसि काकादाविन्द्रे भारतयोधिनि' इति मेदिनी । वदेर्यङन्तादूकः । 'वाचोयुक्तिपटुर्वाग्मी वावदूकश्च वक्तरि' इत्यमरः । **शमेर्बुक् च** ॥ 'शम्बूको गजकुम्भान्ते घोषे च शूद्रतापसे' इति मेदिनी । बाहुलकादुकप्रत्यये ह्रस्वमध्योऽपि । 'जम्बूकं जम्बुकं प्राहुः शम्बूकमपि शम्बुकम्' इति द्विरूपकोशः । जम्बूकबन्धूकादयोऽप्यत्रैव द्रष्टव्याः । 'जम्बूकः फेरवे नीचे पश्चिमाशापतावपि' इति विश्वमेदिन्यौ । 'बन्धूकं बन्धुजीवे स्यात् बन्धूकः पीतसारके' इति च । **शलिमण्डि** ॥ 'सौगन्धिकन्तु कह्लारम्' इत्याद्युपक्रम्य 'शालूकमेषां कन्दः स्यात्' इत्यमरः । एषां सौगन्धिकादीनां कैरवान्तानां कन्दो मूलमित्यर्थः । **नियो मिः** ॥ 'नेमिर्ना तिनिशे कूपत्रिकाचक्रान्तयोः स्त्रियाम्' इति मेदिनी । बाहुलकादन्यतोऽपि । 'या प्रापणे ।' 'यामिः स्वसृकुलस्त्रियोः' इत्यन्तःस्थादौ रभसः । 'यामिः कुलस्त्रीस्वस्रोः स्त्री' इत्यन्तःस्थादौ मेदिनी । 'जै क्षये ।' 'जामिः स्वसृकुलस्त्रियोः' इति चवर्गतृतीयादौ अजयकोशः । 'चवर्गादिरपि प्रोक्तो यामिः स्वसृकुलस्त्रियोः' इति द्विरूपेषु विश्वः । **अर्तेरूच्च** ॥ उच्चेत्युचितम् । 'ऊर्मिः स्त्रीपुंसयोर्वीच्यां प्रकाशे वेगभङ्गयोः । वस्त्रसङ्कोचरेखायां वेदनापीडयोरपि' इति मेदिनी । भूमिः, 'भूमिर्वसुन्धरायां स्यात् स्थानमात्रेऽपि च स्त्रियाम्' इति मेदिनी । **अश्नोतेः** ॥ 'रश्मिः पुमान् दीधितौ स्यात् पक्ष्मप्रग्रहयोरपि' इति मेदिनी ।

४८८ । **वीज्याज्वरिभ्यो निः** । बाहुलकाण्णत्वम् । वेणिः स्यात्केशविन्यासः प्रवेणी च स्त्रियामुभे । ज्यानिः । जूर्णिः ।

४८९ । **सृवृषिभ्यां कित्** । सृणिरङ्कुशः । 'वृष्णिः क्षत्रियमेषयोः' ।

४९० । **अङ्गेर्नलोपश्च** । अग्निः ।

४९१ । **वहिश्रिश्रुयुद्रुग्लाहात्वरिभ्यो नित्** । वह्निः । श्रेणिः । श्रोणिः । योनिः । द्रोणिः । ग्लानिः । हानिः । तूर्णिः । बाहुलकान्म्लानिः ।

४९२ । **घृणिपृश्निपार्ष्णिचूर्णिभूर्णि** । एते पञ्च निपात्यन्ते । घृणिः किरणः । स्पृशतेः सलोपः । पृश्निरल्पशरीरः । पृषेर्वृद्धिश्च । पार्ष्णिः पादतलम् । चरेरुपधाया उत्वम् । चूर्णिः कपर्दकशतम् । बिभर्तेरुत्वम् । भूर्णिर्धरणी ।

४९३ । **वृदृभ्यां विन्** । वर्विर्घस्मरः । दर्विः ।

४९४ । **जृशृस्तृजागृभ्यः क्विन्** । जीर्विः पशुः । शीर्विर्हिंस्रः । स्तीर्विरध्वर्युः । जागृविर्नृपः ।

४९५ । **दिवो द्वे दीर्घश्चाभ्यासस्य** । 'दीदिविः स्वर्गमोक्षयोः' ।

---

**वीज्या** ॥ अमरोक्तमाह । **वेणिः स्यादित्यादि** ॥ 'वेणी केशस्य बन्धने । नद्यादेरन्तरे देवताडे' इति मेदिनी । 'वेणी गरागरी देवताडो जीमूत इत्यपि' इत्यमरः । 'ज्यानिर्हानौ स्रवन्त्याञ्च' इति विश्वः । जूर्णिः स्त्रीरोगः । **सृवृषि** ॥ 'अङ्कुशोऽस्त्री सृणिः स्त्रियाम्' इत्यमरः । 'सृणिः स्यादङ्कुशे पुमान्' इति कोशान्तरम् । अत एव 'आरक्षमग्नमवमत्य सृणिं शिताग्रम्' इति माघः । 'वृष्णिस्तु यादवे मेषे वृष्णिः पाखण्डचण्डयोः' इति विश्वः । 'ऐन्द्रे वृष्णिं षोडशिनि तृतीयम्' इति श्रुतौ वृष्णिं मेषमित्यर्थः । **अङ्गेः** ॥ 'अग्निर्वैश्वानरेऽपि स्याच्चित्रकाख्यौषधौ पुमान्' इति मेदिनी । **वहिश्रि** ॥ 'श्रेणिः स्त्रीपुंसयोः पङ्क्तौ समाने शिल्पिसंहतौ' इति च । 'कटिः श्रोणिः ककुद्मती' इत्यमरः । 'योनिः स्त्रीपुंसयोश्च स्यादाकरे स्मरमन्दिरे' इति मेदिनी । **घृणिपृश्नि** ॥ 'घृ सेचने' निप्रत्ययो गुणाभावश्च । 'घृणिः पुनः, अंशुज्वालातरङ्गेषु' इति हेमचन्द्रः । 'पृश्निरल्पतनौ' इत्यमरः । 'पार्ष्णिः स्यादुन्मदः स्त्रियाम् । स्त्रियां द्वयोः सैन्यपृष्ठे पादग्रन्थ्यधरेऽपि च' इति मेदिनी । **भूर्णिर्धरणीति** ॥ 'तक्वानभूर्णिः' इति मन्त्रे भाष्ये तु 'भूर्णिर्धारकः पोषको वा' इति व्याख्यातम् । **दिवो द्वे** ॥ 'दीदिविर्धिषणान्नयोः' इति विश्वः । 'दीदिविर्ना धिषणेऽन्ने तदस्त्रियाम्' इति मेदिनी । धिषणो बृहस्पतिः । 'दीदिविर्द्वादशकरश्चक्षा सुरगुरुर्गुरुः' इति त्रिकाण्डशेषः । 'दीदिविर्द्वादशार्चिः स्याज्जीवः प्राक्फल्गुनीसुतः' इति हारावली । 'ओदनोऽस्त्री सदीदिविः' इत्यमरः । अत्र सदीदिविर्दीदिविसहित इति व्याख्यानं न्याय्यम् । स इति छेदे तु अस्त्रियामिति न लभ्यते । ततश्च 'अन्ने तदस्त्रियाम्'

४९६ । **कृविघृष्विछविस्थविकिकीदिवि** । कृविस्तन्तुवायद्रव्यम् । घृष्विर्वराहः । छास्थोर्ह्रस्वत्वं च । छविर्दीप्तिः । स्थविस्तन्तुवायः । दीव्यतेः किकीपूर्वात् । किकीदिविश्चाषः । बाहुलकाद्ध्रस्वदीर्घयोर्विनिमयः । 'चाषेण किकिदीविना' ।

४९७ । **पातेर्डतिः** । पतिः ।

४९८ । **शकेर्ऋतिन्** । शकृत् ।

४९९ । **अमेरतिः** । अमतिः कालः ।

५०० । **वहिवस्यर्तिभ्यश्चित्** । वहतिः पवनः । 'वसतिर्गृहयामिन्योः' । अरतिः क्रोधः ।

५०१ । **अञ्चेः को वा** । अङ्कतिरञ्चतिर्वातः ।

५०२ । **हन्तेरंह च** । हन्तेरतिः स्यादंहादेशश्च धातोः । हन्ति दुरितमनया अंहतिर्दानम् । 'प्रादेशनं निर्वपणमपवर्जनमंहतिः' ।

५०३ । **रमेर्नित्** । 'रमतिः कालकामयोः ।

५०४ । **सूङः क्रिः** । सूरिः ।

---

इति मेदिनीग्रन्थो विरुध्येतेति ध्येयम् । 'गोपामृतस्य दीदिविम्' इति मन्त्रे तु द्योतमानमित्यर्थः । **कृविघृष्वि** ॥ एतेन क्विन्नन्ता निपात्यन्ते । **घृष्विर्वराह इति** ॥ 'उग्रस्य पुनः स्थविरस्य घृष्वेः' इति मन्त्रे तु घृष्वेः कामानां वर्षकस्येत्यर्थः, 'घृषु सेचने' इति धात्वर्थानुगमात् । 'छविः शोभारुचोर्योषित्' इति मेदिनी । 'अथ चाषः किकीदिविः' इत्यमरः । **विनिमय इति** ॥ 'किकिदीविः किकीदिविः' इति द्विरूपकोशः । **पातेः** ॥ 'पतिर्धवे ना त्रिष्वीशे' इति मेदिनी । **शकेः** ॥ 'उच्चारावस्करौ शमलं शकृत् । गूथं पुरीषं वर्चस्कमस्त्री विष्ठाविशौ स्त्रियाम्' इत्यमरः । **अमेरतिः** ॥ 'अथामतिः पुंसि हिमदीधितिकालयोः' इति मेदिनी । 'अमतिश्चामातिः कालः' इति द्विरूपेषु विश्वः । **वहिवसि** ॥ 'वहतिः सचिवे गवि' इति विश्वः । वसतिः स्यात्त्रियां वासो यामिन्याञ्च निकेतने' इति मेदिनी । **अमरोक्तिमाह** । **प्रादेशनमिति** ॥ **रमेः** ॥ 'रमतिर्नार्यके नाके पुंसि स्यात्' इति मेदिनी । वृत्तिकारोक्तं कोशान्तरमाह । **रमतिरित्यादि** ॥ नित्त्वमाद्युदात्तार्थम् । रन्तिरसि–रमतिरसि । **सूङः क्रिः** ॥ 'धीमान् सूरिः कृती कृष्टिर्लब्धवर्णो विचक्षणः' इत्यमरः । दशपाद्यान्तु 'सुञो रिन् दीर्घश्च' इति पाठः । तत्र रिनो नकारो नानुबन्धः । उत्तरसूत्रे प्रत्ययान्तरारम्भात् । अनुबन्धत्वे हि लाघवादिहैव क्रिन्नुच्येत । तथा च सूरी सूरिणौ सूरिण इत्यादि रूपम् । अत एवाभिधानमालायां सूरीति नान्तमुदाहृतमित्यवधेयम् । यत्तु दशपादीवृत्तिकारैर्नित्त्वं स्वीकृत्य सूरिरित्युदाहृतम् । तदेतेन प्रत्युक्तम् । स्वरविरुद्धमपि, 'सदा पश्यन्ति सूरयः'

५०५ । **अदिशदिभूशुभिभ्यः क्रिन् ।** अद्रिः । शद्रिः शर्करा । भूरि प्रचुरम् । शुभ्रिर्ब्रह्मा ।

५०६ । **वङ्क्र्यादयश्च ।** क्रिन्नन्ता निपात्यन्ते । वङ्क्रिर्वाद्यभेदो गृहदारु पार्श्वास्थि च । वप्रिः क्षेत्रम् । 'अंह्रिरङ्घ्रिश्च चरणः' । तदिः सौत्रो धातुः । तन्द्रिर्मोहः । बाहुलकाद्गुणः । भेरिः ।

५०७ । **राशदिभ्यां त्रिप् ।** रात्रिः । शत्रिः कुञ्जरः ।

५०८ । **अदेस्त्रिनिश्च ।** चात्रिप् । अत्री । अत्रिणौ । अत्त्रिणः । अत्रिः । अत्त्री । अत्त्र्यः ।

५०९ । **पतेरत्रिन् ।** पतत्रिः पक्षी ।

५१० । **मृकणिभ्यामीचिः ।** मरीचिः । कणीचिः पल्लवो निनादश्च ।

५११ । **श्वयतेश्चित् ।** श्वयीचिर्व्याधिः ।

५१२ । **वेञो डिच्च ।** वीचिस्तरङ्गः । नञ्समासेऽवीचिर्नरकभेदः ।

५१३ । **ऋहनिभ्यामूषन् ।** अरूषः सूर्यः । हनूषो राक्षसः ।

---

'विसूरयो दधतो विश्वमायुः' इत्यादौ सूरिशब्दस्यान्तोदात्तत्वात् । **अदिशदि ॥** 'अद्रयो द्रुमशैलार्काः' इत्यमरः । 'भूरिर्ना वासुदेवे च हरे च परमेष्ठिनि । नपुंसके सुवर्णे च प्राज्ये स्याद्वाच्यलिङ्गकम्' इति मेदिनी । **वङ्क्रिरिति ॥** 'वकि कौटिल्ये ।' **तन्द्रिरिति ॥** 'कृदिकारात्' इति पक्षे ङीष् । 'तन्द्री निद्राप्रमीलयोः' इति मेदिनी । 'तन्द्री तन्द्रिश्च तन्द्रायाम्' इति द्विरूपकोशः । 'विभज्य नक्तन्दिवमस्ततन्द्रिणा' इति भारविः । **राशदिभ्यां ॥** 'शत्रिर्नाम्भोधरे जिष्णौ' इति मेदिनी । 'शत्रिमग्र उपमाङ्केतुमर्यय' इति मन्त्रस्य वेदभाष्ये तु उपमामुपमानभूतङ्केतुं प्रख्यातं शत्रिम् एतन्नामकं राजर्षिमिति व्याख्यातम् । **अदेस्त्रिनिश्च ॥** अत्त्री भक्षकः । अत्त्रिः ऋषिविशेषः । उज्ज्वलदत्तस्तु अदेस्त्रिन् इति पठित्वा अत्त्रिरित्युदाजहार । तन्न, त्रिपैव सिद्धे प्रत्ययान्तरवैयर्थ्यात् । गोवर्धनस्तु 'अदेस्त्रिन्निच्च' इति पठित्वा निदिति वचनान्नकारस्य नेत्संज्ञा । अत्त्री–अत्त्रिणौ–अत्त्रिणः इत्याह । तदपि न, आद्युदात्तापत्तेः । न चेष्टापत्तिः । 'जहीन्या अत्त्रिणं पणिम् । दूरे वा ये अन्ति वा केचिदत्त्रिणः । अग्ने हंसीत्यत्त्रिणम्' इत्यादावन्तोदात्तस्य निर्विवादत्वात् । दशपादीवृत्तौ तु 'अदेस्त्रिन्निच्च' इति पठित्वा चकारात्त्रिबित्युक्तम् । तदपि न, त्रिनिचश्चित्त्वस्य व्यर्थत्वात् । इकारेणैव नकारपरित्राणे सति प्रत्ययस्वरेणैवेष्टसिद्धेः । अत एव 'वधैर्दुःशंसान्' इति मन्त्रस्य भाष्ये 'अदेस्त्रिनिश्च' इति माधवः । 'न लुमताङ्गस्य' इति सूत्रे कैयटोऽप्येवमाहेति दिक् । **पतत्रिरिति ॥** पक्षिवाचकात्पतत्रशब्दान्मत्वर्थे इनि तु पतत्री पतत्रिणौ इत्यादि । **मृकणिभ्यां ॥** 'मरीचिः कृपणे दीप्तावृषिभेदे च दृश्यते' इति विश्वः । 'मरीचिर्मुनिभेदे ना गभस्तावनपुंसकम्' इति मेदिनी । 'कणीचिः पुष्पितलतागुञ्जयोः शकटेऽस्त्रियाम्' इति च । **वेञः ॥** 'वीचिः स्वल्पे

५१४ । **पुरः कुषन्** । 'पुर अग्रगमने:' पुरुषः । 'अन्येषामपि—' (सू ३५३९) इति दीर्घः । पूरुषः ।

५१५ । **पॄनहिकलिभ्य उषच्** । परुषम् । नहुषः । कलुषम् ।

५१६ । **पीयोरूषन्** । पीय इति सौत्रो धातुः । पीयूषम् । बाहुलकाद्गुणे 'पेयूषोऽभिनवं पयः' ।

५१७ । **मस्जेर्नुम्च** । मञ्जूषा ।

५१८ । **गडेश्च** । गण्डूषः—गण्डूषा ।

५१९ । **अर्तेररुः** । अररुः शत्रुः । अररू । अररवः ।

५२० । **कुटः किच्च** । कुटरुर्वस्त्रगृहम् । कित्त्वप्रयोजनं चिन्त्यम् ।

५२१ । **शकादिभ्योऽटन्** । शकटोऽस्त्रियाम् । ककिर्गत्यर्थः । कङ्कटः संनाहः । देवटः शिल्पी । करट इत्यादि ।

५२२ । **कृकदिकडिकटिभ्योऽम्बच्** । करम्बं व्यामिश्रम् । कदिकडी सौत्रौ । कदम्बो वृक्षभेदः । कडम्बोऽग्रभागः । कटम्बो वादित्रम् ।

५२३ । **कदेर्णित्पक्षिणि** । कादम्बः कलहंसः ।

---

तरङ्गे स्यादवकाशे सुखे द्वयो:' इति विश्वमेदिन्यौ । **पुरः** ॥ 'पुरुषः पुरुषे साङ्ख्यज्ञे च पुन्नागपादपे' इति विश्वमेदिन्यौ । **पॄनहि** ॥ परुषं कर्बुरे रूक्षे निष्ठुरोक्तौ च वाच्यवत्' इति मेदिनी। 'नहुषो राजविशेषे नागभिद्यपि' इति हेमचन्द्रः । चित्स्वरेणान्तोदात्तत्वे प्राप्ते ग्रामादित्वात् वृषादित्वाद्वा आद्युदात्तोऽयम् । 'एतच्च 'देवा अकृण्वन्नहुषस्य विश्वम्' इति मन्त्रस्य भाष्ये स्पष्टम् । 'कलुषं त्वाविलैनसो:' इति विश्वः । **पीयो** ॥ 'पीयूषं सप्तदिवसावधिक्षीरे तथाऽमृते' इति मेदिनी । 'पियूषं' इत्यादिस्त्वमरः । **मस्जेः** ॥ 'पिटकः पेटकः पेटा मञ्जूषा' इत्यमरः । **गडेश्च** ॥ 'गण्डूषो मुखपूर्ताम्भःपुष्करप्रसृतोन्मिते' इति मेदिनी । **अर्तेररुः** ॥ उकारान्तोऽयं प्रत्ययः । न तु सकारान्त इति स्फोरयति । **अररुः इत्यादिना** ॥ युक्तञ्चैतत् । 'कश्चिद्वाविररुं शूरमर्त्यम् । अपाररुमदेवयजनो जहि' इत्यादिमन्त्रेषु तथा दर्शनात् । यत्तु 'मानः शंसो अररुषः' इति मन्त्रस्य भाष्ये सान्तोऽयमिति माधवेनोक्तं तत्प्रौढिवादमात्रं न तु वास्तवम्, पदस्याद्युदात्तत्वानुपपत्तिप्रसङ्गात् । उक्तप्रयोगस्य क्वसन्तेन रातिना नञ्समासे सौष्ठवात् । 'गुरुद्वेषो अररुषे दधन्ति' इत्यत्र स्वयमेव तथा व्याख्यानात् । 'यो नोऽग्ने अररिवाम् अघायुः' इत्यादिमन्त्रान्तरसंवादाच्चेति दिक् । 'क्लीबेऽनः शकटोऽस्त्री स्यात्' इत्यमरः। 'करटो गजगण्डे स्यात्कुसुमे निस्वजीविनि । एकादशाहादिश्राद्धे दुर्दुरूढेऽपि वायसे' इति मेदिनी । **कृकदि** ॥ 'करम्बो मिश्रिते बान्तो भान्तस्तु दधिसक्तुषु' इति विश्वः । 'कदम्बं निकुरुम्बे स्यान्नीपसर्षपयोः पुमान्' इति मेदिनी । 'कलम्बी शाकभेदे स्यात्कदम्बशरयोः पुमान्' इति च । **कदेः** ॥ 'कादम्बः स्यात् पुमान् पक्षिविशेषे सायकेऽपि ना' इति मेदिनी ।

५२४ । **कलिकर्द्योरमः** । कलमः । कर्दमः ।

५२५ । **कुणिपुल्योः किन्दच्** । 'कुण शब्दोपकरणयोः' । कुणिन्दः शब्दः । पुलिन्दो जातिविशेषः ।

५२६ । **कुपेर्वा वश्च** । कुपिन्दकुविन्दौ तन्तुवाये ।

५२७ । **नौ षञ्जेर्घथिन्** । निषङ्गथिरालिङ्गकः ।

५२८ । **उदि ऋतेश्थित्** । उदरथिः समुद्रः ।

५२९ । **सर्तेर्णिच्च** । सारथिः ।

५३० । **खर्जिपिञ्जादिभ्य ऊरोलचौ** । खर्जूरः । कर्पूरः । वल्लूरं शुष्कमांसम् । पिञ्जूलं कुशवर्तिः । 'लङ्गेर्वृद्धिश्च' (गण २०१) । लाङ्गूलम् । कुसूलः । 'तमेर्बुग्वृद्धिश्च' (गण २०२) । ताम्बूलम् । 'शृणातेर्दुग्वृद्धिश्च' (गण २०३) शार्दूलः । 'दुकोः कुक्च' (गण २०४) । दुकूलम् । कुकूलम् ।

---

**कलि** ॥ 'कलमः पुंसि लेखन्यां शालौ पाटच्चरेऽपि च' इति मेदिनी । **कुपेर्वा** ॥ 'कुप क्रोधे ।' अतः किन्दच् । वकारान्तादेशश्च वा । 'तन्तुवायः कुविन्दः स्यात्' इत्यमरः । बाहुलकात् 'अल भूषणादौ ।' अलिन्दः । 'यस्यामलिन्देषु न चक्रुरेव मुग्धाङ्गना गोमयगोमुखानि' इति माघः । प्रज्ञादित्वादणि दीर्घादिरप्ययम् । **निषङ्गथिरिति** ॥ 'चजोः' इति कुत्वम् । "आभुरस्य निषङ्गथिः ।" रथकूबर इत्यर्थः । **सर्तेः** ॥ 'नियन्ता प्राजिता यन्ता सूतः क्षत्ता च सारथिः' इत्यमरः । **खर्जिपिञ्जादिभ्यः** ॥ 'खर्ज मार्जने' एवमादिभ्य ऊरः । 'पिञ्ज हिंसायाम्' । एवमादिभ्य ऊलच् । 'खर्जूरं रूप्यफलयोः खर्जूरः कीटवृक्षयोः' इति मेदिनीहेमचन्द्रौ । 'कृपू सामर्थ्ये ।' बाहुलकाल्लत्वाभावः । 'अथ कर्पूरमस्त्रियाम् । घनसारश्चन्द्रसंज्ञः सिताभ्रो हिमवालुका' इत्यमरः । 'वल्ल संवरणे ।' वल्लूरम् । 'उत्तप्तं शुष्कमांसं स्यात्तद्वल्लूरं त्रिलिङ्गकम्' इत्यमरः । एवं शालूरमण्डूरादयः । 'भेके मण्डूकवर्षाभूशालूरप्लवदर्दुराः' इत्यमरः । 'अथ मण्डूरं 'शिङ्घाणमपि तन्मले' इति च । तन्मले तस्य पूर्वोक्तस्य लोहस्य मले इत्यर्थः । 'लाङ्गूलं पुच्छशेफसोः' इति मेदिनी । **कुसूल इति** ॥ 'कुस श्लेषणे ।' दन्त्यसकारवान् । 'कुसूलश्च कुसीदश्च मध्यदन्त्यमुदाहृतम्' इति विश्वः । ताम्बूलादयोऽप्यत्र । 'तमु ग्लानौ ।' 'ताम्बूली नागवल्ल्यां स्त्री क्रमुके तु नपुंसकम्' इति मेदिनी । 'शॄ हिंसायाम् ।' धातोर्वृद्धिः । दुगागमश्च । 'शार्दूलो राक्षसान्तरे । व्याघ्रे च पशुभेदे च सत्तमे तूत्तरस्थिते' इति मेदिनीविश्वप्रकाशौ । उत्तरस्थितमुत्तरपदम् । राजशार्दूल इति यथा । 'दु गतौ', 'कुङ् शब्दे' अनयोः कुक् च । 'दुकूलं श्लक्ष्णवस्त्रे स्यात्क्षौमे च' इति मेदिनी । 'कुकूलं शङ्कुसङ्कीर्णश्वभ्रे ना तु तुषानले' इति विश्वमेदिन्यौ । 'शिरीषादपि मृद्वङ्गी केयमायतलोचना । अयं क्व

५३१। **कुवश्चट्दीर्घश्च**। कूची चित्रलेखनिका।

५३२। **समीणः**। समीचः समुद्रः। समीची हरिणी।

५३३। **सिवेष्टेरू च**। सूचो दर्भाङ्कुरः। सूची।

५३४। **शमेर्बन्**। शम्बो मुसलम्।

५३५। **उल्बादयश्च**। बन्नन्ता निपात्यन्ते। 'उच समवाये'। चस्य लत्वं गुणाभावश्च। उल्बो गर्भाशयः। शुल्बं ताम्रम्। निम्बः। बिम्बम्।

५३६। **स्थः स्तोऽम्बजबकौ**। तिष्ठतेरम्बच् अबक एतौ स्तः स्तादेशश्च। 'स्तम्बो गुच्छस्तृणादिनः'। स्तबकः पुष्पगुच्छः।

५३७। **शाशपिभ्यां ददनौ**। 'शादो जम्बालशष्पयोः'। शब्दः।

५३८। **अब्दादयश्च**। अवतीत्यब्दः। 'कौतेर्नुम् (च)' (ग २०५)। कुन्दः।

५३९। **वलिमलितनिभ्यः कयन्**। वलयम्। मलयः। तनयः।

५४०। **वृह्णोः षुग्दुकौ च**। वृषय आश्रयः। हृदयम्।

५४१। **मिपीभ्यां रुः**। मेरुः। पेरुः सूर्यः। बाहुलकात्पिबतेरपि। 'संवत्सरवपुः पारुः पेरुर्वासीर्दिनप्रणीः'।

५४२। **जत्र्वादयश्च**। जत्रु। जत्रुणी। अश्रु। अश्रुणी।

---

कुकूलाग्निकर्कशो मदनानलः' इति प्रयोगश्च। **कुवश्चट् दीर्घश्च** ॥ कूचः स्तनः। 'कुचकूचौ स्तने मतौ' इति विश्वः। **कूचीति** ॥ टित्त्वान्ङीप्। **समीणः** ॥ इणः सम्युपपदे चट् स्यात्। दीर्घत्वञ्च धातोः। **सिवेः** ॥ 'सूची तु सीवनद्रव्ये आङ्गिकाभिनयान्तरे' इति मेदिनी। **शमेः** ॥ 'शम्बः स्यान्मुसलाग्रस्थलोहमण्डलके पवौ। शुभान्विते त्रिषु' इति विश्वमेदिन्यौ। **उल्बादयश्च** ॥ 'गर्भाशयो जरायुः स्यादुल्बञ्च कललोऽस्त्रियाम्' इत्यमरः। **शुल्बमिति** ॥ 'शुच शोके।' लत्वादि प्राग्वत्। 'शुल्बे ताम्रे यज्ञकर्मण्याचारे जलसन्निधौ' इति मेदिनी-हेमचन्द्रौ। वेतेर्नुमागमो ह्रस्वत्वञ्च। 'बिम्बस्तु प्रतिबिम्बे स्यात् मण्डले पुन्नपुंसकम्। बिम्बिकायाः फले क्लीबं कृकलासे पुनः पुमान्' इति मेदिनी। **स्थः स्तः** ॥ 'स्तम्बो गुल्मे तृणादीनामप्रकाण्डद्रुमेऽपि च' इति विश्वः। 'स्तम्बोऽप्रकाण्डद्रुमगुच्छयोः' इति मेदिनी। 'स्यात् गुच्छकस्तु स्तबकः' इत्यमरः। **शाशपि** ॥ 'शादः स्यात् कर्दमे शष्पे' इति मेदिनी। 'अब्दः संवत्सरे वारिवाहमुस्तकयोः पुमान्। कुन्दो माघ्येऽस्त्री मुकुन्दभ्रमिनिध्यन्तरेषु ना' इति च। **वलिमलि** ॥ 'वलयः कण्ठरोगे ना कङ्कणे पुन्नपुंसकम्' इति मेदिनी। 'मलयः पर्वतान्तरे। शैलांशे देश आरामे त्रिवृतायान्तु योषिति' इति च। 'आत्मजस्तनयः सूनुः सुतः पुत्रः' इत्यमरः। **वृह्णोः** ॥ ह्रियते विषयैः हृदयम्। हृद्दचन्द्रोक्तिमाह। **संवत्सरेत्यादि** ॥ **जत्र्वादयश्च** ॥ रुप्रत्ययान्ता निपात्यन्ते। 'जनी प्रादुर्भावे।' नकारस्य तकारः।

५४३ । **रुशातिभ्यां क्रुन्** । रुरुर्मृगभेदः । शातयतीति शत्रुः । प्रज्ञादौ पाठाद्ध्रस्वत्वम् ।

५४४ । **जनिदाच्युसृवृमदिषमिनमिभृञ्भ्य इत्वन्त्वन्त्विन्निक्न्शक्स्यडडटाटचः** । जनित्वौ मातापितरौ । दात्वो दाता । च्यौत्नो गन्ताण्डजः क्षीणपुण्यश्च । सृणिरङ्कुशश्चन्द्रः सूर्यो वायुश्च । वृश आर्द्रकं मूलकं च । मत्स्यः । षण्ढः । डित्त्वाट्टिलोपः । नमतीति नटः शैलूषः । बिभर्ति भरटः कुलालो भृतकश्च ।

५४५ । **अन्येभ्योऽपि दृश्यन्ते** । पेत्वममृतम् । भृशम् ।

५४६ । **कुसेरुम्भोमेदेताः** । कुसुम्भम् । कुसुमम् । कुसीदम् । कुसितो जनपदः ।

५४७ । **सानसिवर्णसिपर्णसितण्डुलाङ्कुशचपालेल्वलपल्वलधिष्ण्यशल्याः** । सनोतेरसिप्रत्यय उपधावृद्धिः । सानासिर्हिरण्यम् । वृञो नुक्च । वर्णसिर्जलम् । पॄ । पर्णसिर्जलगृहम् । 'तड आघाते' । तण्डुलाः । अकि

---

जत्रु स्कन्धसन्धिः । 'सन्धी तस्यैव जत्रुणी' इत्यमरः । तस्य पूर्वोक्तस्य स्कन्धस्य सन्धी इत्यर्थः । **रुशातिभ्याम्** ॥ 'रुरुर्दैत्ये मृगेऽपि च' इति मेदिनी । **जनिदा** ॥ नवभ्यो यथासङ्ख्यं नव स्युः । जनेरित्वन् इकारोच्चारणमुत्तरार्थम् । जनेरिटा सिद्धत्वात् । **सृणिरिति** ॥ नित्स्वरेणाद्युदात्तोऽयम् । 'सृवृषिभ्याङ्कित्' इति निप्रत्यये त्वन्तोदात्तः । **मत्स्य इति** ॥ अन्तोदात्तोऽयम् । 'ऋतन्यञ्जि' इति सूत्रे तु आद्युदात्तः साधितः । **षण्ढ इति** ॥ 'षम ष्टम वैकल्ये ।' बाहुलकात्सत्वाभावः । 'शमो ढः' इति सूत्रे तु तालव्यादिः साधितः । 'सायं सायो भवेत्कोषः कोशः षण्ढश्च शण्ढवत्' इति द्विरूपकोशः । कैयटस्तु 'ठस्येकः' इति सूत्रे शण्ढ इति प्रतीकमुपादाय, 'जनिदाच्यसृ' इत्यनेन ढप्रत्यये शण्ढ इत्याह । 'नटी नीलौषधौ स्त्री स्यात् शैलूषाशोकयोः पुमान्' इति मेदिनी । **अन्येभ्योऽपि दृश्यन्ते** ॥ इत्वन्नादयोऽनुवर्तन्ते । **कुसेः** ॥ 'कुस श्लेषणे ।' 'कुसुम्भं हेमनि महाराजते ना कमण्डलौ' इति मेदिनी । 'कुसुमं स्त्रीरजोनेत्ररोगयोः फलपुष्पयोः' इति च । 'कुसीदं जीवने वृद्ध्या क्लीबं त्रिषु कुसीदके' इति च । इह सूत्रे तृतीयो ह्रस्वादिर्दीर्घादिश्च तन्त्रेणोपात्तः । 'वृषाकप्यग्नि' इति सूत्रे ह्रस्व एवेति वृत्तिकारहरदत्तादिप्रयोगोपष्टम्भेन निर्णीतम् । 'पारलौकिककुसीदकमासीत्' इति श्रीहर्षः । उक्तश्च 'गाण्ड्यजगात्' इति सूत्रे ह्रस्वदीर्घयोस्तन्त्रेण निर्देशो वामनेनेति दिक् । उज्ज्वलदत्तमतेनाह । **वृञो नुक्चेति** ॥ दशपाद्यान्तु सानसिधर्णसीति पठित्वा धृञो नुक् च, धर्णसिर्लोकपालः इति व्याख्यातम् । युक्तश्चैतत् । धर्णसिम्भूरिधायसमित्यादिदर्शनात् । **तण्डुला इति** ॥ उलच्प्रत्ययः, नुगागमः । 'त्रेधा तण्डुलान् विभजेत् ।' चित्स्वरः ।

लक्षणे उशच्। अङ्कुशः। 'चषेरालः। चषालो यूपकटकः'। इल्वलो दैत्यभेदः। पल्वलम्। ञिधृषा ण्यः। ऋकारस्येकारः। धिष्ण्यम्। शलेर्यः। शल्यम्। 'वा पुंसि शल्यं शङ्कुर्ना'।

५४८। **मूशक्यबिभ्यः क्लः**। मूलम्। शक्लः प्रियंवदे। अम्ब्लो रसः। बाहुलकादमेः। अम्लः।

५४९। **माछाससिभ्यो यः**। माया। छाया। सस्यम्। बाहुलकात्सुनोतेः। 'सव्यं दक्षिणवामयोः।

५५०। **जनेर्यक्**। 'ये विभाषा' (सू २३१९)। जन्यं युद्धम्। जाया भार्या।

५५१। **अघ्न्यादयश्च**। यगन्ता निपात्यन्ते। हन्तेर्यक् अडागम उपधालोपश्च।

---

'तण्डुलः स्याद्विगण्डे च धान्यादिनिकरे पुमान्' इति मेदिनी। **अंकुश इति**॥ अयमपि चित्स्वरेणान्तोदात्तः। तथा च मन्त्रः। दीर्घं ह्यङ्कुशं पथेति॥ **चषेराल इति**॥ प्रत्ययस्वरेणाद्युदात्तः। उज्ज्वलदत्तादयस्तु आलच् इति चितमाहुः। तन्न। 'चषालं ये अश्वयूपाय तक्षति। चषालवन्तस्तरवः पृथिव्याम्' इत्यादौ चित्स्वरादर्शनात्। अमरोक्तिमाह। **चषाल इति**॥ **इल्वल इति**॥ 'इल स्वप्नप्रेरणयोः।' वलच्। गुणाभावः। 'इल्वला तारकाभेदे ना भेदे दैत्यमत्स्ययोः' इति मेदिनी। 'इल्वलाः तच्छिरोदेशे तारका निवसन्ति याः' इत्यमरः। तत्र 'इल्वकाः' इति पाठान्तरम्। तच्च 'इवि प्रीणने' 'अस्मात् क्वुन् शिल्पिसंज्ञयोः' इति क्वुनि बोध्यम्। पिबतेर्वलच्। लुगागमः। ह्रस्वत्वञ्च। पिबन्त्यस्मिन् इति पल्वलम्। अल्पसरः। 'वेशन्तः पल्वलश्चाल्पसरः' इत्यमरः। **इकार इति**॥ रपरत्वाभावो ण्यप्रत्ययश्चेति बोध्यम्। 'धिष्ण्यं स्थाने गृहे भेऽग्नौ' इत्यमरः। 'धिष्ण्यं स्थानाग्निसद्मसु। ऋक्षे शक्तौ च' इति मेदिनी। 'धिष्ण्यं स्थाने च ऋक्षे चाग्नौ धिष्ण्यो नालये' इति धरणिः। **शलेरिति**॥ 'शल्ये तु न स्त्रियां शङ्कौ क्लीबं क्ष्वेडेषुतोमरे। मदनद्रुश्वाविधोर्ना' इति मेदिनी। **मूशक्य**॥ 'मूङ् बन्धने।' 'शक्लृ शक्तौ।' 'अबि शब्दे।' 'मूलं शिफाघयोः। मूलं वित्तेऽन्तिके' इति मेदिनी। 'शक्लः प्रियंवदः' इति विशेष्यनिघ्नेऽमरः। 'अम्लो रसविशेषे स्यादम्ला चाङ्गेरिकौषधौ' इति मेदिनी। **माछा**॥ 'माया स्याच्छाम्बरीबुद्ध्योर्मायः पीताम्बरेऽसुरे' इति मेदिनी। 'छाया स्यादातपाभावे प्रतिबिम्बार्कयोषितोः। पालनोत्कोचयोः कान्तिसच्छोभापङ्क्तिषु स्त्रियाम्' इति विश्वमेदिन्यौ। 'वृक्षादीनां फलं सस्यम्' इत्यमरः। 'सव्यं वामे प्रतीपे च' इति मेदिनी। **जनेर्यक्**॥ 'जन्यं हट्टे परीवादे सङ्ग्रामे च नपुंसकम्। जन्या मातृवयस्यायाञ्जन्यः स्याज्जनके पुमान्। त्रिषूत्पाद्यजनित्रोश्च नवोढाज्ञातिभृत्ययोः। वरस्निग्धे' इति मेदिनी। **अघ्न्यादयश्च**॥ कौतेर्यतिड्डक् कुड्यमित्युज्ज्वलदत्तादयः। 'यतोऽनावः' इत्याद्युदात्तः। ड्यक्प्रत्ययोऽन्तोदात्त इत्यन्ये इति, 'निवाते वातत्राणे' इति सूत्रे वृत्तिः। गुणप्रतिषेधार्थात्ककारात् डकारस्येत्त्वं नेति तत्रैव हरदत्तः। एवं स्थिते यगन्ता इति प्रायोवादः। **अडागम इति**॥ नञ्पूर्वाद्धन्तेर्यगिति वा बोध्यम्।

अघ्न्या माहेयी। अघ्न्यः प्रजापतिः। 'कनी दीप्तौ'। कन्या। बवयोरैक्यम्। वन्ध्या।

५५२। स्नामदिपद्यर्तिपॄशकिभ्यो वनिप्। स्नावा रसिकः। मद्वा शिवः। पद्वा पन्थाः। 'अर्वा तुरङ्गगर्ह्ययोः'। पर्व ग्रन्थिः प्रस्तावश्च। शक्वा हस्ती। ङीब्रौ। शक्वरी अङ्गुलिः।

५५३। शीङ्क्रुशिरुहिजिक्षिसृधृभ्यः क्वनिप्। शीवा अजगरः। क्रुश्वा सृगालः। रुह्वा वृक्षः। जित्वा जेता। क्षित्वा वायुः। सृत्वा प्रजापतिः। धृत्वा विष्णुः।

५५४। ध्याप्योः संप्रसारणं च। धीवा कर्मकरः। पीवा स्थूलः।

५५५। अदेर्ध च। अध्वा।

५५६। प्र ईरशदोस्तुट् च। प्रेत्वा प्रशत्त्वा च सागरः। प्रेत्वरी प्रशत्त्वरी च नदी।

५५७। सर्वधातुभ्य इन्। पचिरग्निः। तुडिः। तुण्डिः। वलिः। वटिः। यजिः। देवयजिः। काशत इति काशिः। यतिः। मल्लिः। मल्ली। केलिः। 'मसी परिणामे।' मसिः। बाहुलकाद्गुणः। कोटिः। हेलिः। बोधिः। नन्दिः। कलिः।

---

**अघ्न्या इति** ॥ यत्तु 'अघ्न्यस्य मूर्द्धनि' इति मन्त्रे वेदभाष्यकारैरुक्तम्। 'हन्तुमशक्योऽघ्न्यः पर्वतः' इति तत् प्रकृतसूत्रमभिप्रेत्यैव। यत्तु अहननमघ्नः तमर्हतीत्यर्थे 'छन्दसि च' इति य इति तत्रैवोक्तम्, तदुपायान्तरपरतया बोध्यम्। 'माहेयी सौरभेयी गौरुस्रा माहा च शृङ्गिणी। अर्जुन्यघ्न्या रोहिणी स्यात्' इत्यमरः। सम्पूर्वाद्ध्यो यक्। आतो लोपश्च। 'सन्ध्या पितृप्रसूनयोश्चिन्तामर्यादयोरपि। प्रज्ञायां च सन्ध्याने सन्ध्या च कुसुमान्तरे' इति विश्वः। 'सन्ध्या पितृप्रसूनद्यन्तरयोर्युगसन्धिषु' इति मेदिनी। 'सन्ध्या कुमारिका नार्योरोषधीराशिभेदयोः' इति विश्वमेदिन्यौ। **वन्ध्येति** ॥ 'बन्ध बन्धने।' 'वन्ध्यस्त्वफलवृक्षादौ स्त्रियां स्यादप्रजःस्त्रियाम्' इति मेदिनी। **स्नामदि** ॥ 'अर्वा तुरङ्गमे पुंसि कुत्सिते वाच्यलिङ्गके' इति मेदिनी। 'पर्व क्लीबं महे ग्रन्थौ प्रबले लक्षणान्तरे। दर्शप्रतिपदोः सन्धौ विषुवत्प्रभृतिष्वपि' इति च। **अंगुलिरिति** ॥ एतच्च 'आरोहतन्दशतं शक्वरीर्मम' इत्यादिमन्त्रव्याख्यायां स्पष्टम्। 'शक्वरी च्छन्दसो भेदे नदीमेखलयोरपि' इति मेदिनी। **सर्वधातुभ्य इन्** ॥ **यतिरिति** ॥ 'यती प्रयत्ने।' 'यतिः स्त्री पाठविच्छेदे निकारयतिनोः पुमान्' इति मेदिनी। 'कोटिः स्त्री धनुषोऽग्रेऽश्रौ सङ्ख्याभेदप्रकर्षयोः। बोधिः पुंसि समाधेश्च भेदे पिप्पलपादपे। नन्दिर्द्यूताङ्ग आनन्दे स्त्री नन्दिकेश्वरे पुमान्। कलिः स्त्री कलिकायां ना शूराजिकलहे

५५८ । **हृपिषिरुहिवृतिविदिछिदिकीर्तिभ्यश्च** । हरिर्विष्णावहाविन्द्रे भेके सिंहे हये रवौ । चन्द्रे कीले प्लवङ्गे च यमे वाते च कीर्तितः । पेषिर्वज्रम् । रोहिर्व्रती । वर्तिः । वेदिः । छेदिश्छेत्ता । कीर्तिः ।

५५९ । **इगुपधात्कित्** । कृषिः । ऋषिः । शुचिः । लिपिः । बाहुलकाद्वत्वे लिबिः । तूल निष्कर्षे । तूलिः । तूली । कूर्चिका ।

५६० । **भ्रमेः संप्रसारणं च** । भृमिर्वातः । बाहुलकाद्भ्रमिः ।

५६१ । **क्रमितमिशतिस्तम्भामत इच्च** । क्रिमिः । संप्रसारणानुवृत्तेः कृमिरपि । तिमिर्मत्स्यभेदः । शितिर्मेचकशुक्लयोः । स्तिम्भिः समुद्रः ।

५६२ । **मनेरुच्च** । मुनिः ।

---

युगे' इति च । इह इन्नित्येव सूत्रम् । अधिकन्तु प्रक्षिप्तं व्यर्थञ्च । एवं 'सर्वधातुभ्यष्ट्रन्' इत्यादावपि । अत एव दशपाद्यामिन्नित्येव पठितमिति दिक् । **हृपिषि** ॥ हरतेः कीर्तयतेश्च 'अच इः' इति प्राप्ते इतरेषां तु 'इगुपधात्' इति कित्त्वे प्राप्ते वचनम् । 'हरिश्चन्द्रार्कवाताश्वशुकभेकयमाहिषु । कपौ सिंहे हरेऽजेंऽशौ शक्रे लोकान्तरे पुमान् । वाच्यवल्लिङ्गहरितोः' इति मेदिनी । 'वर्तिर्भेषजनिर्माणे नयनाञ्जनलेखयोः । मात्रानुलेपनीदीपदशादीपेषु योषिति । वेदिः स्यात्पण्डिते पुमान् । स्त्रियामङ्गुलिमुद्रायां स्यात्परिष्कृतभूतले' इति च । 'कीर्तिः प्रसादयशसोर्विकारे कर्दमेऽपि च' इति विश्वः । 'सा रसवत्ता विगता नवका विलसन्ति चरति नो कङ्कः । सरसीव कीर्तिशेषं गतवति भुवि विक्रमादित्ये' इति कविप्रयोगः । **इगुपधात्कित्** ॥ इनः कित्त्वं विधीयते । केचित्तु किरिति पठित्वा इनोऽपवादः किप्रत्यय इत्याहुः । तन्न । प्रत्ययस्वरेण प्रातिपदिकानामन्तोदात्ततापत्तेः । न चेष्टापत्तिः । 'अग्निः पूर्वेभिर्ऋषिभिः । ऋषिर्विप्रः काव्येन । शुचिर्विप्रः शुचिः कविः' इत्यादौ ऋषिशुचिप्रभृतीनामाद्युदात्तत्वदर्शनात् । कथं तर्हि 'अक्षैर्मा दिव्य कृषिमित्कृषस्व' इत्यादौ कृषिशब्दस्यान्तोदात्ततेति चेत् । 'इक् कृष्यादिभ्यः' इतीक्प्रत्यये सतीति गृहाण । 'ऋषिर्वेदे वसिष्ठादौ दीधितौ च पुमानयम् । शुचिर्ग्रीष्माग्निश्रृङ्गारेष्वौषधे शुद्धमन्त्रिणि' इति मेदिनी । यत्तु माधवेन 'अग्निः पूर्वेभिरित्यृग्व्याख्यावसरे ऋषिशब्दस्येत्प्रत्ययान्तत्वमङ्गीकृत्य, 'ऋष्यन्धक' इति निपातनाल्लघूपधगुणाभाव इत्युक्तं तत्प्रकृतसूत्रविस्मरणमूलकत्वादुपेक्ष्यम् । **भ्रमेः** ॥ 'भृमिं विद्यथावसवोऽजुषन्त' इति मन्त्रे भृमिं भ्रमणशीलन्दरिद्रञ्जनमिति वेदभाष्यम् । **क्रमितमि** ॥ 'क्रमु पादविक्षेपे ।' 'कृमिर्ना क्रिमिवत्कीटे लाक्षायां क्रिमिले खरे' इति विश्वमेदिन्यौ । 'पारतं पारदं वाऽस्त्री वासरः क्रिमिवत्कृमिः' इति द्विरूपकोशः । **तिमिरिति** ॥ 'तमु काङ्क्षायाम् ।' 'अस्ति मत्स्यस्तिमिर्नाम तथा चास्ति तिमिङ्गिलः । तिमिङ्गिलगिलोऽप्यस्ति तद्गिलोऽप्यस्ति लक्ष्मण' इति रामायणे सप्तमे काण्डे रामवाक्यम् । 'शितिः कृष्णेऽसिते भूर्जे' इति विश्वः । 'शितिर्भूर्जे ना रसितासितयोस्त्रिषु' इति मेदिनी । **मनेरुच्च** ॥ 'मुनिः पुंसि वसिष्ठादौ वङ्गसेनतरौ जिने' इति मेदिनी ।

५६३ । **वर्णेर्बलिश्चाहिरण्ये** । वर्णिः सौत्रः । अस्य बलिरादेशः । करोपहारयोः पुंसि बलिः प्राण्यङ्गके स्त्रियाम् । वबयोरैक्यात् वलिः । हिरण्ये तु वर्णिः सुवर्णम् ।

५६४ । **वसिवपियजिराजिव्रजिसदिहनिवाशिवादिवारिभ्य इञ्** । वासिश्छेदनवस्तुनि । वापिः । वापी । याजिर्यष्टा । राजिः । राजी । व्राजिर्वातालिः । सादिः सारथिः । निघातिर्लोहघातिनी । वाशिरग्निः । वादिर्विद्वान् । वारिर्गजबन्धनी । जले तु क्लीबम् । बाहुलकाद्धारिः पथिकसंहतौ ।

५६५ । **नहो भश्च** । नाभिः स्यात्क्षत्रिये पुंसि । प्राण्यङ्गे तु स्त्रियाम् । पुंस्यपीति केचित् ।

५६६ । **कृषेर्वृद्धिश्छन्दसि** । कार्षिः ।

५६७ । **श्रः शकुनौ** । शारिः शारिका ।

५६८ । **कृञ उदीचां कारुषु** । कारिः शिल्पी ।

५६९ । **जनिघसिभ्यामिण्** । जनिर्जननम् । घासिर्भक्ष्यमग्निश्च ।

---

**वर्णेः** ॥ वलिर्दैत्यप्रभेदे च करचामरदण्डयोः । उपदायां पुमान् स्त्री तु जरया श्लथचर्मणि । गृहदारुप्रभेदे च जठरावयवेऽपि च' इति मेदिनी । **वसि** ॥ एभ्यो दशभ्य इञ्स्यात् । **वाशिरिति** ॥ दन्त्यसः । सूत्रे अष्टमस्तु तालव्यशः । द्वयमपि च्छेदनसाधने प्रयुज्यते । वास्यादीनामिव करणानाङ्कर्तृव्यापार्यत्वनियमादिति वैशेषिकाः । वास्यर्थमित्यत्र 'स्कोः' इति सलोपः प्राप्नोतीति भाष्यम् । 'वाशीमन्त्य अष्टिमन्तो मनीषिणः' इति मन्त्रः । 'राजिः स्त्री पङ्क्तिरेखयोः' इति मेदिनी । इह वादीति ण्यन्तो निर्दिष्टः । बाहुलकादण्यन्तादपि । तथा च भूवादिसूत्रे 'वदन्तीति वादयो वाचकाः' इति न्यासकारादयः । 'वारिर्वागजबन्धयोः स्त्री क्लीबेऽम्बुनि वालके । वारी स्याद्गजबन्धन्याङ्कलश्यामपि योषिति' इति च । 'वारिः स्मृता सरस्वत्यां वारिह्वीबेरनीरयोः । वारी घटीभबन्धन्योः' इति विश्वः । 'हारिः पथिकसन्तानद्यूतादिभङ्गयोः स्त्रियाम्' इति मेदिनी । खटतेः खाटिः । 'खाटिस्त्वसद्गृहेऽपि स्यात् किणे शवरथे स्त्रियाम्' इति मेदिनी । **नहो भश्च** ॥ **स्त्रियामिति** ॥ लिङ्गानुशासने स्त्रियामित्यधिकारे नाभिरक्षत्रिय इति सूत्रितत्वादिति भावः । **केचिदिति** ॥ तथा च मेदिनी । 'नाभिर्मुख्यनृपे चक्रमध्यक्षत्रिययोः पुमान् । द्वयोः प्राणिप्रतीके स्यात् स्त्रियाङ्कस्तूरिकामदे' इति । भारविश्च प्रायुङ्क्त । 'समुल्लसत्पङ्कजकोशकोमलैरुपाकृतश्रीण्युपनीवि नाभिभिः' इति । **श्रः** ॥ 'शारिर्नाक्षोपकरणे स्त्रियां शकुनिकान्तरे । युद्धार्थगजपर्याणे व्यवहारान्तरेऽपि च' इति मेदिनी । कपिलकादित्वाल्लत्वम् । शालिस्तु कलमादौ च गन्धमार्जारके पुमान्' इति मेदिनी । **कृञः** ॥ 'कारिः स्त्रियां क्रियायां स्याद्वाच्यलिङ्गस्तु शिल्पिनि' इति मेदिनी । **जनिघसिभ्यामिण्** ॥ प्रत्ययान्तरकरणं स्वरार्थम् । यच्च घासिञ्जघास । आजिघ्र जग्मुः सुकृतोतमर्णः' इत्यादौ घास्याजिपाणिप्रभृतीनामन्तोदात्तत्वात् । जनिरिति स्त्रीलिङ्गम् । 'कृदिकारात्' इति पक्षे ङीष् । 'जनी

५७० । **अज्यतिभ्यां च** । आजिः संग्रामः । आतिः पक्षी ।

५७१ । **पादे च** । पदाजिः । पदातिः ।

५७२ । **अशिपणाय्यो रुडायलुकौ च** । अशेरुट् । राशिः पुञ्जः । पणायतेरायलुक् । पाणिः करः ।

५७३ । **वातेर्डिच्च** । विः पक्षी । स्त्रियां वीत्यपि ।

५७४ । **प्रे हरतेः कूपे** । प्रहिः कुपः ।

५७५ । **नौ व्यो यलोपः पूर्वस्य च दीर्घः** । व्येञ इण् स्याद् यलोपश्च नेर्दीर्घः । नीविः नीवी । वस्त्रग्रन्थौ मूलधने च ।

५७६ । **समाने ख्यः स चोदात्तः** । समानशब्दे उपपदे ख्या इत्यस्मादिण् स्यात् स च डिच्च यलोपश्च । समानस्य तूदात्तः स इत्यादेशश्च । समानं ख्यायते जनैरिति सखा ।

---

सीमन्तिनीवध्वोरुत्पत्तावोषधीभिदि' इति मेदिनी । 'आजिः सभावनौ युद्धे' इति विश्वः । 'शरारिराजिराटिश्च' इत्यमरः । **पादे च** ॥ पादे उपपदे अज्यतिभ्यामिण् । 'पादस्य पदाज्यातिगोपहतेषु' इति पदादेशः । अत एव निर्देशात् बाहुलकादजेर्वीभावो न । 'पदातिपत्तिपदगपादातिकपदाजयः । पद्गश्च पदिकश्च' इत्यमरः । **अशि** ॥ 'राशिर्मेषादिपुञ्जयोः' इति मेदिनी । **प्रे** ॥ 'पुंस्येवान्धुः प्रहिः कूप उदपानन्तु पुंसि वा' इत्यमरः । **नौ** ॥ 'स्त्रीकटीवस्त्रबन्धेऽपि नीवी परिपणेऽपि च' इत्यमरः । परिपणं मूलधनम् । **समाने** ॥ **इण् स्यादिति** ॥ यत्तूज्ज्वलदत्तेनोक्तम् । इञ् स्यात् स चोदात्त इतीति । तन्न । इणः सन्निधानात् इञो विच्छिन्नत्वात् । यदपि तेनैव नौव्य इति पूर्वसूत्रे उक्तम् । इञेवात्रानुवर्तते, न त्विण् । उत्तरत्रोदात्तवचनाज्ज्ञापकादिति । तदपि न, स चोदात्त इति हि नायं प्रत्ययं निर्देष्टुं तच्छब्दः, किं तु समानशब्दस्य स्थाने विधेयं निर्देष्टुं शब्दस्वरूपपरः । तथा च कथं ज्ञापकता । यदपि स इञिति व्याख्याय समानस्य सभाव इति प्रक्रियासरणमात्रङ्कृतम् । तदपि न । विधायकाभावात् । यदपि स्वरमञ्जरीकारादिभिः 'समानस्य छन्दसि' इति सूत्रेणेत्युक्तं तदपि न । लोके सखिशब्दस्यासाधुतापत्तेः । अपि च—'सखा सखायमब्रवीत् । सखा सख्ये अयचत् । सखायस्त्वा वव्रमहे । सखा सखिभ्य ईड्यः ।' इत्यादिमन्त्रेषु सर्वत्र सखिशब्द आद्युदात्त एवेति निर्विवादम् । एवञ्च इञ् उदात्त इति व्याख्यानं वेदवार्तानभिज्ञत्वप्रयुक्तमेव । तथा च ज्ञापकोपन्यासोऽपि गर्भस्रावेणैव गतः । अपि च । त्वत्पक्षे 'सख्य इञ्' इत्येव सूच्यतां, किं स चेत्यादिना, शब्दतोऽर्थतश्च गौरवप्रसङ्गात् । अपि च । इणित्यपि मास्तु । नौव्य इत्यादित्रिसूत्री जनिघसिभ्यामित्यतः प्रागेव उपेयताम् । एवं हि महदेव लाघवम् । स चोदात्त इति मण्डूकप्लुतौ ज्ञापकस्यानाश्रयणात् । ननु 'वातेर्डिच्च' इति डित्त्वोपजीवनार्थमित्थं पाठ इति चेत् । तर्हीण्प्रकरणानन्तरमेव इञ्प्रकरणं सर्वत्रास्तु । नौव्य इति सूत्रे इञ् पठ्यताम् । आङि

५७७। **आङि श्रिहनिभ्यां ह्रस्वश्च** । इण् स्यात्स च डित् आङो ह्रस्वश्च । श्रियः पाल्यश्रिकोटयः । सर्पे वृत्रासुरेऽप्यहिः ।

५७८। **अच इः** । रविः । पविः । तरिः । कविः । अरिः । अलिः ।

५७९। **खनिकष्यज्यसिवसिवनिसनिध्वनिग्रन्थिचलिभ्यश्च** । खनिः । कषिर्हिंस्रः । अजिः । असिः । वसिर्वस्त्रम् । वनिरग्निः । सनिर्भक्तिर्दानं च । ध्वनिः । ग्रन्थिः । चलिः पशुः ।

५८०। **वृतेश्छन्दसि** । वर्तिः ।

५८१। **भुजेः किच्च** । भुजिः ।

५८२। **कृगृशॄपृकुटिभिदिछिदिभ्यश्च** । इः कित्स्यात् । किरिर्वराहः । गिरिर्गोत्राक्षिरोगयोः । गिरिणा काणः गिरिकाणः । शिरिः शलभो हन्ता च । पुरिर्नगरं राजा नदी च । कुटिः शाला शरीरं च । भिदिर्वज्रम् । छिदिः परशुः ।

---

श्रीत्यस्यानन्तरं वसिवपीत्यादि पठ्यताम् । इञ् चानुवर्तिष्यते, न तु ङित्त्वम् । वकाराद्यनेक-धातुपाठवैयर्थ्यापत्तेरिति दिक् । तस्मादस्य उक्तैव व्याख्या सुधीभिरादर्तव्या । दशपादीवृत्ति-ग्रन्थाः, ख्याधातौ माधवग्रन्थः, 'यस्ते सखिभ्य आवरम्" इत्यादीन् मन्त्रान् व्याचक्षाणानां वेदभाष्यकृतामनेकप्रघट्टकस्थिता ग्रन्थाश्चेहानुकूला इत्यवधेयम् । अश्रिः कोणः । अमरोक्तिमाह । **श्रिय इति** ॥ एवञ्च 'सुप्रातसुश्व' इति सूत्रे चतुरश्रेति तालव्यपाठ एव । केषाञ्चिद्दन्त्य-पाठस्तु एतत्सूत्रानालोचनमूलक इत्यवधेयम् । न चैतावता चतुरस्रमिति दन्त्यप्रयोगोऽशुद्ध इति भ्रमितव्यम् । अकारान्तेन दन्त्यगर्भेणास्रशब्देन विग्रहे तत्सौष्ठवात् । न च तादृशशब्देऽपि विप्रतिपत्तव्यम् । 'अस्रः कोणे कचे पुंसि क्लीबमश्रुणि शोणिते' इति मेदिनीकोशात् । 'अहि-र्वृत्रासुरे सर्पे' इति मेदिनी । **अच इः** ॥ 'कुङ् शब्दे ।' 'कविर्वाल्मीकिशुक्रयोः । सूरौ काव्यकरे पुंसि स्यात् खलीने तु योषिति' इति मेदिनी । **खनिकष्य** ॥ 'खनिः स्त्रियामाकरः स्यात्' इत्यमरः । ण्यन्तात् 'अच इः' इतीप्रत्यये खानिरपि । 'खनिरेवं मता खानिः' इति द्विरूपकोशः । 'ग्रन्थिस्तु ग्रन्थिपर्णे ना बन्ध रुग्भेदपर्वणोः' इति मेदिनी । **वृतेश्छन्दसि** ॥ बाहुलकाल्लोकेऽपि । 'वर्त्तिर्भेषजनिर्माणे नयनाञ्जनलेखयोः । गात्रानुलेपनीदीपदशादीपेषु योषिति' इति मेदिनी । **कृगृ** ॥ यत्तु 'न पदान्त' इति सूत्रे न्यासकारहरदत्ताभ्यां किर्योर्गिर्योरित्यत्र 'कॄग्रोरिक्च' इत्युपन्यस्तम् । तत् क्वचिदुणादिवृत्तिषु अन्वेषणीयम् । कुर्वोः गुर्वोः । 'कृग्रोरुक्च' इति वा पाठः शोधनीयः । 'वराहः सूकरो गृष्टिः कोलः पोत्री किरिः किटिः' इत्यमरः । 'इगुपधज्ञाप्री' इति कप्रत्यये किरोऽपि । 'स्यात्किरौ किरः प्रोक्तः पथः पथि' इति द्विरूपकोशः । 'गिरिर्ना नेत्ररुग्भिदि । अद्रौ गिरिजके योषिद्गीर्णे पूज्ये पुनस्त्रिषु' इति मेदिनी । **कुटिरिति** ॥ ङीषि तु कुटी । 'कुटः कीटे पुमानस्त्री घटे स्त्रीपुंसयोर्गृहे । कुटी स्यात्कुम्भदास्याञ्च सुरायां

५८३ । कुडिकम्प्योर्नलोपश्च । कुडि दाहे । कुडिर्देहः । कपिः ।

५८४ । सर्वधातुभ्यो मनिन् । क्रियत इति कर्म । चर्म । भस्म । जन्म । शर्म । स्थाम बलम् । इस्मन्निति ह्रस्वः । छद्म । सुत्रामा ।

५८५ । बृहेर्नोच्च । नकारस्याकारः । ब्रह्म तत्त्वं तपो वेदो ब्रह्मा विप्रः प्रजापतिः

५८६ । अशिशकिभ्यां छन्दसि । अश्मा । शक्मा ।

५८७ । हृभृधृसृस्तृशृभ्य इमनिच् । हरिमा कालः । भरिमा कुटुम्बम् । धरिमा रूपम् । सरिमा वायुः । स्तरिमा तल्पम् । शारिमा प्रसवः ।

५८८ । जनिमृङ्भ्यामिमनिन् । जनिमा जन्म । मरिमा मृत्युः ।

५८९ । वेञः सर्वत्र । छन्दसि भाषायां चेत्यर्थः । वेमा तन्तुवायदण्डः । अर्धर्चादिः । सामनी वेमनी इति वृत्तिः ।

५९० । नामन् सीमन् व्योमन् रोमन् लोमन् पाप्मन् ध्यामन्[1] । सर्वे सप्त अमी निपात्यन्ते । म्नायतेऽनेनेति नाम । सिनोतेर्दीर्घः । सीमा । सीमानौ । सीमानः । पक्षे डाप् । सीमे । सीमाः । व्येञोऽन्त्यस्योत्वं गुणः । व्योम । रौतेः । रोम । लोम । पाप्मा पापम् । धाम परिमाणं तेजश्च ।

---

चित्रगुच्छके' इति मेदिनी । 'कपिर्ना सिह्लके शाखामृगे च मधुसूदने' इति च । **सर्वधातुभ्यः** ॥ कर्म व्याप्ये क्रियायाश्च पुन्नपुंसकयोर्मतम्' इति रुद्रः । 'चर्म कृत्तौ च फलके' इति मेदिनी । **बृहेः** ॥ 'ब्रह्म तत्त्वतपोवेदे न द्वयोः पुंसि वेधसि । ऋत्विग्योगभिदोर्विप्रे' इति मेदिनी । **अश्मेति** ॥ भाषायामपीष्यते । छन्दसीति तु शकिनैवान्वेति । **हृभृ** ॥ **शरिमेति** ॥ 'शॄ हिंसायाम् ।' एतच्चोज्ज्वलदत्तरीत्योक्तम् । दशपाद्यान्तु शृणातिर्नेष्यते । तत्स्थाने सृः प्रत्ययश्च दीर्घादिर्निच्च 'स्तृभृसृभ्य ईमन्' इति छन्दोग्रहणञ्चानुवर्तितम् । युक्तञ्चैतत् । 'पिपृतान्नो भरीमभिः । वातस्य सर्गो अभवत्सरीमणि । स्तीर्णे बर्हिः सुष्टरीमा जुषाणा । यस्यामतिर्भा अदिद्युतत्सवीमनिहिरण्यपाणिः ।' इत्यादिमन्त्राणां तद्भाष्यस्य चानुगुणत्वादुक्तप्रयोगाणां भाषायामदर्शनेन छन्दोऽनुवृत्तेर्न्याय्यत्वाच्च । अत एव 'वेञः सर्वत्र' इति सूत्रे सर्वत्रग्रहणं करिष्यति । **नामन् सीमन्** ॥ **सर्वे इति** ॥ मनिनन्ता इति शेषः । **नामेति** ॥ 'म्ना अभ्यासे' मलोपः । **सीमेति** ॥ 'सीमसीमे स्त्रियामुभे' इत्यमरः । **पाप्मेति** ॥ पिबतेः पुमागमः । बाहुळकादन्यतोऽपि । 'यक्ष पूजायाम् ।' 'क्षयः शोषश्च यक्ष्मा च' इत्यमरः । 'षू प्रेरणे ।' सोमा चन्द्रः । 'डु धाञ् ।' 'धाम देहे गृहे रश्मौ स्थाने

---

१. ध्यामन् इति क्वचित्पाठः ।

५९१ । **मिथुने मनिः** । उपसर्गक्रियासंबन्धो मिथुनम् । न तु स्त्रीपुंसौ । स्वरार्थमिदम् । सुशर्मा ।

५९२ । **सातिभ्यां मनिन्मनिणौ** । स्यतीति साम । सामनी । आत्मा ।

५९३ । **हनिमशिभ्यां सिकन्** । हंसिका हंसयोषिति । मक्षिका ।

५९४ । **कोररन्** । कवरः ।

५९५ । **गिर उडच्** । गरुडः ।

५९६ । **इन्देः कमिर्नलोपश्च** । इदम् ।

५९७ । **कायतेर्डिमिः** । किम् ।

५९८ । **सर्वधातुभ्यः ष्ट्रन्** । वस्त्रम् । अस्त्रम् । शस्त्रम् । इस्मन्त्रिति ह्रस्वत्वम् । छादनाच्छत्रम् ।

५९९ । **भ्रस्जिगमिनमिहनिविश्यशां वृद्धिश्च** । भ्राष्ट्रः । गान्त्रं शकटम् । नान्त्रं स्तोत्रम् हान्त्रं मरणम् । वैष्ट्रं पिष्टपम् । आष्ट्रमाकाशम् ।

६०० । **दिवेर्द्युच्च** । द्यौत्रं ज्योतिः ।

६०१ । **उषिखनिभ्यां कित्** । उष्ट्रः । खात्रं खनित्रं जलाधारश्च ।

---

जन्मप्रभावयोः' इति मेदिनी । **सुशर्मेति** ॥ कृदुत्तरपदस्वरेणान्तोदात्तं पदम् । मनिनि तु मध्योदात्तं स्यात् । सुष्ठु शृणातीति विग्रहः । स्यति दुःखयति दुरध्येयत्वात्साम । 'साम क्लीबमुपायस्य भेदे वेदान्तरेऽपि च' इति मेदिनी । 'आत्मा पुंसि स्वभावेऽपि प्रसन्नमनसोऽपि । धृतावपि मनीषायां शरीरब्रह्मणोरपि' इति च । **हनि** ॥ 'मक्षिका मम्भराली स्यात्' इति हारावली । कवरः पाठकः । 'बवयोरैक्यात्कवरी केशविन्यासः । 'जानपद' इति ङीष् । अन्यत्र कबरा । **गिर उडच्** ॥ इदं सूत्रं केचिन्न पठन्ति । अत एव गरुता डयत इति विगृह्य डप्रत्यये पृषोदरादित्वाल्लोपे गरुडशब्दं व्युत्पादयन्ति । **इन्देः कमिः** ॥ उज्ज्वलदत्तस्तु कमिन्निति नितं पपाठ । तन्न । 'इदन्तं पात्रमिन्द्रियाणाम् । इदं ते सौम्यं मधु' इत्यादौ नित्स्वराभावात् । दशपाद्यान्तु 'इणो दमक्' इति सूत्रितम् । **इदमिति** ॥ सर्वनामशब्दोऽयं प्रत्यक्षपरामर्शी । **कायतेर्डिमिः** ॥ 'प्रयोजनाभावादेव मकारस्येत्संज्ञाविरहे सिद्धे इकारः उच्चारणार्थः । दशपाद्यान्तु डिमित्येव सूत्रितम् । किमिति सर्वनाम । **सर्वे** ॥ दशपाद्यान्तु ष्ट्रन्नित्येव सूत्रम् । अत एवाधिकं प्रक्षिप्तमित्याहुः । 'असु क्षेपणे ।' 'अस्त्रं प्रहरणे चापे करवाले नपुंसकम्' इति मेदिनी । 'पत्त्रन्तु वाहने पर्णे स्यात्पक्षे शरपक्षिणोः' इति मेदिनी । पिबतेः पात्रम् । षित्वात् ङीष् । 'पात्र्यमत्रे त्रिषु क्लीबं स्रुवादौ राजमन्त्रिणि । तीरद्वयान्तरे योग्ये' इति मेदिनी । **भ्रस्जि** ॥ 'क्लीबेऽम्बरीषं भ्राष्ट्रो ना' इत्यमरः । वैष्ट्रं विष्टपम् । **उष्ट्रः**

६०२ । **सिविमुच्योष्टेरू च** । सूत्रम् । मूत्रम् ।

६०३ । **अमिचिमिदिशसिभ्यः क्त्रः** । आत्रम् चित्रम् । मित्त्रम् । शस्त्रम् ।

६०४ । **पुवो ह्रस्वश्च** । पुत्रः ।

६०५ । **स्त्यायतेर्ड्रट्** । स्त्री ।

६०६ । **गुधृवीपचिवचियमिसदिक्षदिभ्यस्त्रः** । गोत्रं स्यान्नामवंशयोः । गोत्रा पृथिवी । धर्त्रं गृहम् । वेत्रम् । पक्त्रम् । वक्त्रम् । यन्त्रम् । सत्त्रम् । क्षत्त्रम् ।

६०७ । **हुयामाश्रुभसिभ्यस्त्रन्** । होत्रम् । यात्रा । मात्रा । श्रोत्रम् । भस्त्रा ।

६०८ । **गमेरा च** । गात्रम् ।

६०९ । **दादिभ्यश्छन्दसि** । दात्रम् । पात्रम् ।

६१० । **भूवादिगृभ्यो णित्रन्** । भावित्रम् । वादित्रम् । गारित्रमोदनम् ।

६११ । **चरेर्वृत्ते** । चारित्रम् ।

---

**इति** ॥ 'उष्ट्रे क्रमेलकमयमहाङ्गाः' इत्यमरः । **सिविमुच्योः** ॥ सूत्रिमूत्रिभ्यां चुरादिण्यन्ताभ्यामेरचा रूपसिद्धेः आद्युदात्तार्थमिदं सूत्रम् । न च घञा तत्सिद्धिः । अचा घञो बाधात् । 'सूत्रन्तु सूचनाग्रन्थे सूत्रतन्तुव्यवस्थयोः' इति विश्वः । **अमिचिमिदि** ॥ **आन्त्रमिति** ॥ 'अनुनासिकस्य क्विझलोः' इति दीर्घः । 'चित्राश्वपर्णीगोतुम्बीसुभद्रादन्तिकासु च । मायायां सर्पनक्षत्रनदीभेदेषु च स्त्रियाम् । तिलकालेख्ययोः क्लीबं कर्बुराद्भुतयोरपि । तद्युक्तयोस्त्वन्यलिङ्गम्' इति मेदिनी । 'मित्रं सुहृदि न द्वयोः सूर्ये पुंसि' इति च । 'शस्त्रं लोहास्त्रयोः क्लीबं छुरिकायान्तु योषिति' इति च । प्रत्ययस्वरेणैव अन्तोदात्ताः । 'शुन आन्त्राणि पेचे । चित्रं देवानाम् । मित्रं त्रयम् । शस्त्रस्य शस्त्रमसि' इत्यादि । **पुवो ह्रस्वश्च** ॥ **पुत्र इति** ॥ पुनातीति पुत्रः । पुन्नामा नरकः तस्मात् त्रायते इति तु व्युत्पत्त्यन्तरम् । **स्त्रीति** ॥ डित्वाट्टिलोपः । वलि लोपः । टित्त्वात् ङीप् । 'स्त्री योषिदबला योषा नारी सीमन्तिनी वधूः' इत्यमरः । **गुधृ** ॥ 'गुङ् अव्यक्ते शब्दे ।' 'गोत्रा भूगव्ययोर्गोत्रः शैले गोत्रं कुलाख्ययोः । सम्भावनीयबोधे च काननक्षेत्रवर्त्मसु' इति मेदिनी । 'सत्रमाच्छादने यज्ञे सदा दाने धनेऽपि च' इत्यमरः । 'सत्रं यज्ञसदादानाच्छादनारण्यकैतवे' इति मेदिनी । **हुयामा** ॥ होत्राशब्दः ऋत्विक्ष्वपि स्त्रीलिङ्ग इति 'होत्राभ्यश्छः' इति सूत्रे हरदत्तादयः । श्रूयते च । 'कारादद्धोत्राश्विनावाम्' इति । होत्रं हविः । 'यात्रा तु यातनेऽपि स्यात् गमनोत्सवयोः स्त्रियाम् । माला कर्णविभूषायां वित्ते माने परिच्छदे । अक्षरावयवे स्वल्पे क्लीबं कात्स्न्र्येऽवधारणे' इति च मेदिनी । 'कर्णशब्दग्रहौ श्रोत्रं श्रुतिः स्त्री श्रवणं श्रवः' इत्यमरः । 'भस्त्रा चर्मप्रसेविका' इति च । **गमेः** ॥ 'गात्रमङ्गे कलेबरे । स्तम्बेरमाग्रजङ्घादिविभागेऽपि समीरितम्' इति विश्वः । **चरेर्वृत्ते** ॥ **चारित्रमिति** ॥ इत्रप्रत्यये चरित्रमित्युक्तम् ।

६१२ । **अशित्रादिभ्य इत्रोत्रौ** । अशित्रम् । वहित्रम् । धरित्री मही । त्रैङ् एवमादिभ्य उत्रः । त्रोत्रं प्रहरणम् । वृञ् वरुत्रं प्रावरणम् ।

६१३ । **अमेर्द्विषति चित्** । अमित्रः शत्रुः ।

६१४ । **आः समिण्निकषिभ्याम्** । संपूर्वादिणो निपूर्वात्कषेश्च आ स्यात् । । स्वरादित्वादव्ययत्वम् । समया । निकषा ।

६१५ । **चितेः कणः कश्च** । बाहुलकादगुणः । चिक्कणं मसृणं स्निग्धम् ।

६१६ । **सूचेः स्मन्** । सूक्ष्मम् ।

६१७ । **पातेर्डुम्सुन्** । पुमान् ।

६१८ । **रुचिभुजिभ्यां किष्यन्** । रुचिष्यमिष्टम् । भुजिष्यो दासः ।

६१९ । **वसेस्तिः** । वस्तिर्नाभेरधो द्वयोः । वस्तयः स्युर्दशासूत्रे । बाहुलकात् शासः शास्तिः राजदण्डः । विन्ध्याख्यमगमगस्यतीत्यगस्तिः । शकन्ध्वादिः ।

६२० । **सावसेः** । स्वस्ति । स्वरादिपाठादव्ययत्वम् ।

६२१ । **वौ तसेः** । वितस्तिः ।

६२२ । **पदिप्रथिभ्यां नित्** । पत्तिः । प्रथितिः । तितुत्रेष्वग्रहादीनाम् (वा ४३१३) इतीट् ।

६२३ । **दृणातेर्ह्रस्वश्च** । दृतिः ।

---

न च तत एव प्रज्ञाद्यणा सिद्धे किमनेनेति वाच्यम् । स्वरे विशेषात् । **धरित्रीति** ॥ गौरादित्वान्ङीष् । **अमेः** ॥ इत्र एवानुवर्तते नोत्रः । **आः समिण** ॥ समयानिकषाशब्दौ समीपवाचकौ । बाहुलकाद्दुषेः दोषा । दिवेर्गुणाभावश्च । दिवा । स्वदेर्धश्च । स्वधा इत्यादि । अमरोक्तमाह । **चिक्कणमिति** ॥ **सूचेः** ॥ **सूक्ष्ममिति** ॥ णिलोपे कृते कुत्वादि । 'सूक्ष्मं स्यात्कण्टकेऽध्यात्मे पुंस्यणौ त्रिषु चाल्पके' इति मेदिनी । **पातेः** ॥ डित्वाट्टिलोपः । उकारनकारयोस्तु फलं 'पुंसोऽसुङ्' इति सूत्रेऽवोचाम । यत्तूज्ज्वलदत्तेनोक्तम् । उकार उच्चारणार्थ इति । तदाकरविरुद्धम् । 'पुंसोऽसुङ्' इति सूत्रे न्यासरक्षिताभ्यां पुनातेर्मक् सुन् ह्रस्वश्चेति पठितम् । पूञो डुम्सुन्नित्यन्ये । भाष्ये तु सूतेः सम्प्रसवे पुमानित्युक्तम् । 'उपेयप्रतिपत्त्यर्था उपाया अव्यवस्थिताः' इति तु तत्त्वम् । **रुचिभुजि** ॥ 'भुजिष्यस्तु स्वतन्त्रे च हस्तसूत्रकदासयोः । स्त्रियां दासीगणिकयोः' इति मेदिनी । **वसेस्तिः** ॥ 'वस्तिर्द्वयोर्निरूढे नाभ्यधोभूमिदशासु च' इति मेदिनी । 'अगस्तिः कुम्भयोनौ च वङ्गसेनतरौ पुमान्' इति च । **सावसेः** ॥ अस भुवि बहुलवचनान्न भूभावः । **वौ तसेः** ॥ 'अङ्गुष्ठे सकनिष्ठे स्याद्वितस्तिर्द्वादशाङ्गुलः' इत्यमरः । 'स्त्रीपुंसयोर्वितस्तिः स्यात्' इत्यमरमाला । **दृणातेः** ॥ 'दृतिश्चर्मपुटे

६२४ । **कृतॄकृपिभ्यः कीटन्** । किरीटं शिरोवेष्टनम् । तिरीटं सुवर्णम् । कृपीटं कुक्षिवारिणोः ।

६२५ । **रुचिवचिकुचिकुटिभ्यः कितच्** । रुचितमिष्टम् । उचितम् । कुचितं परिमितम् । कुटितं कुटिलम् ।

६२६ । **कुटिकुषिभ्यां क्मलम्** । कुट्मलम् । कुष्मलम् ।

६२७ । **कुषेर्लश्च** । कुल्मलं पापम् ।

६२८ । **सर्वधातुभ्योऽसुन्** । चेतः । सरः । पयः । सदः ।

६२९ । **रपेरत एच्च** । रेपोऽवद्यम् ।

६३० । **अशेर्देवने युट् च** । देवने स्तुतौ । यशः ।

६३१ । **उब्जेर्बले बलोपश्च** । ओजः ।

६३२ । **श्वेः संप्रसारणं च** । शवः । शवसी । बलपर्यायोऽयम् ।

---

मत्स्ये ना' इति मेदिनी । 'कृतॄकृपिकपिभ्यः' इति पठित्वा कृपीट इति चतुर्थमुदाहृतम् । 'कृपो रो ल.' इत्यत्र न्यासे तु कृकृपिभ्यामिति पठ्यते । अतस्तरतिरत्र प्रक्षिप्त इति कश्चित् । तरतेश्चेति पृथक् पठित्वा 'तिरीटः कूलवृक्षः' इति कश्चित् व्याख्यत् । **रुचिवचि** ॥ 'उचितं तु भवे न्यस्ते मिते जाते समञ्जसे' इति मेदिनी । 'कुड्मलो मुकुले पुंसि न द्वयोर्नरकान्तरे' इति मेदिनी । **कुटिकुषि** ॥ कुष्मलं छर्दनं विकसितमित्यन्ये । **सर्वधातुभ्योऽसुन्** ॥ दशपाद्यादिष्वसुन् इत्येव सूत्रम् । **सर इति** ॥ अयं स्त्रियामपि । गौरादित्वान्ङीष् । 'सरसी तु महासरः' इति शब्दार्णवः । महान्ति सरांसि सरस्य इति भाष्यम् । **पय इति** ॥ 'पीङ् पाने ।' 'पयः स्यात् क्षीरनीरयोः' इति मेदिनी । 'वर्च दीप्तौ ।' 'वर्चो नपुंसकं रूपे विष्ठायामपि तेजसि । पुंसि चन्द्रस्य तनये' इति मेदिनी । 'णभ हिंसायाम् ।' भौवादिकः क्रैयादिकश्च । 'तप सन्तापे', 'षह मर्षणे', 'मह पूजायाम्', 'तमु ग्लानौ', 'रञ्ज रागे' एभ्यः षड्भ्योऽसुनि सान्तम् । अच्कयोरदन्तमपि । 'नभन्तु नभसा सार्धन्तपन्तु तपसा सह । सहश्च सहसा सार्धं महश्च महसा सह । तमेन च तमः प्रोक्तं रजेनापि रजः समम्' इति द्विरूपकोशः । 'तपो लोकान्तरेऽपि च । चान्द्रायणादौ धर्मे च पुमान् शिशिरमाघयोः । सहो बले ज्योतिषि च पुंसि हेमन्तमार्गयोः' इति च मेदिनी । 'मह उत्सवतेजसोः' इति च । 'तमः क्लीबं गुणे शोके सैंहिकेयान्धकारयोः' इति रभसः । तमो ध्वान्ते गुणे शोके क्लीबं वा ना विधुन्तुदे' इति मेदिनी । नभोरजसी तु व्याख्यास्येते । रुदिर् 'रोदश्च रोदसी चापि दिवि भूमौ पृथक् पृथक् । सह प्रयोगेऽप्यनयो रोदस्यावपि रोदसी' इति विश्वः । 'वी गत्यादिषु ।' 'वयः पक्षिणि बाल्यादौ यौवने च नपुंसकम्' इति मेदिनी । 'अन प्राणने ।' अनो भक्तं तत्स्थानञ्च । 'अनोऽश्माय:सरसां जातिसंज्ञयोः' इति टचि तु अदन्तम् । 'पाकस्थानं महानसम्' इत्यमरः । **रेपोऽवद्यमिति** ॥ 'अरेपसा तन्वा' इति मन्त्रे निरवद्ययेति भाष्यम् । ओजो बले ।

६३३ । **श्रयतेः स्वाङ्गे शिरः किच्च** । श्रयतेः शिर आदेशोऽसुन् किच्च । शिरः । शिरसी ।

६३४ । **अर्तेरुच्च** । उरः ।

६३५ । **व्याधौ शुट् च** । अर्शो गुदव्याधिः ।

६३६ । **उदके नुट् च** । अर्तेरसुन्स्यात्तस्य च नुट् । अर्णः । अर्णसी ।

६३७ । **इण आगसि** । एनः ।

६३८ । **रिचेर्धने घिच्च** । चात्प्रत्ययस्य नुट् । घित्त्वात्कुत्वम् । रेक्णः सुवर्णम् ।

६३९ । **चायतेरन्ने ह्रस्वश्च** । चनो भक्तम् ।

६४० । **वृङ्शीङ्भ्यां रूपस्वाङ्गयोः पुट् च** । वर्पो रूपम् । शेपो गुह्यम् ।

६४१ । **स्रुरीभ्यां तुट् च** । स्रोतः । रेतः ।

६४२ । **पातेर्बले जुट् च** । पाजः । पाजसी ।

---

'ओजो दीप्ताववष्टम्भे प्रकाशबलयोरपि' इति मेदिनी । **श्रयतेः** ॥ 'उत्तमाङ्गं शिरः शीर्षम्' इत्यमरः । शृणातेर्घञर्थे कप्रत्यये अदन्तोऽपि 'शिरोवाची शिरोऽदन्तो रजोवाची रजस्तथा' इति कोशान्तरम् । 'पिण्डं दद्यात् गयाशिरे' इति वायवीये । 'कुण्डलोद्घृष्टगण्डानां कुमाराणां तरस्विनाम् । निचकर्त शिरान्द्रौणिर्नालेभ्य इव पङ्कजान्' इति महाभारतम् । **अर्तेः** ॥ 'उरो वत्सं च वक्षश्च' इत्यमरः । **रिचेः** ॥ इह दशपादीवृत्तौ तु नुट् नानुवर्तितः । रेकः रेकसी इत्युदाहृतञ्च । तन्न । उत्तरसूत्रे नुडनुवृत्तेर्निर्विवादत्वात् मण्डूकप्लुतौ मानाभावात् लक्ष्यविसंवादाच्च । उज्ज्वलदत्तेन तु 'रिचेर्धने चित्किच्च' इति पठित्वा नुटं चानुवर्त्य कित्त्वात् गुणाभावे नुटश्चुत्वेन अकारे रिञ्चमिति साधितम् । तदपि न । उक्तोदाहरणस्य लोकवेदयोरप्रसिद्धत्वात् । 'नित्यं रेक्णे अमर्त्यः । परिषद्यं ह्यरणस्य रेक्णः । रेक्णः स्वल्पभिया वाममेति' इत्यादिमन्त्रेषु रेक्ण इति शब्दस्य प्रसिद्धत्वात् । वैदिकनिघण्टौ च सुवर्णपर्यायेषु तथा पाठात् । वेदभाष्यादिषु प्रकृतसूत्रेणैव तस्य साधितत्वाच्च रेक्ण इति प्रयोग एव साधीयानिति दिक् । **चायतेः** ॥ चनो दधिष्वपचतः । सुनेदधिष्वनश्चनः । इत्यादिमन्त्रेषु चनशब्दः प्रसिद्धः । एतेन चणोऽन्नमित्युदाहृत्य बाहुलकाण्णत्वमिति वदन्तो दशपादीवृत्तिकारास्तदनुगाः प्रसादकारादयश्च परास्ताः । **वर्पो रूपमिति** ॥ 'ग्मन्छिश्नदेवा अभिवर्पसाभूः' इत्यादिमन्त्रेषु प्रसिद्धमिदम् । 'शेपः स्याद्वृषणं पेलम्' इति सुभूतिचन्द्रः । अकारान्तोऽप्ययमिति 'शेपपुच्छलाङ्गूलेषु शुनः' इत्यत्रावोचाम । 'शेपःशेपौ च शेफश्च शेफं प्रोक्तश्च शेफसा' इति द्विरूपकोशः । **स्रुरीभ्याम्** ॥ 'स्रोतोऽम्बुवेगेन्द्रिययोः' इति विश्वः । 'रेतः शुक्रे पारदे च' इति मेदिनी । **पातेर्बले** ॥ चवर्गतृतीयादिः । उज्ज्वलदत्तस्तु युट् चेत्यन्तस्थादिं पपाठ । तन्न । 'विपाजसा

६४३। **उदके थुट् च**। पाथः।

६४४। **अन्ने च**। पाथो भक्तम्।

६४५। **अदेर्नुम्धौ च**। अदेर्भक्ते वाच्येऽसुन्नुमागमो धादेशश्च। अन्धोऽन्नम्।

६४६। **स्कन्देश्च स्वाङ्गे**। स्कन्धः—स्कन्धसी।

६४७। **आपः कर्माख्यायाम्**। कर्माख्यायां ह्रस्वो नुट् च वा। अप्नः। अपः। बाहुलकात् आपः आपसी।

६४८। **रूपे जुट् च**। अब्जो रूपम्।

६४९। **उदके नुम्भौ च**। अम्भः।

६५०। **नहेर्दिवि भश्च**। नभः।

६५१। **इण आगोऽपराधे च**। 'आगः पापापराधयोः'।

६५२। **अमेर्हुक्च**। अंहः।

६५३। **रमेश्च**। रंहः।

६५४। **देशे ह च**। रमन्तेऽस्मिन्रहः।

---

पृथुना। पृथुपाजा अमर्त्यः' इत्यादिमन्त्रतद्भाष्यविरोधात्। **अदेः**॥ 'भिस्सा स्त्री भक्तमन्धोऽन्नम्' इत्यमरः। 'द्विजातिशेषेण यदेतदन्धसा' इति भारविः। 'समन्धसा समदः पृष्ठ्येन' इति श्रुतिः। **स्कन्देश्च**॥ असुन् धश्चान्तादेशः। **आपः कर्माख्यायाम्**॥ असुन्। ह्रस्वश्च धातोः। प्रत्ययस्य नुडागमस्तु वा। 'अप्नस्वतीमश्विना। अपांसि यस्मिन्नधिसन्दधुः।' बाहुलकादित्युपलक्षणम्। ह्रस्वनुटौ वा स्त इति व्याख्यानादित्यपि बोध्यम्। तथा च ब्रुवते 'कतमेऽपि नपुंसकमापः' इति कोशमुदाहृत्य 'सर्वमापोमयञ्जगत्' इति प्रयोगो दुर्घटवृत्तौ समर्थितः। **रूपे**॥ आप्नोतेरसुन् ह्रस्वत्वञ्च धातोः प्रत्ययस्य जुट् चेत्यर्थः। **अब्ज इति**॥ 'झलाञ्जश् झशि' इति पकारस्य बकारः। **नहेः**॥ 'नभो व्योम्नि नभो मेघे श्रावणे च पतद्ग्रहे। घ्राणे मृणालसूत्रे च वर्षासु च नभः स्मृतम्' इति विश्वः। 'नभः क्लीबं व्योम्नि पुमान्। घने श्रावणवर्षासु बिसतन्तौ पतद्ग्रहे' इति मेदिनी। 'नभन्तु नभसा सार्द्धम्' इति द्विरूपकोशादकारान्तोऽपि। विश्वोक्तिमाह। **आग इति**॥ **अमेः**॥ अमन्ति गच्छन्त्यधोऽनेनेत्यंहो दुरितम्। **रमेश्च**॥ रंहो वेगः। अहिरहिभ्यामसुना सिद्धेऽघिरघिभ्यामसनि अङ्घो रङ्घः इति माभूदिति सूत्रद्वयमिति गोवर्द्धनः। तथा च 'स्यान्मध्योष्मचतुर्थत्वमंहसो रंहसस्तथा' इति द्विरूपकोशः। एवञ्च 'दत्तार्घाः सिद्धसङ्घैर्विदधतु घृणयः शीघ्रमङ्घोविघातम्' इति। 'रङ्घः सङ्घः सुराणाञ्जगदुपकृतये नित्ययुक्तस्य यस्य स्तौति प्रीतिप्रसन्नोऽन्वहमहिमरुचेः सोऽवतात् स्यन्दनो वः' इति घकारपाठोऽनुप्रासरसिकानां प्रामादिक इति वदन्ति। **देशे ह च**॥

६५५ । **अञ्च्यञ्जियुजिभृजिभ्यः कुश्च ।** एभ्योऽसुन्कवर्गश्चान्तादेशः । 'अङ्कश्चिह्नशरीरयोः' । अङ्गः पक्षी । योगः समाधिः । भर्गस्तेजः ।

६५६ । **भूरञ्जिभ्यां कित् ।** भुवः । रजः ।

६५७ । **वसेर्णित् ।** वासो वस्त्रम् ।

६५८ । **चन्देरादेश्च छः ।** छन्दः ।

६५९ । **पचिवचिभ्यां सुट् च ।** 'पक्षसी तु स्मृतौ पक्षौ' । वक्षो हृदयम् ।

६६० । **वहिहाधाञ्भ्यश्छन्दसि ।** वक्षा अनड्वान् । हासाश्चन्द्रः । धासाः पर्वत इति प्राञ्चः । वस्तुतस्तु णिदित्यनुवर्तते न तु सुट् । तेन वहेरुपधावृद्धिः । इतरयोः 'आतो युक्–' (सू २७६१) इति युक् । 'शोणा धृष्णू नृवाहसा' । 'श्रोता हवं गृणतः स्तोमवाहाः' । 'विश्वो विहायाः ।' 'वाजम्भरो विहायाः' । 'देवो नयः पृथिवीं विश्वधायाः' । 'अधारयत्पृथिवीं विश्वधायसम्' । 'धर्णसं भूरिधायसम्' इत्यादि ।

६६१ । **इण आसिः ।** अयाः वह्निः । स्वरादिपाठादव्ययत्वम् ।

६६२ । **मिथुनेऽसिः पूर्ववच्च सर्वम् ।** उपसर्गविशिष्टो धातुर्मिथुनं तत्रासुनोऽपवादोऽसिः स्वरार्थः । यस्य धातोर्यत्कार्यम् असुनप्रत्यये उक्तं तदत्रापि भवतीत्यर्थः । अशेर्देवने युट् चेत्यादि सुयशाः ।

६६३ । **नञि हन एह च ।** अनेहाः । अनेहसौ ।

६६४ । **विधाञो वेध च ।** विदधातीति वेधाः ।

---

'रहस्तत्त्वे रते गुह्ये' इति मेदिनी । **अञ्च्यञ्जियुजि ॥** अङ्कः–अङ्कसी–अङ्कांसि । अङ्गः–अङ्गसी–अङ्गांसि । योगः–योगसी–योगांसि । 'उच समवाये ।' अस्मादसुनि बाहुलकात् कुत्वं, न्यङ्क्वादित्वाद्वा । 'ओकः आश्रयमात्रेऽपि मन्दिरेऽपि नपुंसकम्' इति मेदिनी । **भूरञ्जिभ्याम् ॥** भुवः अन्तरिक्षम् । षष्ठ्यन्तप्रतिरूपकमव्ययमिदम् । रजो रेणुः । 'रजः क्लीबं गुणान्तरे । आर्तवे च परागे च रेणुमात्रेऽपि दृश्यते' इति मेदिनी । घञर्थे कप्रत्यये तु अकारान्तोऽप्ययम् । 'रजोऽयं रजसा सार्द्धं स्त्रीपुष्पगुणधूलिषु' इत्यजयकोशः । विरजां नदीम् । विरजां दीक्षामिति । **चन्देरादेश्च छः ॥ छन्द इति ॥** 'छन्दः पद्यप्रभेदेऽपि स्वैराचाराभिलाषयोः' इति मेदिनी । अकारान्तोऽपि । 'अभिप्रायवशौ छन्दौ' इत्यमरद्विरूपकोशौ । **पचिवचिभ्याम् ॥** पक्षः–पक्षसी–पक्षांसि । अनीकाधिकरणे 'पूर्वोत्तरे द्वे पक्षसी' इति शबरस्वाम्यादयः । माधवस्तु 'पक्ष परिग्रहे' इत्यस्मादसुन् । पक्षः । छदिः संवत्सरार्धश्चेत्याह । **वहिहा ॥** अत्र पूर्वसूत्रात्सुटमनुवर्तयतां उज्ज्वलदत्तादीनां मतेनोदाहरणमाह । **वक्षा इत्यादि ॥ प्राञ्च इति ॥** सकलवृत्तिकृतः प्रसादकारादयश्चेत्यर्थः । एतच्चायुक्तम् । उक्तोदाहरणानीह तावल्लोके दृश्यन्ते । न च सम्भवन्ति । छन्दसीति सूत्रात् । वेदे तु विपरीतमेवास्तीत्याह । **वस्तुतस्त्विति ॥** वेदभाष्यकाराश्चेह साक्षिण इत्यवधेयम् । **मिथुनेऽसिः ॥** सुपयाः सुस्रोताः इत्याद्युदाहरणम् । **विधाञः ॥** 'वेधाः पुंसि हृषीकेशे

६६५। **नुवो धुट् च**। नोधाः ऋषिः।

६६६। **गतिकारकोपपदयोः पूर्वपदप्रकृतिस्वरत्वं च**। असिः स्यात्। सुतपाः। जातवेदाः। 'गतिकारकोपपदात्कृत्' (सू ३८७३) इत्युत्तरपदप्रकृतिस्वरत्वे सति शेषस्यानुदात्तत्वे प्राप्ते तदपवादार्थमिदम्।

६६७। **चन्द्रे मो डित्**। चन्द्रोपपदान्माङोऽसिः स्यात्स च डित्, चन्द्रमाः।

६६८। **वयसि धाञः**। वयोधास्तरुणः।

६६९। **पयसि च**। पयोधाः समुद्रो मेघश्च।

६७०। **पुरसि च**। पुरोधाः।

६७१। **पुरूरवाः**। पुरुशब्दस्य दीर्घो रौतेरसिश्च निपात्यते।

६७२। **चक्षेर्बहुलं शिच्च**। नृचक्षाः।

६७३। **उषः कित्**। उषः।

६७४। **दमेरुनसिः**। 'सप्तार्चिर्दमुनाः'।

६७५। **अङ्गतेरसिरिरुडागमश्च**। अङ्गिराः।

६७६। **सर्तेरप्पूर्वादसिः**। अप्सराः। प्रायेणायं भूम्नि। अप्सरसः।

---

बुधे च परमेष्ठिनि' इति मेदिनी। **नोधा इति**॥ 'सद्योभुवद्वीर्याय नोधाः' इति मन्त्रे, नोधा ऋषिर्भवतीति निरुक्तम्। नवं दधातीति तु नैरुक्तं व्युत्पत्त्यन्तरं बोध्यम्। अत्र स्वरसूत्रम् 'गतिकारकयोः पूर्वपदप्रकृतिस्वरत्वञ्च' इति कृदुत्तरपदप्रकृतिस्वरापवादोऽयम्। **चन्द्रे**॥ चन्द्रं रजतम् अमृतञ्च, तदिव मीयते असौ चन्द्रमाः इति हरदत्तः। **पुरसि च**॥ 'पुरोधास्तु पुरोहितः' इत्यमरः। 'पुरूरवाः बुधसुतो राजर्षिश्च पुरूरवाः' इत्यपि। 'विद्यात्पुरूरवःशब्दे रुकारस्यापि दीर्घताम्' इति द्विरूपकोशः। **नृचक्षा इति**॥ शिच्चेत्युक्ते सार्वधातुकसंज्ञा। अतः ख्याञ् न। उषः कित्। दशपाद्यान्तु वसः किदिति पाठः। 'वसति सूर्येण सहेत्युषा। अपो भीति सूत्रे उषसश्चेष्यते' इति वार्तिकस्य समुषद्भिरित्युदाहरणं विवृण्वद्भिर्हरदत्तादिभिरयं पाठः पुरस्कृतः। **दमेरुनसिः**॥ 'सप्तार्चिर्दमुनः शुक्रः' इत्यमरः। पक्षे 'अन्येषामपि दृश्यते' इति दीर्घः। जुष्टो दमूनाः। दमूनसङ्गृहपतिं वरेण्यम्। दशपाद्यां तु सूत्रे दीर्घः पठ्यते। तन्मते पक्षे ह्रस्वो बाहुलकाद्बोध्यः। **प्रायेणेति**॥ 'स्त्रियां बहुष्वप्सरसः' इत्यमरः। 'स्त्रियां बहुष्वप्सरसः स्यादेकत्वेऽप्सरा अपि' इति शब्दार्णवः। 'अप्सरस्त्वप्सराः प्रोक्ताः सुमनाः सुमनःसु च' इति द्विरूपकोशः 'एकाप्सरःप्रार्थितयोर्विवादः' इति

६७७ । **विदिभुजिभ्यां विश्वे** । विश्ववेदाः । विश्वभोजाः ।

६७८ । **वशेः कनसिः** । संप्रसारणम् । उशनाः ।

॥ इत्युणादिषु चतुर्थः पादः ॥

## ॥ अथ उणादिषु पञ्चमः पादः ॥

६७९ । **अदि भुवो डुतच्** । अद्भुतम् ।

६८० । **गुधेरूमः** । गोधूमः ।

६८१ । **मसेरूरन्** । मसूरः । प्रथमे पादे असेरुरन्, '**मसेश्च**' इत्यत्र व्याख्यातः ।

६८२ । **स्थः किच्च** । स्थूरो मनुष्यः ।

६८३ । **पातेरतिः** । पातिः स्वामी । संपातिः पक्षिराजः ।

६८४ । **वातेर्नित्** । 'वातिरादित्यसोमयोः' ।

६८५ । **अर्तेश्च** । अरतिरुद्वेगः ।

६८६ । **तृहेः क्नो हलोपश्च** । तृणम् ।

६८७ । **वृञ्लुटितनिताडिभ्य उलच् तण्डश्च** । व्रियन्ते लुट्यन्ते तन्यन्ते ताड्यन्त इति वा तण्डुलाः ।

६८८ । **दंसेष्टटनौ न आ च** । 'दासः सेवकशूद्रयोः' ।

---

रघुः । **विदिभुजिभ्याम्** ॥ विश्वे । शब्दस्वरूपपरत्वात्स्मिन्नादेशो न कृतः । उदाहरणं विश्वं वेत्ति विन्दति भुङ्क्ते इति विग्रहः । अत्रोज्ज्वलदत्तेन विश्ववेदा अग्निः । विश्वभोजा इन्द्रः । 'तत्पुरुषे कृति' इति सप्तम्या अलुगित्युक्तम् । तन्न, तथा सति स्मिन्नादेशस्य दुर्वारत्वापत्तेः । 'सुमृलीको भवतु विश्ववेदाः । पूषा भगः प्रभृथे विश्वभोजा' इत्यादिमन्त्रेषु सुपो लुक एव दर्शनात् वृत्त्यन्तरेषु तथैवोदाहरणाच्च । **वशेः** ॥ 'वश कान्तौ ।' 'उशना भार्गवः कविः' इत्यमरः ॥

॥ इत्युणादिषु चतुर्थः पादः ॥

**अद्भुतमिति** ॥ अत् इत्यव्ययमाकस्मिकार्थे । तस्मिन्नुपपदे भुवः डुतच्प्रत्ययः । गुध्यते परितो वेष्ट्यते प्राणिभिरिति गोधूमः । 'गोधूमो नागरङ्गे स्याद्दोषधीव्रीहिभेदयोः' इति मेदिनी । **मसेः** ॥ 'मसी परिणामे ।' **स्थूरो मनुष्य इति** ॥ 'स्थूरस्य रायो बृहतो यईशे' इति मन्त्रे तु योगपुरस्कारात् स्थिरस्य इत्यर्थः । रभसकोशस्थमाह । **वातिरिति** ॥ **वृञ्लुटि** ॥ यद्यपि 'सानसिवर्णसि' इति सूत्रे तण्डुलशब्दो निपातितः । तथापि प्रत्ययस्वरेण मध्योदात्तः सः । अयं तु चित्स्वरेणान्तोदात्त इति विवेकः । **दंसेः** ॥ 'दासः शूद्रे दानपत्रे भृत्यधीवरयोरपि'

६८९। दंशेश्च। दाशो धीवरः।

६९०। उदि चेर्डैसिः। स्वरादिपाठादव्ययत्वम्। उच्चैः।

६९१। नौ दीर्घश्च। नीचैः।

६९२। सौ रमेः क्तो दमे पूर्वपदस्य च दीर्घः। रमेः सुपूर्वाद्दमे वाच्ये क्तः स्यात्। कित्त्वादनुनासिकलोपः। सूरत उपशान्तो दयालुश्च।

६९३। पूञो यण्णुग्घ्रस्वश्च। यत्प्रत्ययः। पुण्यम्।

६९४। स्रंसेः शि कुट् किच्च। स्रंसतेः शिरादेशो यत्प्रत्ययः कित्तस्य कुडागमश्च। शिक्यम्।

६९५। अर्तेः क्युरुच्च। उरणो मेषः।

६९६। हिंसेरीरन्नीरचौ। हिंसीरो व्याघ्रदुष्टयोः।

६९७। उदि दृणातेरजलौ पूर्वपदान्त्यलोपश्च। उदरम्।

६९८। डित्खनेर्मुट् स चोदात्तः। अजल् च डित्स्याद्धातोर्मुट् स चोदात्तः। मुखम्।

६९९। अमेः सन्। अंसः।

७००। मुहेः खो मूर् च। मूर्खः।

७०१। नहेर्हलोपश्च। नखः।

७०२। शीङो ह्रस्वश्च। शिखा।

७०३। माङ ऊखो मय् च। मयूखः।

७०४। कलिगलिभ्यां फगस्योच्च। कुल्फः शरीरावयवो रोगश्च। गुल्फः पादग्रन्थिः।

---

इति विश्वः। **दंशेश्च**॥ 'कैवर्ते दाशधीवरौ' इत्यमरः। **पूञः**॥ 'पुण्यं मनोज्ञेऽभिहितं तथा सुकृतधर्मयोः' इति विश्वः। **अर्तेः**॥ 'मेढ्रोरभ्रोरणोर्णायुमेषवृष्णय एडके' इत्यमरः। **डित्खनेः**॥ 'मुखं निःसरणे वक्त्रे प्रारम्भोपाययोरपि' इति विश्वः। सन्ध्यन्तरे नाटकादेः शब्देऽपि च नपुंसकम्' इति मेदिनी। **अमेः सन्**॥ 'स्कन्धो भुजशिरोंऽसो स्त्री' इत्यमरः। 'अंसः स्कन्धविभागे च' इति दन्त्यान्ते विश्वः। **मुहेः**॥ 'अज्ञे मूढयथाजातमूर्खवैधेय-बालिशाः' इत्यमरः। **नहेः**॥ 'नखः कररुहे शण्ढे गन्धद्रव्ये नखं नखी' इति विश्वः। 'नखी स्त्रीक्लीबयोः शुक्तौ नखरे पुन्नपुंसकम्' इति मेदिनी। **शीङः**॥ ह्रस्वविधिसामर्थ्याद्गुणो न। 'शिखाशाखाबर्हिचूडालाङ्गुलिष्वग्रमात्रके। चूडामात्रे शिफायाञ्च ज्वालायां प्रपदेऽपि च' इति मेदिनी। **माङः**॥ 'मयूखस्त्विट्करज्वालासु' इत्यमरः। **गुल्फ इति**॥ 'तद्ग्रन्थी घुटिके

७०५ । **स्पृशेः श्वण्शुनौ पृ च** । श्वण्शुनौ प्रत्ययौ 'पृ' इत्यादेशः । पार्श्वम् 'पार्श्वोऽस्त्री कक्षयोरधः' । पर्शुरायुधम् ।

७०६ । **श्मनि श्रयतेर्डुन्** । श्मञ्छब्दो मुखवाची । मुखमाश्रयत इति श्मश्रु ।

७०७ । **अश्वादयश्च** । अश्रु नयनजलम् ।

७०८ । **जनेष्टन्लोपश्च** । जटा ।

७०९ । **अचतस्य जङ्घ च** । तस्य जनेर्जङ्घादेशः स्यादच्च । जङ्घा ।

७१० । **हन्तेः शरीरावयवे द्वे च** । जघनम् । 'पश्चान्नितम्बः स्त्रीकट्याः क्लीबे तु जघनं पुरः' ।

७११ । **क्लिशेरन्लो लोपश्च** । लकारस्य लोपः । केशः ।

७१२ । **फलेरितजादेश्च पः** । पलितम् ।

७१३ । **कृञादिभ्यः संज्ञायां वुन्** । करकः-करका । कटकः । नरकम्—नरकः । 'नरको नारकोऽपि च' इति द्विरूपकोशः । सरकं गगनम् । कोरकः । कोरकं च ।

---

गुल्फौ' इत्यमरः । तयोः पादयोर्ग्रन्थी इत्यर्थः । **स्पृशेः** ॥ 'पार्श्वङ्कक्षाधरे चक्रोपान्ते पर्शुगणेऽपि च' इति विश्वमेदिन्यौ । **श्मनि** ॥ 'तद्वृद्धौ श्मश्रु पुंमुखे' इत्यमरः । पुरुषस्य मुखे तेषां रोम्णां वृद्धौ श्मश्रुशब्दो वर्तते इत्यर्थः । **अश्वादयश्च** ॥ 'अशू व्याप्तौ ।' रुन्प्रत्ययः । नञ्पूर्वात् श्रयतेर्डुन् वा । यत्तु अश्नोतेर्डुन् रुट् चेत्युज्ज्वलदत्तेनोक्तं, तन्न । धातुलोपापत्तेः । तदभावोऽपि निपात्यत इति चेत् । तर्हि डित्त्वोत्प्रेक्षणं निष्फलमिति दिक् । **जनेष्टन् लोपश्च** ॥ अलोऽन्त्यस्य । 'जटा लग्नकचे मूले मांस्यां लक्षे पुनर्जटी' इति मेदिनी । **हन्तेः** ॥ चादच् अभ्यासकार्यम् । 'अभ्यासाच्च' इति कुत्वम् । अमरोक्तिमाह । **पश्चादिति** ॥ 'जघनञ्च स्त्रियाः श्रोणिपुरोभागे कटावपि' इति मेदिनी । **क्लिशेः** ॥ 'केशः स्यात् पुंसि वरुणे कुबेरे कुन्तलेऽपि च' इति मेदिनी । 'पलितञ्जरसा शौक्ल्यं केशादौ' इत्यमरः । **कृञादिभ्यः** ॥ 'करकस्तु पुमान् पक्षिविशेषे दाडिमेऽपि च । द्वयोर्मेघोपले न स्त्री करके च कमण्डलौ' इति मेदिनी । **कटक इति** ॥ 'क्वुन् शिल्पिसंज्ञयोः' इति क्वुनाप्ययं सिद्धः । गुणभाज इहैवोदाहार्याः । गुणनिषेधभाजस्तु क्वुनि । उदासीनास्तु यत्र कुत्रचिदिति भावः । 'नॄ नये ।' 'नरकः पुंसि निरये देवारातिप्रदेशयोः' इति मेदिनी । उदयनाचार्यास्तु न नरकाण्येव सन्तीति क्लीबं प्रयुञ्जते । तत्र मूलं मृग्यम् । 'सृ गतौ ।' 'सरकोऽस्त्री शीधुपात्रे शीधुपानेक्षुशीधुनोः' इति मेदिनी । 'कुर शब्दे ।' 'कोरकोऽस्त्री कुड्मले स्यात् कक्कोलकमृणालयोः' इति मेदिनी । 'विचकार कोरकाणि' इति माघः । 'कोरकः पुमान्' इत्यमरस्य

७१४। **चीकयतेराद्यन्तविपर्ययश्च**। कीचको वंशभेदः।

७१५। **पचिमच्योरिच्चोपधायाः**। पेचकः। मेचकः।

७१६। **जनेररष्ठ च**। जठरम्।

७१७। **वचिमनिभ्यां चिच्च**। वठरो मूर्खः। 'मठरो मुनिशौण्डयोः'। बिदादित्वान्माठरः। गर्गादित्वान्माठर्यः।

७१८। **ऊर्जि दृणातेरलचौ पूर्वपदान्तलोपश्च**। 'ऊर्दरः शूररक्षसोः'।

७१९। **कृदरादयश्च**। कृदरः कुसूलः। मृदरं विलसत्। सृदरः सर्पः।

७२०। **हन्तेर्युनाद्यन्तयोर्घत्वतत्वे**। घातनो मारकः।

७२१। **क्रमिगमिक्षमिभ्यस्तुन्वृद्धिश्च**। क्रान्तुः पक्षी। गान्तुः पथिकः। क्षान्तुर्मशकः।

७२२। **हर्यतेः कन्यन्हिरच्**। कन्यन्प्रत्ययः। हिरण्यम्।

७२३। **कृञः पासः**। कर्पासः। बिल्वादित्वात्कार्पासं वस्त्रम्।

७२४। **जनेस्तु रश्च**। जर्तुर्हस्ती योनिश्च।

७२५। **ऊर्णोतेर्डः**। ऊर्णा।

७२६। **दधातेर्यन्नुट् च**। धान्यम्।

७२७। **जीर्यतेः क्रिन्रश्च वः**। 'जिव्रिः स्यात्कलपक्षिणोः'। बाहुलकात् 'हलि च' (सू ३५४) इति दीर्घो न।

७२८। **मव्यतेर्यलोपो मश्चापतुट् चालः**। मव्यतेरालप्रत्ययः स्यात्तस्यापतुडागमो धातोर्यलोपो मकारश्चान्त्यस्य। ममापतालो विषये।

---

प्रमादः। अपवरकावरकादयोऽपीहैव बोध्याः। **चीकयतेः**॥ बाहुलकबललब्धोऽयमर्थः। एवमनुपदं वक्ष्यमाणं पचिमच्योरित्यपि बोध्यम्। 'कीचको दैत्यभिद्वाताहतसस्वनवंशयोः। पेचको गजलाङ्गूलमूलोपान्ते च कौशिके। मेचकस्तु मयूरस्य चन्द्रके श्यामले पुमान्। तद्युक्ते वाच्यवत् क्लीबं स्रोतोऽञ्जनान्धकारयोः' इति मेदिनी। **जनेः**॥ 'जठरः कठिनोऽपि स्यात्' इत्यमरः। जठरो न स्त्रियां कुक्षौ बद्धकर्कटयोस्त्रिषु' इति मेदिनी। **वचि**॥ 'वठरः कुक्कुटे वण्टे शठे च' इति मेदिनी। **ऊर्जि**॥ 'तमूर्दरत्नपृणतायनेन' इति मन्त्रः। **हर्यतेः**॥ 'हर्य गतिकान्त्योः।' हिरण्यं रेतसि द्रव्ये शातकुम्भवराटयोः। अक्षये मानभेदे स्यादकुप्ये च नपुंसकम्' इति मेदिनी। **जनेः**॥ तु इत्यविभक्तिकम्। तुप्रत्ययः। रेफश्चान्तादेशः। **ऊर्णोतेः**॥ 'ऊर्णा मेषादिलोम्नि स्यादावर्ते चान्तरा भ्रुवोः' इत्यमरः। भ्रुवोर्मध्ये य आवर्तस्तत्रेत्यर्थः। 'अन्तरान्तरेण' इति द्वितीया। **दधातेः**॥ 'धान्यं व्रीहिषु धान्याके' इति

७२९ । **ऋजेः कीकन्** । ऋजीक इन्द्रो धूमश्च ।

७३० । **तनोतेर्डउः सन्वच्च** । 'तितउः पुंसि क्लीबे च' ।

७३१ । **अर्भकपृथुकपाका वयसि** । 'ऋधु वृद्धौ' । अतो वुन् । भकारश्चान्तादेशः । प्रथेः कुकन्संप्रसारणं च । पिबतेः कन् ।

७३२ । **अवद्यावमाधमार्वरेफाः कुत्सिते** । वदेर्नञि यत् । अवद्यम् । अवतेरमः । बस्य पक्षे धः । अवमः । अधमः । अर्तेर्वन् । अर्वा । रिफतेस्तौदादिकात् अः रेफः ।

७३३ । **लीरीङोर्ह्रस्वः पुट् च तरौ श्लेषणकुत्सनयोः** । तरौ प्रत्ययौ क्रमात्स्तो धातोर्ह्रस्वः प्रत्ययस्य पुट् । लिप्तं श्लिष्टम् । रिप्रं कुत्सितम् ।

७३४ । **क्लिशेरीच्चोपधायाः कन्लोपश्च लो नाम्च** । क्लिशेः कन्स्यादुपधाया ईत्वं लस्य लोपो नामागमश्च । कीनाशो यमः । कित्त्वफलं चिन्त्यम् ।

७३५ । **अश्नोतेराशुकर्मणि वरट् च** । चकारादुपधाया ईत्वम् । ईश्वरः ।

७३६ । **चतेरुरन्** । चतुरः ।

७३७ । **प्रा (प्रे ऽ) ततेररन्** । प्रातः ।

७३८ । **अमेस्तुट् च** । अन्तर्मध्यम् ।

---

मेदिनी । **तनोतेः** ॥ 'चालनी तितउः पुमान्' इत्यमरः । 'चालनं तितउन्युक्तम्' इति कोशान्तरम् । 'तितउ परिपवनं भवति' इति पस्पशायां भाष्यम् । 'स्याद्रास्तु हिङ्गु तितउः' इति पुंनपुंसकवर्गे त्रिकाण्डशेषः । **अर्भक** ॥ 'अर्भकः कथितो बाले मूर्खेऽपि च कृशेऽपि च । पृथुकः पुंसि चिपिटे शिशौ स्यादभिधेयवत् । पाकः परिणते शिशौ । केशस्य जरसा शौक्ल्ये स्थाल्यादौ पचनेऽपि च' इति मेदिनी । **अवद्य** ॥ 'निकृष्टप्रतिकृष्टार्वरेफयाप्यावमाधमाः । विपूयकुत्सितावद्यखेटगर्ह्याणकाः समाः' इति सर्वत्रामरः । 'अधमः स्याद्गर्ह्ये ऊनेऽपि' इति मेदिनी । 'अर्वा तुरङ्गमे पुंसि कुत्सिते वाच्यलिङ्गकः । रेफो रवर्णे पुंसि स्यात् कुत्सिते पुनरन्यवत्' इति च । **लीरीङोः** ॥ 'लिप्तं विषाक्ते भुक्ते च वाच्यवत् स्याद्विलेपितः' इति विश्वः । **क्लिशेः** ॥ 'कीनाशः कर्षकक्षुद्रोपांशुघातिषु वाच्यवत् । यमे ना' इति मेदिनी । **ईश्वर इति** ॥ स्त्रियां टित्त्वात् ङीप् । ईश्वरी मध्योदात्ता । वनिपि ङीब्रयोस्तु आद्युदात्ता । पुंयोगलक्षणे ङीषि अन्तोदात्ता । 'स्थेशभास' इति वरजन्तादपि तु ईश्वरेति विवेकः । 'ईश्वरो मन्मथे शम्भौ नाथे स्वामिनि वाच्यवत् । ईश्वरी चेश्वरोमायाम्' इति मेदिनी । 'ईश्वरः शङ्करेऽधीशे तत्पत्न्यामीश्वरीश्वरा' इति वोपालितः । विन्यस्तमङ्गलमहौषधिरीश्वरायाः' इति भारविः । दशपाद्यान्तु सूत्रान्तरमपि । "हन्तेरन् घश्च" रन्प्रत्ययः स्यात् घश्चादेशः । हन्यते गम्यतेऽतिथिभिः घरः गृहम् । **प्रातरिति** ॥ 'अत सातत्यगमने ।' प्रपूर्वः ।

७३९ । **दहेर्गो लोपो दश्च नः** । गप्रत्ययो धातोरन्त्यस्य लोपो दकारस्य नकारः । नगः ।

७४० । **सिचेः संज्ञायां हनुमौ कश्च** । सिञ्चतेः कप्रत्ययो हकारादेशो नुम्च स्यात् । सिंहः ।

७४१ । **व्याङि घ्रातेश्च जातौ** । कप्रत्ययः स्यात् । व्याघ्रः ।

७४२ । **हन्तेरच्घुर च** । घोरम् ।

७४३ । **क्षमेरुपधालोपश्च** । चादच् । क्ष्मा ।

७४४ । **तरतेर्ड्रिः** । त्रयः । त्रीन् ।

७४५ । **ग्रहेरनिः** । ग्रहणिः । ङीष् । ग्रहणी व्याधिभेदः ।

७४६ । **प्रथेरमच्** । प्रथमः ।

७४७ । **चरेश्च** । चरमः ।

७४८ । **मङ्गेरलच्** । मङ्गलम् ।

॥ इत्युणादिषु पञ्चमः पादः ॥

---

स्वरादिपाठादव्ययत्वम् । **दहेः** ॥ 'नगो महीरुहे शैले भास्करे पवनाशने' इति मेदिनी । **सिचेः** ॥ 'सिंहः कण्ठीरवे राशौ सत्तमे चोत्तरस्थिते । सिंही क्षुद्रबृहत्योः स्याद्वासके राहुमातरि' इति विश्वः । 'हिंसेर्वर्णव्यत्ययतः सिंहः' इति व्युत्पत्त्यन्तरम् । **व्याङि** ॥ 'व्याघ्रः स्यात्पुंसि शार्दूले रक्तैरण्डकरञ्जयोः । श्रेष्ठेनराद्युत्तरस्थः कण्टकार्यांच योषिति' इति मेदिनी । **हन्तेः** ॥ 'घोरं भीमे हरे घोरः' इति विश्वः । **ग्रहेः** ॥ 'ग्रहणी रुक्प्रवाहिका' इत्यमरः । **प्रथेः** ॥ 'प्रथमस्तु भवेदादौ प्रधानेऽपि च वाच्यवत्' इति मेदिनी । 'प्रथमचरम' इति सर्वनामत्वात्पक्षे जसः शी । प्रथमे प्रथमाः । **चरेश्च** ॥ चरमे । चरमाः । 'प्रथिचरिभ्याम्' इति सुवचम् । **मङ्गेरलच्** ॥ उखवखेत्यादिदण्डके मगिः पठ्यते । 'मङ्गला सितदूर्वायामुमायां पुंसि भूमिजे । नपुंसक तु कल्याणे सर्वार्थे रक्षणेऽपि च' इति मेदिनी । भावे ष्यञि माङ्गल्यम् । तत्र साधुरिति यत् । 'मङ्गल्यः स्यात्त्रायमाणाश्वत्थबिल्वमसूरके । स्त्रियां शम्यामधःपुष्पीमिसिशुक्लवचासु च । रोचनायामथो दध्नि क्लीबं शिवकरे त्रिषु' इति मेदिनी ॥

॥ इत्युणादिषु पञ्चमः पादः ॥

---

प्राचा तु कतिपयानामेवोणादीनामुपन्यासः कृतः । सोऽपि नैकप्रघट्टकतया । किन्तु विच्छिद्येति स्पष्टमेव । तत्रापि प्रमादं लेशतो दर्शयामः । 'भजो ण्विः' इति ण्विप्रकरणे, 'छन्दसि सहः, वहश्च' इत्युपन्यस्य, 'परौ व्रजेः षः पदान्ते' इति ण्विस्तेनैव षः । परिव्राट् इति तावत् प्राचो ग्रन्थः । तद्व्याख्यायां तत्पौलेण पञ्चपाद्युणादिसूत्रे इदं पठ्यते इत्युक्तम् । तन्न । क्विब्वचि

इति क्विब्दीर्घौ प्रक्रम्य, 'परौ व्रजेः' इति सूत्रस्य पाठात् । अस्मिन्नंशे पञ्चपादीदशपाद्योरेकवाक्यत्वात् । यदपि प्राचो ग्रन्थे क्वचित्पठ्यते चिणिति तदप्यपाणिनीयत्वादुपेक्ष्यम् । एतेन प्रघट्टकान्तरे स्रुद्रु परिव्रजां दीर्घश्चेति केचिदिति प्राचो ग्रन्थोऽपि प्रत्युक्तः । सूत्रारूढे सर्वसम्मते चार्थे केचिदित्युक्तेरप्रामाणिकत्वात् । यदपि धनर्तिचक्षिङ्वपिनपिजनियजेरुस् इति पठितं तदप्यनाकरम् । तथा हि । जनेरुसिः । अर्तिपृवपियजितनिधनितपिभ्यो नित् । एतेर्णिच्च । 'चक्षेः शिच्च' इति सर्वसम्मतः पाठः । 'वपूंषि तस्मै वपुषो वपुष्टरम्' इत्यादिमन्त्रेष्वाद्युदात्ततया अनुकूलश्च । वेदभाष्येऽप्येवमेव स्थितम् ॥ इति द्वितीये प्रमादाः ॥ तृतीयेऽपि 'स्तनिदूषिपुषिगदिमदिहृदिभ्यो णेरित्नुच्' इति प्राचा पठितम् । तत्र दूषिहृदी प्राचां वृत्तिकृतां ग्रन्थे क्वापि न पठितौ । दूषयित्नुः हृदयित्नुरिति प्रयोगोऽप्याकरे न दृष्टः । स्तनिहृषिपुषिमुदिगदिमदिभ्य इति हि पञ्चपादीपाठः । घुषिगन्धिमण्डिजनिगमिभ्य इति दशपाद्यामधिकमित्यन्यदेतत् । यदपि श्रुदक्षिस्पृहिगृहिहृदिजिभ्य आय्य इति पठित्वा दाराय्यः जयाय्य इति प्राचोक्तं तदपि न । दृजिग्रहणस्याकरविरुद्धत्वात् । यदपि जॄविशिभ्यां झच् गण्डिमण्डिजनिनन्दिभ्यश्चेत्युक्त्वा गण्डयन्तो जनयन्त इत्युदाहृतं प्राचा, यच्च गण्डयन्त इति प्रतीकमुपादाय मेघनादमिति व्याख्याय 'गडि वदनैकदेशे' इति व्याख्यातृभिर्विवृतं तदेतत्सर्वं प्रामादिकम् । तथा हि उणादिवृत्तिषु गडीति निरनुषङ्गं पठित्वा 'गड सेचने' इति विवृतम् । अयामन्त' इति सूत्रवृत्तिन्यासहरदत्तादिसकलग्रन्थेष्वेवम् । माधवग्रन्थेऽप्येवमेव । युक्तश्चैतत् । मेघ इति व्याख्यानं प्रति सेचनार्थस्यैवानुगुणत्वात् । जनेः पाठोऽप्यप्रामाणिकः । जिधातुं पठित्वा जयन्तः पाकशासनिरिति सर्वैर्निवृत्तत्वान् अप्रसिद्धत्वाच्च ॥ इति तृतीये प्राचः प्रमादाः ॥ यदपि कॄगॄस्तॄजागृभ्यः क्विन् । गीर्विः स्तृविरिति । तदपि लिपिभ्रमप्रयुक्तमेव । 'कॄ विक्षेपे, गॄ निगरणे, स्तॄञ् आच्छादने' इति प्राचो ग्रन्थं विवृण्वतामुक्तिरपि मूलाशुद्ध्यैव हेया । जॄशॄस्तॄजागृभ्यः क्विन् इति पाठः उणादिवृत्तिकृतां माधवादीनाञ्च सम्मतः । जीर्विः पशुः । शीर्विर्हिंस्रः । स्तीर्विरध्वर्युरिति च तत्तद्ग्रन्थेषूदाहृतम् । स्तॄ इत्यस्य दीर्घान्तत्वे एव हि, 'ऋत इद्धातोः' इतीत्त्वं लभ्यते, न तु ह्रस्वान्तत्वेऽपि । तस्माद्यथाकरमेव ग्रहीतुमुचितमिति दिक् । 'ग्लाज्याहात्वरिभ्यो निरित्यप्यनाकरम् । वीज्याज्वरिभ्यो निरिति पठित्वा सूत्रद्वयानन्तरं वह्निश्रीति सूत्रे ग्लाहात्वरिभ्यो नित्' इति सूत्रितत्वात् । तूर्णीरथः सदानव इत्यादावाद्युदात्तदर्शनाच्च । न च 'स्त्रियां क्तिन्' इत्यधिकारस्थं वार्तिकमेवेदं प्राचोदाहृतं न तूणादिस्थमिति वाच्यम् । एवमपि त्वरतेः पाठस्यानुचितत्वात् । न ह्यसौ वार्तिकेऽस्तीति दिक् । एवं संस्त्याने स्त्यायतेर्ड्रडिति प्राचोदाहृतमप्यनाकरम् । स्त्यायतेर्ड्रडित्येव सूत्रस्याकरे पञ्चपाद्यान्दशपाद्याञ्च उपलम्भात् । संस्त्याने स्त्यायतेर्ड्रड् स्त्री सूते सप्प्रसवे पुमान्' इति तु भाष्ये श्लोकपाठः । स एव माधवेनोपन्यस्तः । न तु सूत्रपाठस्य तथात्वं दृश्यते । एतद्ग्रन्थव्याख्यातॄणामपि प्रमादा ऊह्याः । यथा पाणिन्यादिमुनीनिति व्याचक्षाणैरुक्तम् । मनेरुच्चोपधाया इति । न ह्येवंविधं सूत्रं पञ्चपाद्यां दशपाद्यामप्यस्ति । अत इत्यनुवर्तमाने मनेरुच्चेति सूत्रितत्वात् इति दिक् ॥ इति चतुर्थे प्राचः प्रमादाः ॥

॥ श्रीरस्तु ॥

# ॥ अथ उत्तरकृदन्तप्रकरणम् ॥

## ३१६९ । उणादयो बहुलम् । (३-३-१)

एते वर्तमाने संज्ञायां च बहुलं स्युः । केचिदविहिता अप्यूह्याः ।

'संज्ञासु धातुरूपाणि प्रत्ययाश्च ततः परे ।
कार्याद्विद्यादनूबन्धमेतच्छास्त्रमुणादिषु' (भाष्यम्) ॥

## ३१७० । भूतेऽपि दृश्यन्ते । (३-३-२)

## ३१७१ । भविष्यति गम्यादयः । (३-३-३)

## ३१७२ । दाशगोघ्नौ संप्रदाने । (३-४-७३)

---

अथ उत्तरकृदन्तप्रक्रियाः निरूप्यन्ते—**उणादयो बहुलम्** ॥ तृतीयेऽध्याये तृतीयपादस्येदमादिमं सूत्रम् । **वर्तमाने संज्ञायाञ्चेति** ॥ 'वर्तमाने लट्' इत्यतः 'पुवस्संज्ञायाम्' इत्यतश्च तदनुवृत्तेरिति भावः । अत एव नञि हन एह च नञ्पूर्वाद्धन्तेरसिप्रत्यये प्रकृतेः एहादेशे व्युत्पन्न अनेहस्शब्दो वर्तमानकाल एवेत्युक्तं भाष्ये । संज्ञाशब्दश्चात्र रूढशब्दपरः । वैदिकानामपि शब्दानामुपलक्षणम् । अत एव 'नैगमरूढिभवं हि सुसाधु' इति वार्तिकम् । वैदिका रूढशब्दाश्चौणादिका इति भाष्यञ्च सङ्गच्छते । रूढाश्चैते उणादिप्रत्ययान्ताः अवयवार्थशून्या असन्तमप्यवयवार्थमाश्रित्य प्रायः कर्तरि व्युत्पाद्याः । उणादयो वेत्यनुक्त्वा बहुलग्रहणस्य प्रयोजनमाह । **केचिदविहिता अप्यूह्या इति** ॥ तदेवाह । **संज्ञास्वित्यादि** ॥ भाष्यस्थोऽयं श्लोकः । डित्थो डिवित्थ इत्यादौ धातुरूपाणि प्रत्ययाश्च यथासम्भवमूह्याः । गुणनिषेधादिकार्यवशात् अनूबन्धं विद्यात् । अनूबन्धमित्यत्र 'उपसर्गस्य घञ्यमनुष्ये' इति दीर्घः । एतत् उणादिषु शास्त्रं शासितव्यम् । 'कृवापाजि' इत्यादिसूत्राणि तु शाकटायनप्रणीतानि अस्यैव बहुलग्रहणस्य प्रपञ्च इत्यर्थः । **भूतेऽपि दृश्यन्ते** ॥ उणादय इति शेषः । वर्तमानाधिकारादिदं भूतग्रहणम् । दृशिः प्रयोगानुसारार्थः । इदं सूत्रं बहुलग्रहणवत्प्रपञ्चार्थम् । **भविष्यति गम्यादयः** ॥ भविष्यति काले गम्यादयश्शब्दाः णिनिप्रत्ययान्ताः निपात्यन्ते इत्यर्थः । ग्रामङ्गमीति निपातनान्नात्र णित्वम् गमिष्यन्नित्यर्थः । प्रस्थायी प्रस्थास्यमान इत्यर्थः ।

एतौ संप्रदाने कारके निपात्येते। दाशन्ति तस्मै दाशः। गां हन्ति तस्मै गोघ्नोऽतिथिः।

## ३१७३। भीमादयोऽपादाने। (३-४-७४)

भीमः। भीष्मः। प्रस्कन्दनः। प्ररक्षः। मूर्खः। खलतिः।

## ३१७४। ताभ्यामन्यत्रोणादयः। (३-४-७५)

संप्रदानापादानपरामर्शार्थं ताभ्यामिति। ततोऽसौ भवति तन्तुः। वृत्तं तदिति वर्त्म। चरितं तदिति चर्म।

## ३१७५। तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्। (३-३-१०)

क्रियार्थायां क्रियायामुपपदे भविष्यत्यर्थे धातोरेतौ स्तः। मान्तत्वादव्ययत्वम्। कृष्णं द्रष्टुं याति। कृष्णं दर्शको याति। अत्र वाऽसरूपेण तृजादयो न। पुनर्ण्वुलुक्तेः।

## ३१७६। समानकर्तृकेषु तुमुन्। (३-३-१५८)

अक्रियार्थोपपदार्थमेतत्। इच्छार्थेष्वेककर्तृकेषूपपदेषु धातोस्तुमुन्स्यात्। इच्छति भोक्तुम्। वष्टि वाञ्छति वा।

---

**तुमुन्ण्वुलौ** ॥ **क्रियार्थायामिति** ॥ क्रियोद्देश्यभूतक्रियावृत्तिधातौ उपपदे इत्यर्थः। भविष्यतीत्यनुवर्तते। तुमुनि नकार इत् मकारादुकार उच्चारणार्थः। ण्वुलि णलावितौ, वोरकादेशः। **मान्तत्वादिति** ॥ तुमुनो मान्तकृत्त्वात् 'कृन्मेजन्तः' इत्यव्ययत्वमित्यर्थः। ततश्च 'अव्ययकृतो भावे' इति वचनाद्भावे तुमुन्। ण्वुल् तु कर्तर्येव। **कृष्णं द्रष्टुमिति** ॥ 'न लोकाव्यय' इति न षष्ठी। कृष्णकर्मकं भविष्यद्दर्शनार्थं यानमित्यर्थः। अत्र यातीत्युपपदम्। अत्र तुमुन्प्रत्ययप्रकृत्यर्थस्य दर्शनस्य यानार्थत्वं तुमुना द्योत्यं वाच्यं वा। **कृष्णं दर्शको यातीति** ॥ कृष्णं द्रक्ष्यन् तदर्थं यातीत्यर्थः। 'अकेनोर्भविष्यदाधमर्ण्ययोः' इति न षष्ठी। ननु तुमुनो भावार्थकत्वे तद्विषये कर्तरि विहितानां तृजादीनामप्रवृत्तावपि ण्वुल्विषये कर्तरि तृजादयः कुतो न स्युः। न च विशेषविहितेनानेन ण्वुला तृजादयो बाध्यन्ते इति वाच्यम्। वासरूपविधिना तद्बाधस्य पाक्षिकत्वादित्यत आह। **अत्रेति** ॥ क्रियार्थक्रियोपपदे विषये वासरूपविधिना पक्षे प्राप्ताः ये तृजादयस्ते न भवन्तीत्यर्थः। आदिना 'नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः' इत्यादिसङ्ग्रहः। कुतोऽत्र तृजादयो नेत्यत आह। **पुनर्ण्वुलुक्तेरिति** ॥ 'ण्वुल् तृचौ' इति कालसामान्ये कर्तरि विहितो ण्वुल् क्रियार्थक्रियोपपदे विषये भवतीति पुनरिह ण्वुल्विधानात् तदितरतृजादयो न भवन्तीति विज्ञायते इति भावः। **समानकर्तृकेषु** ॥ 'तुमुन्ण्वुलौ क्रियायाम्' इत्येव सिद्धे किमर्थमिदमित्यत आह। **अक्रियार्थेति** ॥

## ३१७७ । शकधृषज्ञाग्लाघटरभलभक्रमसहार्हास्त्यर्थेषु तुमुन् । (३-४-६५)

एषूपपदेषु धातोस्तुमुन्स्यात् । शक्नोति भोक्तुम् । एवं धृष्णोतीत्यादौ । अर्थग्रहणमस्तिनैव संबध्यते । अनन्तरत्वात् । अस्ति भवति विद्यते वा भोक्तुम् ।

## ३१७८ । पर्याप्तिवचनेष्वलमर्थेषु । (३-४-६६)

पर्याप्तिः पूर्णता । तद्वाचिषु सामर्थ्यवचनेषूपपदेषु तुमुन्स्यात् । पर्याप्तो भोक्तुं प्रवीणः कुशलः पटुरित्यादि । 'पर्याप्तिवचनेषु' किम् । अलं भुक्त्वा । 'अलमर्थेषु' किम् । पर्याप्तं भुङ्क्ते । प्रभूततेह गम्यते न तु भोक्तुः सामर्थ्यम् ।

## ३१७९ । कालसमयवेलासु तुमुन् । (३-३-१६७)

पर्यायोपादानमर्थोपलक्षणार्थम् । कालार्थेषूपपदेषु तुमुन्स्यात् । कालः समयो वेला अनेहा वा भोक्तुम् । प्रैषादिग्रहणमिहानुवर्तते तेनेह न । 'भूतानि कालः पचतीति वार्ता' ।

---

**इच्छार्थेष्विति** ॥ 'इच्छार्थेषु लिङ्लोटौ' इत्यतस्तदनुवृत्तेरिति भावः । **इच्छति भोक्तुमिति** ॥ अत्र इच्छत्युपपदार्थस्य इच्छाया भोजनोद्देश्यत्वाभावेऽपि तुमुन् । इच्छार्थेष्वित्यर्थग्रहणस्य प्रयोजनमाह । **वष्टि वाञ्छति वेति** ॥ यद्यपि वशेः छान्दसेषु परिगणनं धातुपाठे । तथापि 'वष्टि भागुरिः' इति वार्तिकप्रयोगात् लोकेऽपि प्रयोग इति भावः । **शकधृष** ॥ 'शकधृषज्ञा' इति सूत्रमप्यक्रियोपपदार्थम् । **शक्नोति भोक्तुमिति** ॥ अत्र शक्तेर्भोजनोद्देश्यत्वाभावेऽपि तुमुन् । **एवमिति** ॥ धृष्णोति जानाति ग्लायति घटते आरभते लभते क्रमते उत्सहते अर्हति वा भोक्तुमित्युदाहार्यम् । **अस्तिनैवेति** ॥ न तु शकादिनेत्यर्थः । कुत इत्यत आह । **अनन्तरत्वादिति** ॥ सन्निहितत्वादित्यर्थः । **पर्याप्तिवचने** ॥ पर्याप्ति इत्यस्य विवरणम् । **पूर्णतेति** ॥ अलमर्थेष्वित्यस्य विवरणम् । **सामर्थ्यवचनेष्विति** ॥ **पर्याप्तो भोक्तुमिति** ॥ अन्यूनसामर्थ्यवानित्यर्थः । वचनग्रहणस्य फलमाह । **प्रवीण इत्यादि** ॥ **अलं भुक्त्वेति** ॥ अत्र अलमिति प्रतिषेधार्थकम् । नतु पर्याप्त्यर्थकमिति भावः । **पर्याप्तं भुङ्क्ते इति** ॥ बहुलमन्नं भुङ्क्ते इत्यर्थः । **प्रभूततेति** ॥ अन्नस्येति शेषः । **कालसमयवेलासु** ॥ अक्रियोपपदेऽपि प्रवृत्त्यर्थमिदम् । ननु कालपर्यायाणां कतिपयानां ग्रहणात्तदितरस्मिन् अनेह आदिशब्दे उपपदे न स्यादित्यत आह । **पर्यायोपादानमर्थोपलक्षणार्थमिति** ॥ **अनुवर्तते इति** ॥ प्रैषातिसर्गसूत्रादिति भावः । **भूतानीति** ॥ पृथिव्यादिपञ्चभूतानि कालः पचति उपचयापचयादिविकारं प्रापयति इति वार्ता लोकवृत्तान्त

## ३१८० । भाववचनाश्च । (३-३-११)

भाव इत्यधिकृत्य वक्ष्यमाणा घञादयः क्रियार्थायां क्रियायां भविष्यति स्युः । यागाय याति । 'तुमर्थात्' (सू ५८२) इति चतुर्थी ।

## ३१८१ । अण्कर्मणि च । (३-३-१२)

कर्मण्युपपदे क्रियार्थायां क्रियायां चाण्स्यात् । ण्वुलोऽपवादः । काण्डलावो व्रजति । परत्वादयं कादीन्बाधते । कम्बलदायो व्रजति ।

---

इत्यर्थः । **भाववचनाश्च** ॥ क्रियार्थायां क्रियायामिति भविष्यतीति चानुवर्तते । भावे चेत्येव सिद्धे वचनग्रहणस्य प्रयोजनमाह । **भाव इत्यधिकृत्येति** ॥ भावे इत्यधिकृत्य घञादयो विधास्यन्ते ये सामान्यतः ते क्रियार्थायां क्रियायां उपपदे भविष्यति काले विशेषविहितेनापि तुमुना समुच्चिता भवन्तीत्यर्थः । न च वाऽसरूपविधिना सिद्धमेतदिति शङ्क्यम् । 'क्तल्युट् तुमुन् खलर्थेषु वाऽसरूपविधिर्नास्ति' इत्युक्तेरिति भावः । ननु यागाय यातीत्यत्र यागस्य सम्प्रदानत्वाभावात् कथं चतुर्थी । नापि तादर्थ्यचतुर्थी तादर्थ्यस्य प्रत्ययेनैव लाभादित्यत आह । **तुमर्थादिति** ॥ **अण् कर्मणि च** ॥ चकारेण क्रियार्थायां क्रियायामिति समुच्चीयते । तदाह । **क्रियार्थायां क्रियायाञ्चेति** ॥ तथा च क्रियार्थायां क्रियायां कर्मणि चेत्युपपदद्वये सत्येवास्य प्रवृत्तिः नान्यतरस्मिन्निति भाष्ये स्पष्टम् । कर्त्रर्थकोऽयमण् । कर्तरि कृदित्यधिकारात् । अत्र 'ण्वुलतृचौ' इति बाधित्वा 'कर्मण्यण्' इति सामान्यविधिना अण् प्राप्तः तन्तावत्क्रियार्थायां क्रियायामुपपदे विशेषविहितस्तुमुन्ण्वुलाविति ण्वुल् बाधितुमुद्युङ्क्ते, पुनर्ण्वुल्विधिसामर्थ्येन वाऽसरूपविधेरत्राप्रवृत्तेरुक्तत्वात् । तमिमं ण्वुलम्बाधितुमयमण्विधिः । तदाह । **ण्वुलोऽपवाद इति** ॥ 'तुमुन्ण्वुलौ' इति विहितस्य ण्वुलोऽपवाद इत्यर्थः । एवञ्च ण्वुला बाधितस्य 'कर्मण्यण्' इत्यस्य अयमण्विधिः प्रतिप्रसवार्थ इति स्थितम् । ननु ण्वुला बाधितस्याणः प्रतिप्रसवेऽपि 'आतोऽनुपसर्गे' इति कप्रत्ययः कम्बलदायो व्रजतीत्यत्र दुर्निवारः । कप्रत्ययस्य कर्मण्यणपवादत्वात् सरूपत्वेन च वाऽसरूपविध्यप्रवृत्तेः । न चायं वैशेषिकोऽण्विधिः कप्रत्ययस्याप्यपवाद इति शङ्क्यम् । न ह्ययमपूर्वोऽण्विधिः । किन्तु लाघवात् 'कर्मण्यण्' इत्यणेवात्र प्रतिप्रसूयते । सच 'कर्मण्यण्' इत्यण् सामान्यविहितः 'आतोऽनुपसर्गे कः' इति वैशेषिकस्य नापवादः । प्रत्युत कप्रत्यय एव तदपवादः । अतः कम्बलदायो व्रजतीत्यत्र कर्मण्यणपवादं तुमुन्ण्वुलाविति ण्वुलम्बाधित्वा कप्रत्ययः स्यादित्यत आह । **परत्वादयं कादीन् बाधते इति** ॥ आदिना सामगो गुरुकुलं व्रजतीत्यादौ गापोष्टगित्यादिसङ्ग्रहः । अण्कर्मणि चे[illegible] त्यावर्तते । प्रतिप्रसवविधिरपूर्वविधिश्च । तत्र प्रतिप्रसवविधिना ण्वुला अणो बाधनिवृत्तिः । अपूर्वविधिविहितस्य त्वणः तृतीयपादीयस्य द्वितीयपादस्थकप्रत्ययापेक्षया परत्वात् कादिप्रत्यया अणा अनेन बाध्यन्ते इत्यर्थः । एतच्च भाष्ये स्पष्टम् । इत ऊर्ध्वम् 'लृट् शेषे च' इत्यादिसूत्रेषु क्रियार्थायां क्रियायामिति निवृत्तम् । भविष्यतीत्येवानुवर्तते इति

## ३१८२ । पदरुजविशस्पृशो घञ् । (३-३-१६)

भविष्यतीति निवृत्तम् । पद्यतेऽसौ पादः । रुजतीति रोगः । विशतीति वेशः । स्पृशतीति स्पर्शः ।

## ३१८३ । सृ स्थिरे । (३-३-१७)

'सृ' इति लुप्तविभक्तिकम् । स्थिरे कर्तरि सर्तेः घञ्स्यात् । सरति कालान्तरमिति सारः । 'व्याधिमत्स्यबलेषु चेति वाच्यम्' । (वा २१७४) अतीसारो व्याधिः । 'उपसर्गस्य' इति दीर्घः । अन्तर्भावितण्यर्थोऽत्र सरतिः । रुधिरादिकमतिशयेन सारयतीत्यर्थः । विसारो मत्स्यः । 'सारो बले दृढांशे च ।'

## ३१८४ । भावे । (३-३-१८)

सिद्धावस्थापन्ने धात्वर्थे वाच्ये धातोर्घञ्स्यात् । पाकः । पाकौ ।

## ३१८५ । स्फुरतिस्फुलत्योर्घञि । (६-१-४७)

अनयोरेच आत्वं स्याद्घञि । स्फारः । स्फालः । 'उपसर्गस्य घञि—' (सू १०४४) इति दीर्घः । परीहारः । 'इकः काशे' (सू १०४५) । काशे उत्तरपदे इगन्तस्यैव प्रादेर्दीर्घः स्यात् । नीकाशः अनूकाशः । 'इकः' किम् ।

---

बोध्यम् । **पदरुज** ॥ कर्तरीत्येव । **पद्यतेऽसाविति** ॥ करणस्याप्यत्र विवक्षातः कर्तृत्वम् । 'एरच्' इत्यतः प्राक् घञधिक्रियते । **सृ स्थिरे** ॥ **लुप्तविभक्तिकमिति** ॥ लुप्तपञ्चमीकमित्यर्थः । **स्थिरे कर्तरीति** ॥ स्थिरे इति कर्तृविशेषणम् । न तूपपदमिति भावः । **सर्तेरिति** ॥ भ्वादेर्जुहोत्यादेश्च ग्रहणम् , न तु जुहोत्यादेरेव, व्याख्यानात् । तदाह **सरति कालान्तरमिति सार इति** ॥ अर्धर्चादिपाठात् पुस्त्वं क्लीबत्वञ्च । अत एव च स्थिर इति नोपपदम् । **व्याधीति** ॥ वार्तिकमस्थिरार्थम् । **सारो बल इति** ॥ भाष्ये तु बले खदिरसार इत्युदाहृतम् । **भावे** ॥ भावो भावना क्रिया सा च धातुत्वेन सकलधातुवाच्येत्यादि मूलव्याख्यावसरे सर्वधातुवाच्यं क्रियासामान्यं तद्विशेषः पाकादिश्च धातुविशेषवाच्यः । तत्र क्रियासामान्यं भावशब्दार्थः । तिङ्वाच्यं लिङ्गसङ्ख्यान्वयायोग्यं साध्यावस्थापन्नम् । कृद्वाच्यन्तु लिङ्गसङ्ख्यान्वययोग्यं सिद्धावस्थापन्नम्, कृदभिहितो भावो द्रव्यवत्प्रकाशत इति भाष्यादिति प्रपञ्चितम् । तदाह । **सिद्धावस्थापन्न इत्यादिना** ॥ **घञिति** ॥ 'पदरुज' इत्यतस्तदनुवृत्तेरिति भावः । **इकः काशे** ॥ **उत्तरपदे इति** ॥ 'अलुगुत्तरपदे' इत्यतस्तदनुवृत्तेरिति भावः । 'ढ्रलोपे पूर्वस्य' इत्यतो दीर्घ इत्यनुवर्तते । 'उपसर्गस्य घञ्यमनुष्ये' इत्यतो घञीति । तेनैव सिद्धे नियमार्थमिदम् । तदाह । **इगन्तस्यैवेति** ॥ **दीर्घः स्यादिति** ॥ घञीति शेषः ।

